क्ष्वेडितास्फोटितरवैः सिंहनादरवैरपि ।
धनुःशब्दैश्च विविधैः कुरवः समपूजयन् ॥ १५

इति श्रीमहाभारते द्रोणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

# ५

संजय उवाच ।
रथस्थं पुरुषव्याघ्रं दृष्ट्वा कर्णमवस्थितम् ।
हृष्टो दुर्योधनो राजन्निदं वचनमब्रवीत् ॥ १
सनाथमिदमत्यर्थं भवता पालितं बलम् ।
मन्ये किं तु समर्थं यद्धितं तत्संप्रधार्यताम् ॥ २
कर्ण उवाच ।
ब्रूहि तत्पुरुषव्याघ्र त्वं हि प्राज्ञतमो नृप ।
यथा चार्थपतिः कृत्यं पश्यते न तथेतरः ॥ ३
ते स्म सर्वे तव वचः श्रोतुकामा नरेश्वर ।
नान्याय्यं हि भवान्वाक्यं ब्रूयादिति मतिर्मम ॥ ४
दुर्योधन उवाच ।
भीष्मः सेनाप्रणेतासीद्वयसा विक्रमेण च ।
श्रुतेन च सुसंपन्नः सर्वैर्योधगुणैस्तथा ॥ ५
तेनातियशसा कर्ण घ्नता शत्रुगणान्मम । C 7 139 B 7 5 K 7 5

---

Dn1 D4. 7 G1 M स्फोटितोत्कुष्टै°; D8 °तोत्कृष्टै, T G2-4 °ताक्रुष्टै; G5 °तोभ्रष्टै ❀ Ca. d क्ष्वेडित आवार (Ca नाराच)शब्द°, आस्फोटरव° कूर्पर(Ca दर्प)शब्द° । ❀ —d) Dn1 D4. 7 8 सह, D5 तथा (for अपि). —D4 om 15cd —e) Dn1 D7 जय, S बाण (for धनु) G4 °शब्देन (for °शब्दैश्च) —f) Ś1 समनादयन्, K1 2 D1 °वारयन्; Dn1 पूजयत्; T G3 °पूरयन् (for °पूजयन्)

Colophon om in D4 (Ś2 missing) —*Sub parvan* B1 द्रोणाभिषेक —*Day of Droṇa's Generalship* K2 प्रथमदिवसे —*Adhy name* K5 भीष्मवाक्य, D2 कर्णागमन, G1 M1 2 कर्णभीष्मसंवाद —*Adhy no* (figures, words or both) K3 4 B1 2 5 Dn1 D2 3 8 S 4 (as in text), Do1 5 —*Śloka no* Dn1 39

## 5

☞ This adhy is missing in Ś2 (cf v l 7 1 1)

1 D4 om. 1ab —b) B1 व्यवस्थित; D5 8 उप° (for अव°) —c) S राजा (for राजन्) —d) S कर्णं (G3 वीर) (for इदं)

2 a) Ś1 K1-3 D1 सनादम् (for °थम्) B3 4 Dn1 D1. 4 7 8 S (except T2) इव (for इदम्) K1 अत्याथ; K4 Dn2 D2 अथैव; B3 D1 5 मन्येहं, B4 मत्यर्थं, Dn1 D4 7 8 पश्यामि, S (except T2) मेत्यर्थं (for अत्यर्थं) —b) B4 भारतं (for भवता) Dn1 D4 7 8 भवता पालिता वय —c) K4 B2 (marg) 4 मन्ये किं नु, B5 मन्ये कर्ण, Do1 मन्ये कर्तुं, D1 2 अत्र किं नु, D4 7 8 मन्यसे किं (for मन्ये किं तु) B3 4 समर्थं च, T G2-5 तदेतद्वै (for समर्थं यद्) G1 M किं तु त्व मन्यसे मेध —d) K4 दत्त सन्, B1 कार्यं तत् (for हितं तत्) Ś1 K1 2 मे (for स) B3 4 T G2-5 यद्धित तत्प्र(B3 4 सम्प्र)धार्यतां

3 a) K4 B1 2 3 (marg) Do1 Dn2 D1 न; K5 G1 M1 2 त्वं, D5 वै; M3 4 त (for तत्) —b) S नृपु (for नृप) —c) Ś1 सार्थे भवान्, K1 चार्थ्ये नृपे°, K2 वीरश्चार्थे; Dn1 (marg) Ca अर्थपति°; D4 7 पथ्य यत°; D8 पथ्य नृपा° (for चार्थपति) Cd cites अनुपति° G5 कृच्छ्र (for कृत्यं) K3 यथा कृत्य चार्थप्राज्ञ —d) B Do1 वीक्ष्यते, D8 पश्यते K2 3 तथेतरत्

4 G1 2 4 5 M1-4 om 4 —a) K4 ते तु, D2 ते च; T1 G3 M5 वयं; T2 तस्मात् (for ते स) —b) Do1 जनेश्वरा°, D5 नरेश्वरा —c) K4 न चा न्याय्यं; D5 नान्यथा हि; T G3 M5 तन्नयाय्यं हि (for नान्याय्य हि)

5 b) T G2-4 M5 (*sup lin* as in text) यशसा (for वयसा) Ś1 K1 2 वयसा (Ś1 स्वयमा) क्रमणेन च —c) Ś1 चैव, K2 श्रेष्ठ; K3 5 B Do1 Dn2 D1-8

4

सुयुद्धेन दशाहानि पालितास्स्मो महात्मना ॥ ६
तस्मिन्नसुकरं कर्म कृतवत्यास्थिते दिवम् ।
कं नु सेनाप्रणेतारं मन्यसे तदनन्तरम् ॥ ७
न *ऋते नायकं सेना मुहूर्तमपि तिष्ठति ।
आहवेष्वाहवश्रेष्ठ नेतृहीनेव नौर्जले ॥ ८
यथा ह्यकर्णधारा नौ रथश्चासारथिर्यथा ।
द्रवेद्यथेष्टं तद्वत्स्यादृते सेनापतिं बलम् ॥ ९
स भवान्वीक्ष्य सर्वेषु मामकेषु महात्मसु ।
पश्य सेनापतिं युक्तमनु शांतनवादिह ॥ १०
यं हि सेनाप्रणेतारं भवान्वक्ष्यति संयुगे ।
तं वयं सहिताः सर्वे प्रकरिष्याम मारिष ॥ ११

कर्ण उवाच ।

सर्व एव महात्मान इमे पुरुषसत्तमाः ।
सेनापतित्वमर्हन्ति नात्र कार्या विचारणा ॥ १२
कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः ।
युक्ताः कृतज्ञा ह्रीमन्त आहवेष्वनिवर्तिनः ॥ १३

---

$_{5\ 6}$ चोप ( for च सु ) $K_4$ $Dn_1$ $D_{4\ 7\ 8}$ श्रुतेनैवो( $K_4$ $D_8$ °न चो )पपन्नश्च ( $K_4$ °श्चोसौ ) — $^d$) $G_1$ M यौध ( for योध ) $K_{1-3}$ $D_1$ $T_2$ -गणैस् ( for गुणैस् ) $K_5$ यथा, T $G_{3\ 4}$ युधि, $G_1$ M युत°, $G_2$ युतं ( for तथा )

6 $^a$) S ( except $G_5$ ) -रथिना ( for -यशसा ) — $^b$) $D_6$ हत्वा ( for घ्नता ) $Dn_1$ $D_{4\ 7\ 8}$ हता° शत्रुगणा मम — $^c$) $K_5$ सुबुद्धेन ( for सुयु° ) — $^d$) $K_5$ $D_2$ S ( except $G_5$ ) पालिता° स्म, $D_5$ °तानि

7 $^b$) $Ś_1$ कृते सत्यागते दिव°; $Dn_1$ कृत्वा संप्रस्थिते दिवं, $D_6$ कृतवत्याश्रिते दिवं — $^c$) $Ś_1$ $K_5$ $G_1$ किं नु, $K_1$ क तु, $K_4$ $Dn_1$ कर्तुं, $B_1$ कं त्वं; $B_{2\ 3}$ $D_1$ कर्णं, $Dn_2$ $D_{6\ 8}$ किं तु, $G_5$ त्वं तु ( for कं नु ) — $^d$) $D_{2\ 5}$ मन्यते

8 $^a$) $Ś_1$ $K_{2\ 3}$ $D_{2\ 3\ 5\ 8}$ न ह्यृते, $K_1$ न हृते; $K_4$ ऋते, $K_5$ न ह्यतो, B $Dc_1$ $Dn_1$ $D_6$ न विना, $Dn_2$ तदृते; $D_1$ न हृतं; S ऋते तु ( for न *ऋते ) $Dn_1$ सैन्यं ( for सेना ) $D_{4\ 7}$ न ह्यवैनायका ( $D_7$ °की ) सेना — $^b$) $Dn_2$ $M_{3\ 4}$ नापि तिष्ठते ( $Dn_2$ °ति ), $D_7$ उपतिष्ठति; T G $M_{1,2\ 5}$ नावतिष्ठते ( $G_{1,5}$ $M_{1\ 2}$ °ति ) ( for अपि तिष्ठति ) — T $G_{3-5}$ ins after $8^{ab}$ $G_1$ M subst for $8^{cd}$

39* आहवेषु विशेषेण भ्रष्टनेत्रेष्विवाञ्जनम् ।

[ $G_1$ $M_{3-5}$ आहवे तु ( for °वेषु ) $G_{3\ 4}$ हृष्ट ( for भ्रष्ट- ) ]

— $^c$) $Dn_2$ आहवे, $D_{4\ 6-8}$ आहवे च ( for °वेषु ) — $^d$) $Ś_1$ नेत्र , $B_{3\ 5}$ कर्णं , Dn $D_{3\ 4\ 6\ 7}$ नेत्रा ( for नेतृ ) $K_5$ इव ( for जले )

9 $^a$) $Ś_1$ यथा चाकर्णं , $G_4$ यथास्य कर्णं , $M_3$ तथा ह्य° — $^b$) $K_4$ $Dn_2$ $D_{3\ 6}$ वा ( for च ) — $^c$) $Ś_1$ $K_{1-3}$ $D_{4,8}$ भवेद्, $K_5$ प्राद्रवेद् ( hypermetric ), $D_7$ भयेद् ( for द्रवेद् ) — $^d$) $Ś_1$ $K_{1-3}$ $B_1$ $D_1$ T $G_{3-5}$ सेनापतेर्; $D_{4\ 7}$ °पतौ; $G_2$ °पतिर् ( for °पतिं ). — After 9, N ( $Ś_2$ missing ) ins

40* अदैशिको यथा सार्थं सर्वं पापं समर्छति ।
अनायका तथा सेना सर्वान्दोषान्समर्छति ।

[ ( L 1 ) $K_{4\ 5}$ $B_4$ $D_{1-5\ 7\ 8}$ Ca v अ( $K_5$ $D_8$ Cv आ ) देशिको, $D_6$ अदिशको, Cd आदे° $D_4$ सार्थ ( for °र्थं ) $K_4$ $D_{4\ 7}$ सर्वपाप, $K_5$ B $Dc_1$ सर्वं ( $K_5$ °र्वे ) कृच्छ्रं; $Dn_2$ $D_{3\ 5\ 6}$ सर्वापाय, $D_8$ सर्वान्दोषान् $K_{1\ 2}$ $B_{4\ 5}$ $D_{2\ 4\ 5\ 7}$ समृच्छति; $K_4$ तमर्छति; $K_5$ समेच्छति, $B_{2\ 3}$ समर्हति, $D_6$ स गच्छति, Cd समर्छति ( as above ) — $K_1$ $Dc_1$ om ( hapl ) line 2 — ( L 2 ) $K_5$ अनाथा हि ( for °यका ) $Ś_1$ ( marg as above ) सर्वं पाप ( for सर्वान्दोषान् ) $D_{5\ 6}$ समृच्छति ]

10 $^a$) $D_{4\ 7}$ समतां, Cd स भवान् ( as in text ) $D_5$ वीर ( for वीक्ष्य ) $K_5$ योधेषु ( for सर्वेषु ) — $^b$) $D_{2\ 5}$ सैनिकेषु ( for माम° ). — $^c$) T $G_{2-4}$ पश्यन् ( for पश्य ) $B_1$ शुद्धम् ( for युक्तम् ) — $^d$) Cd cites अनु ( as in text ) $K_5$ अनुशांतमिहादिश, S °शास्तु भवानिह

11 $^b$) $D_4$ सर्वान् ( for भवान् ). — $^c$) $B_1$ तद्, $Dc_1$ $M_3$ ते ( for तं ) $Ś_1$ संहता , $K_{1,2}$ सहिता ( for स° ) — $^d$) $K_5$ प्रकरिष्यामि; $G_5$ प्रहरिष्याम S नायक ( for मारिष ) $K_4$ B $Dc_1$ $Dn_2$ $D_8$ करिष्यामो नरोत्तम ( $Dn_2$ °म ).

12 $^b$) $D_3$ $M_{3\ 4}$ ( inf lin as in text ) $_5$ सर्वे ( for इमे ) — $^c$) $G_2$ इच्छति ( for अर्हन्ति )

13 $^a$) $K_4$ -सस्मरण ; $Dc_1$ $D_8$ -संनहन ( for -संहनन ) Cd cites सहनन $K_4$ S -ज्ञान ( for ज्ञानैर् )

युगपन्न तु ते शक्याः कर्तुं सर्वे पुरःसराः ।
एक एवात्र कर्तव्यो यस्मिन्वैशेषिका गुणाः ॥ १४
अन्योन्यस्पर्धिनां तेषां यद्येकं सत्करिष्यसि ।
शेषा विमनसो व्यक्तं न योत्स्यन्ते हि भारत ॥ १५
अयं तु सर्वयोधानामाचार्यः स्थविरो गुरुः ।
युक्तः सेनापतिः कर्तुं द्रोणः शस्त्रभृतां वरः ॥ १६
को हि तिष्ठति दुर्धर्षे द्रोणे ब्रह्मविदुत्तमे ।
सेनापतिः स्यादन्योऽस्माच्छुक्राङ्गिरसदर्शनात् ॥ १७
न च स ह्यस्ति ते योधः सर्वराजसु भारत ।
यो द्रोणं समरे यान्तं नानुयास्यति संयुगे ॥ १८
एष सेनाप्रणेतॄणामेष शस्त्रभृतामपि ।
एष बुद्धिमतां चैव श्रेष्ठो राजन्गुरुश्च ते ॥ १९
एवं दुर्योधनाचार्यमाशु सेनापतिं कुरु ।
जिगीषन्तोऽसुरान्संख्ये कार्त्तिकेयमिवामराः ॥ २०

संजय उवाच ।

कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।
सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् ॥ २१
वर्णश्रैष्ठ्यात्कुलोत्पत्त्या श्रुतेन वयसा धिया । C 7 139 B 7 6 K 7 6

---

— [b]) K4 बलबुद्धिपराक्रमै — [c]) M1 2 युक्ता, M5 (*inf lin*) इमे (for युक्ता) K3 B1 Dc1 (marg) G3. 5 श्रुतज्ञा (for कृ°) Ś1 K B3 Dn2 D1-8 6 धीमत (for ही°) — [d]) B1-3 Dc1 [अ]पलायिन° (for [अ]निवर्तिन°)

14 [a]) Dn1 D4 7 8 शक्य ते (for ते शक्या) — [b]) K4 सेना (for सर्वे) — [c]) K4 B Dc1 Dn2 D1-3 एव तु, D8 एवानु (for एवात्र) K5 D8 यो ऽस्म्या (for कर्तव्यो)

15 [a]) K4 D5 -स्पर्धिनस् Dn1 D4 7 एषां, D1 शेषां; G2 राज्ञां (for तेषां). D8 मन्ये न स्पर्धिनामेषां — [b]) K4 यद्येकयं; B5 Dc1 यद्येवं, G2 क (for °कं) Ś1 K4 5 Dc1 D5 सत्क(K4 स क)रिष्यति; D1 2 यं करिष्यसि; D8 संक°; S स्व क° — [c]) D2 5 भूत्वा, S [s]सर्थं; Cd व्यक्तं (as in text) — [d]) B1 G5 योत्स्यति हि; B3 4 °ति च; D2 5 T G1-4 M °तीह K4 B5 Dc1 Dn2 D1. 8 न योत्स्यसि (Dc1 D1 °ते) हितावह; K5 °ति हिते तव; Dn1 तथा पश्यति भारत; D4 7 8 न योत्स्यति हि भावत°

16 [a]) K4 B3 5 Dn2 D1. 8 च; K5 न° (for तु) K4 -योधस्य; T G2-5 सैन्यानाम्; G1 M -यौधानाम् — K4 om 16[b]-17[c] — [c]) K3 युक्तं (for युक्त) B4 Dn1 D6 सेनापतिं कर्तुं; S पतित्वाय — [d]) B1-4 Dc1 सर्वं (for द्रोण°)

17 K4 om 17[abc] (cf v 1. 16) G4 om 17[a]-19[b] — [a]) Dn2 D3 दुर्धर्षो; S (G4 om) समामे — [b]) Ś1 शस्त्रविदुत्तमे; K5 शस्त्रभृतां वरे; B1 ब्रह्मर्षिसत्तमे; Dc1 °विदुत्तम°, Dn2 च पुरुषोत्तमे, D7 ब्रह्मविदुस्वान्मे, S (G4 om) ब्राह्मण(M1 ब्रह्माङ)पुङ्गवे — [c]) S (G4 om) इहान्यो(G2 इवान्य; G5 इहोन्यो)स्मात् (for स्यादन्यो) B1-5 Dc1 सेनापतित्वयोग्योन्य

18 G1 2 4 5 M om 18 (for G4, cf. v l 17) B1 om 18[ab] — [a]) Ś1 योधयते; K1 स ह्यस्तितो, B1 3 5 Dc1 Dn2 D1 2 सोप्यस्ति ते (Dc1 नो) (for स ह्यस्ति ते) B3 न च सोप्यस्ति योधोन्य°, D4 7 8 न च ते ह्यस्ति (D4 °ति) योधोत्र, T न च सो ह्यस्ति योधस्ते, G3 न च सो ह्यस्ति सोय (*sic*) — [c]) K4 B Dc1 Dn2 D1-3 द्रोणं य (by transp) T G3 समर (for °रे) D5 यो द्रोणे समरे याते — [d]) K3 B3-5 Dc1 D1 T G3 अनुयास्यति; D5 नाति°; D7 वानु° (for नानु°). K1-3 D1 दृसि(K1 °शि)त (for संयुगे)

19 G4 om 19[ab] (cf v l 17) — [a]) G3 येन (for एष) — [b]) K4 च वै; K5 D5 3 S (G4 om) वर° (for अपि) — [c]) K4 B2 T G1 3 5 M श्रेष्ठ° (for चैव) G2 एष सर्वस्यश्रेष्ठो. — [d]) K4 एष (for श्रेष्ठो) B1 तव (for च ते) S ब्राह्मण स्थविरो गुरु°

20 [a]) K1 B3 8 Dc1 Dn D1 2 6 8 S एन (for एव) — [c]) K4 पुर° (for ऽसुरान्) K5 B5 सर्वे; B1-4 D6 सर्वान्, G1 4 M1-4 सखे (for संख्ये) — After 20, B1 Dn2 ins an addl colophon [*Sub parvan* B1 द्रोणाभिषेक — *Adhy no* (figures only) B1 Dn2 5 ]

21 Ś1 K1-3 5 Dn1 D1 4 5 7 8 T G3 4 om. the ref — [a]) B1-3 Dc1 तु वच° (for वचनं) — [b]) K1 4 तथा (for तदा) — [c]) K1 2 5 D1 4 6-8 मध्यगतो (K5 °ते), D8 मध्ये गतो

22 K4 om 22 Before 22, N (Ś1 missing, K4 om) G5 ins दुर्योधन उ° (resp दुर्योधन°) — [a]) Ś1 K1-8 D1. 5 श्रेष्ठ; D2 श्रेष्ठ°; G3 -श्रेष्ठ्यात् (for

वीर्याद्दाक्ष्याददधृष्यत्वादर्थज्ञानान्नयाज्जयात् ॥ २२
तपसा च कृतज्ञत्वाद्वृद्धः सर्वगुणैरपि ।
युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते ॥ २३
स भवान्पातु नः सर्वान्विबुधानिव वासवः ।
भवन्नेत्राः पराञ्जेतुमिच्छामो द्विजसत्तम ॥ २४
रुद्राणामिव कापाली वसूनामिव पावकः ।
कुबेर इव यक्षाणां मरुतामिव वासवः ॥ २५
वसिष्ठ इव विप्राणां तेजसामिव भास्करः ।

पितॄणामिव धर्मोऽथ आदित्यानामिवाम्बुराट् ॥ २६
नक्षत्राणामिव शशी दितिजानामिवोशनाः ।
श्रेष्ठः सेनाप्रणेतॄणां स नः सेनापतिर्भव ॥ २७
अक्षौहिण्यो दशैका च वशगाः सन्तु तेऽनघ ।
ताभिः शत्रून्प्रतिव्यूह्य जहीन्द्रो दानवानिव ॥ २८
प्रयातु नो भवानग्रे देवानामिव पावकिः ।
अनुयास्यामहे त्वाजौ सौरभेया इवर्षभम् ॥ २९
उग्रधन्वा महेष्वासो दिव्यं विस्फारयन्धनुः ।

---

-श्रे॰ ) Dn1 वर्णश्रेष्ठा कुलोत्पन्ना — $^{b}$ ) D6 G1 M ( M5 *inf lin* as in text ) तपसा, Ca d वयसा ( as in text ) — $^{c}$ ) D5 धैर्याद्दाक्ष्याद् ( for वीर्याद्दाक्ष्याद् ) — $^{d}$ ) B6 चार्थ ( for अर्थ ) B1 Dn3 नयार्जवात्; B4 °दपि; T G2-4 °न्वयात् ( for °ज्जयात् ) G5 अर्थज्ञाना थवान्वयात्.

23 $^{a}$ ) K5 व्यवसायात्; D6 S वयसा च ( for तप° ). — $^{b}$ ) G1 M अर्हः; Cd वृन्द° ( as in text ) D7 अपि, T G3-5 M3 5 ( *sup lin* ) तथा, G1 M1, 2, 4 5 सदा, G2 शुभैः ( for अपि ) — $^{c}$ ) K1 G2 भवान्स नो, K4 भवसि ना; K5 भवेत्स मे, Dn1 भवान्समो, Dn2 G4 [s]भवत्स नो; D4 7 8 भवान्स मे ( for भवत्समो ) Ś1 K2 3 युक्तो भवान्गुरुर्युद्धे — $^{d}$ ) Ś1 K2 3 विशिष्टे( Ś1 °शेषे )षु विशिष्यते

24 After 24$^{ab}$, D6 reads for the first time, 27$^{a}$, repeating it in its proper place — K1 om ( hapl ) 24$^{c}$-25$^{a}$ K4 om 24$^{c}$-25$^{b}$ — $^{c}$ ) B3 सव प्रीता, B4 Cdp भवत्प्रीता, D8 त्वया नेत्रा; D6 भया क्षेता, G5 भवान्नता; Cd भवन्नेत्रा ( as in text ) Dn2 D5 पराजेतुम् — $^{d}$ ) Dn1 D8 G1 M1 2 इच्छामि, D4 7 °म K2 3 D1 -पुंगव ( for -सत्तम )

25 K1 om 25, K4 om 25$^{ab}$ ( cf v l 24 ) — $^{a}$ ) Ś1 K2 3 D1 न शशुर्; K5 नो रुद्रो; Dn1 D4 7 8 वै शशुर्; Dn2 T2 G2-5 M1 2 कापालिर् ( for °ली ) Cd cites कपाळी ( sic ), Cdp रुद्र D2 5 रुद्राणा प्रवरो रुद्रो — $^{b}$ ) D8 om ( hapl. ) from पावक up to मिव ( in 26$^{b}$ )

26 D8 om up to मिव ( of v l 25 ) — $^{a}$ ) K1 2 D1 2 5 6 G5 वशिष्ट Ś1 ( orig ) योगीना, Ś1 ( marg. ) K1 2 D1 चर्षीणा ( for विप्राणां ). — $^{c}$ ) Ś1 K1-3 5 B2-5 Dc1 Dn1 D1-5 7, 8 धर्मेन्द्रो; B1 धर्मज्ञो; Dn2 धर्मेष्टो; G4 धर्मो वा; G5 धर्मोयं ( for धर्मोऽथ ) K4 भुजगानां यथा शेष°, D6 य° पितॄणां राजेन्द्रो ( submetric ) — $^{d}$ ) G4 [म]थादित्यानाम्; G5 ह्या° ( for आ° ) N ( Ś1 missing ) यादसा( K4 पितॄणा, D6 जादसा )मिव चां ( K3 Dn2 वा )बुराट्

27 D6 reads 27$^{a}$ for the first time after 24$^{ab}$. — $^{b}$ ) S वीरुधा( G8 वरूथा )मशुमानिव — After 27$^{ab}$, S Cv ins

41* सर्वेषामेव लोकाना विश्वस्य च यथा क्षय ।
विश्वोत्पत्तिस्थितिलये श्रेष्ठो नारायण प्रभु ।

[ ( L 1 ) G1 M अपि; G5 इव, Cv इह ( for एव ) T G2 विराट् ( for क्षय ) — ( L 2 ) G3, 4 -स्थितिलय; G5 स्थिति शेप; Cv स्थितिश्चैव. G1 M विश्वो विश्वपति स्त्वीश° ( for the prior half ) ]

— $^{c}$ ) S एव ( for श्रेष्ठ° ) — $^{d}$ ) Dn1 S मम ( for स न )

28 $^{a}$ ) S ( G5 partly damaged ) एकादशेमा वशगा. — $^{b}$ ) Ś1 सेनागा ( for वशगा ) B5 सदा ( for ऽनघ ). S ( G5 partly damaged ) अक्षो( G1 3 M3 5 °क्षौ )हिण्य स्त्वानघ — $^{c}$ ) Ś1 भ्रातृ, K1-3 याहि; K5 ताम्र° ( for ताभि. ) D2 5 शत्रून्प्रतिव्यूह्य भवान् — $^{d}$ ) T G2-5 दितिजान् ( for दानवान् )

29 $^{a}$ ) Dn1 अस्माक ( for प्रयातु ). Dn1 T1 च; T2 G M स ( for नो ). — $^{c}$ ) K5 योत्स्यामहे ( for यास्या° ) B1-4 Dc1 वयं त्वामनुयास्याम — $^{d}$ ) Cd वृषम् ( for ऋषभम् )

30 K4 om 30$^{ab}$ — $^{a}$ ) K4 उग्रधन्वानमग्रेषु — $^{b}$ ) Some S MSS विष्फारयन् K5 धुरिस्त्वननादिता, B1-4 Dc1 दिव्यास्त्रग्रामपारग — $^{c}$ ) D2 4 7 8 नो ( for नो ) K3 B Dc1 D1 अग्रेभव त्वां तु ( B1 [ marg ] °सर त्वां तु; B5 °भवंतं त्वां, Dc1 °भवतु त्वां ) इष्ट्वा;

अग्रे भवन्तं दृष्ट्वा नो नार्जुनः प्रसहिष्यते ॥ ३०
ध्रुवं युधिष्ठिरं संख्ये सानुबन्धं सबान्धवम् ।
जेष्यामि पुरुषव्याघ्र भवान्सेनापतिर्यदि ॥ ३१
एवमुक्ते ततो द्रोणे जयेत्यूचुर्नराधिपाः ।
सिंहनादेन महता हर्षयन्तस्तवात्मजम् ॥ ३२
सैनिकाश्च मुदा युक्ता वर्धयन्ति द्विजोत्तमम् ।
दुर्योधनं पुरस्कृत्य प्रार्थयन्तो महद्यशः ॥ ३३

द्रोण उवाच ।
वेदं षडङ्गं वेदाहमर्थविद्यां च मानवीम् ।
त्रैयम्बकमथेष्वस्त्रमस्त्राणि विविधानि च ॥ ३४
ये चाप्युक्ता मयि गुणा भवद्भिर्जयकाङ्क्षिभिः ।
चिकीर्षुस्तानहं सत्यान्योधयिष्यामि पाण्डवान् ॥ ३५
संजय उवाच ।
स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः । C 7 173 B 7 75 K 7 75

---

K5 अग्रे प्रयांतु नो दृष्ट्वा, S दृष्ट्वा भवत संग्रामे — d) D4 7 8 मार्जुन (for ना°) Ś1 प्रहसिष्यति, K1-3 D1. 4 7 8 प्रसहिष्यति; K4 5 B Dc1 Dn D3 5 6 6 महरिष्यति, M2 प्रहनिष्यते (for प्रसहिष्यते)

31 a) Dn2 एव (for ध्रुव) G1 4 M (except M4) सख्ये. — b) S (except G5) ससैन्य सहबांधव — c) S जेतासि (G1 M3-5 °स्म) (for जेष्यामि) K4 D8 जेष्यामि भरतश्रेष्ठ (D8 °ष्ठं)

32 Before 32, K4 5 (sup lin.) B Dc1 Dn2 D1-8 ins संजय उ° — a) Dc1 T M3-5 तदा (for ततो) K4 5 B Dc1 Dn2 D1. 3 5 6 द्रोण (for द्रोणे) — b) B5 धराधिपाः; D6 नरर्षभाः. — c) B2-4 Dc1 D5 S सहृष्टा (for महता) — d) B2-4 Dn1 D4 7 8 तवात्मजान्, T G3. 4 तु पार्थिव

33 a) T G3 4 वेगिताश्च (for सैनिकाश्च) — b) B2-4 Dc1 वर्धयित्वा, S °यंतो — Ś1 K1-3 5 B5 D1 2 5 6 om 33cd — d) K4 प्रथ° (for प्रार्थ°) B2-4 Dc1 युद्धायैव मनो दधे — K4 B4 5 Dn2 ins after 33 (B5 after 43*) an addl. colophon [*Sub parvan* B5 द्रोणाभिषेक — *Adhy no* K4 B5 5]

— After 33, Dn1 D7 8 ins

42* मेनिरे निहितान्पार्थानात्मनश्चोत्तमं यशः ।

Dn1 D7 8 cont Ś1 K1-3 5 B5 D1. 2 5 6 ins after 33ab B1. 6 (marg) D3. 4 after 33

43* दुर्योधनं तदा राजन्द्रोणो वचनमब्रवीत् ।

[ B1 3 5 D2 3 5 ततो (for तदा) D8 transp राजन् and द्रोणो K5 इद (for द्रोणो) ]

34 B4 D2 5 om the ref — a) S (except G1) वेदा(G3 देवा)न्षडंगान् D8 वेत्स्याहम्; G4 वेदांगम् (for वेदाहम्) — b) K4 अर्थं; B5 अनु; D3 6 अथ (for अर्थ) Ś1 भारत, K1-3 मानद, B5 मानुषीं (for मानवीम्) D4 7 8 आथर्वं चैव मानव — c) Ś1 K3 D1 त्रैयंबक, K5 त्र्यंबकं च Ś1 महेष्वेव; K1-3 D1 म(K3 D1 म)हेष्वस्त्रम्, K4 अथो शार्ङ्गं, K5 महेष्वासम्; Dc1 अथायस्त्र — d) Ś1 K4 B Dc1 Dn2 D3 6 G1 (?) शस्त्राणि (for अ°) T G2-4 [अ]न्यानि यानि (for विविधानि)

35 a) K1 वचोप्युक्ता, K4 Dn2 D3 ये वा°; D4 ये ना° — c) G (except G2) M चिकीर्षस (for °र्षुस) B2 5 G1 M1 2 सर्वान्; B4 समान्; D5 सत्य (for सत्यान्) — d) D4 7 8 पांडव (for °वान्) — After 35, N (Ś1 missing) ins

44* पार्षत तु रणे राजन्न हनिष्ये कथंचन ।
स हि सृष्टो वधार्थाय ममैव पुरुषर्षभ ।
योधयिष्ये तु सैन्यानि नाशयन्सर्वसोमकान् ।
न च मां पाण्डवा युद्धे योधयिष्यन्ति हर्षिता ।

[ (L. 1) Dn2 om from पार्षत up to तु (in line 3) B5 च (for तु) K4 om from the post half of line 1 up to the prior half of line 4 K5 B2 कदाचन (for कथं°) B1 3 4 Dc1 न हनिष्यामि कर्हिचित्; Dn1 हनिष्येह कथचन (for the post. half) — (L 2) D3. 6 ममैष (for °व) K3 D2 पुरुषर्षभ°, B2-4 Dc1 नृपपुंगव; D7 8 भरत(D8 °वते)र्षभ (for पुरुष°) — (L 3) K5 corrupt; B1 5 D3 8 योधयिष्यामि (for °यिष्ये तु) K3 om post half of line 3 and prior half of line 4 Ś1 K1. 3. 5 D1 -सैनिकान् (for -सोमकान्) — (L 4) K5 मे (for मां) ]

36 a) S एवमुक्तोऽभ्य(G1 M1-3 5 °कैस्य; G5 °क्तो ह्य)नुज्ञातश्च — b) K1-3 S तदा (for तत°) — c) Dn1 D4 7 8 श्रीमांस् (for द्रोण) D7 T G3-5 राजा (for राजन्) K4 om from राजन् up to वादित्रघो (in 38a)

द्रोणं तव सुतो राजन्विधिदृष्टेन कर्मणा ॥ ३६
अथाभिषिषिचुर्द्रोणं दुर्योधनमुखा नृपाः ।
सेनापत्ये यथा स्कन्दं पुरा शक्रमुखाः सुराः ॥ ३७
ततो वादित्रघोषेण सह पुंसां महास्वनैः ।
प्रादुरासीत्कृते द्रोणे हर्षः सेनापतौ तदा ॥ ३८
ततः पुण्याहघोषेण स्वस्तिवादस्वनेन च ।
संस्तवैर्गीतशब्दैश्च सूतमागधबन्दिनाम् ॥ ३९
जयशब्दैर्द्विजाग्र्याणां सुभगानर्तितैस्तथा ।
सत्कृत्य विधिवद्द्रोणं जितान्मन्यन्त पाण्डवान् ॥ ४०

इति श्रीमहाभारते द्रोणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

# ६

संजय उवाच ।
सेनापत्यं तु संप्राप्य भारद्वाजो महारथः ।
युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह ॥ १
सैन्धवश्च कलिङ्गश्च विकर्णश्च तवात्मजः ।

---

37 K4 om 37 (cf v 1 36) — a) B1 T G2-5 तथा (for अथ) Ś1 शिषिचुर्; D4 7 8 -सि° (for -षि°) — b) B4 (also) D6 -पुरोगमा, D4 7 8 -मुखा रथा (for मुखा नृपा) — After 37ab, S ins

45* स्वस्तिवादरवैश्चान्यै श्लक्ष्णै पुण्यैर्मनोरमै ।

— c) B D1, 7 सैनापत्ये, T G M1 2 सेनापति D6 पुरा स्कंदो, G3 5 तदा (G5 °था) स्कंद — d) D4 7 8 transp पुरा and सुराः G5 यथा (for पुरा). D6 यथा च सुरसत्तमै

38 K4 om. up to घो (cf v 1 36) Dn1 om 38 D2 5 om. 38ab — a) G5 तथा (for ततो) — D3 om. (hapl) 38b-39a — b) K4 B1 5 Dn2 D8 शंखानां च, B2-4 Dc1 युयुत्सुना (for सह पुंसां) B1 2 4 Dc1 महास्वन, B3 °स्वनां; S °स्मनां (for °स्वनै). — c) B2 3 Dc1 अथ; B1 अथो; T1 G1 3-5 M1 2 ततो; T2 G2 M3-5 तदा (for कृते) D2 5 महास्वन प्रादुरासीद् — d) B2-4 Dc1 S कृते; D2 5 द्रोणे (for हर्ष°) B2-4 Dc1 नृप; S रव° (for तदा)

39 D6 om 39a (cf v 1 38) — b) Ś1 स्वनिनाद, D4 7 8 स्वस्तिपाच; S साशीर्वाद (for स्वस्तिवाद) — Dn1 D4 7 8 transp 39cd and 40ab — c) K4 Dn2 D3 6 वीर, K5 नृत्त (for गीत). K4 -नादैश्च, B1 5 -वाद्यैश्च (for -शब्दैश्च). S सूतमागधवंदीनां — d) K5 वंदिभि° (for °नाम्) S सस्तवैर्गी(G4 °र्जि)तमगलै°

40 Dn1 D4 7 8 transp 39cd and 40ab — a) K4 D7 द्विजाग्राणां, B1 **तीर्ना, S मनोज्ञैश्च (for द्विजाग्र्याणां). — b) Ca, d cite सुभगा° (as in text), Cdp सुभटा° B1 D1 3, 4, 7 8 तदा, Dn1 तत (for तथा) K4 सुभगैर्नर्तवैस्तथा, S नर्त(G5 नृत्त)नैस्तत्र त (G1 M1 2 स-) प्रति — After 40ab, K5 D2 5 6 ins

46* प्रादुरासीन्महाशब्द कृते सेनापतौ द्विजे ।
सेनापत्ये महात्मानं सर्वे संहृष्टमानसा ।

[ (L 1) K5 महान् (for महा) — (L 2) K5 D2 सैनापत्ये K5 ते (for स) D6 सर्वशत्रुनिबर्हण (for the post half) ]

— c) K5 Dc1 Dn1 D4 7 8 सत्कृत्य (for सत्कृत्य) B1-4 Dc1 D1 विधिना (for °वद्). — d) N (Ś1 missing) मेनिरे पांडवाञ्जितान्

Colophon om in K3 (Ś1 missing) — *Sub-parvan* K5 B1 D3 द्रोणाभिषेक — *Day of Droṇa's Generalship* K2 प्रथमे दिवसे — *Adhy name* K4 Dn सेनापत्या(K4 °ति)भिषेकः, D3 सेनाभिषेक°, D5 द्रोणसेनापतिनिरूपण; G1 M1 2 सेनापतिकरण — *Adhy no* (figures, words or both) B1 2 Dn1 D2 3 S 5 (as in text), B5 6, Dc1 7 — *Śloka no* Dc1 42, Dn1 43.

# 6

☞ This adhy is missing in Ś1 (cf v 1 7 1 1)

1 B1 om the ref G3 ins श्रीकृष्णाय नम before the ref D1 ins ॐ after the ref K1 om 1 — a) B (except B1) G3 सैनापत्य, Cd सेनापत्य (as in text) Dn1 D4 7 सत प्राप्य; D3 corrupt, G1 M तु सप्राप्तो; Cd सुसप्राप्य (for तु संप्राप्य). — b)

दक्षिणं पार्श्वमास्थाय समतिष्ठन्त दंशिताः ॥ २
प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः ।
ययौ गान्धारकैः सार्धं विमलप्रासयोधिभिः ॥ ३
कृपश्च कृतवर्मा च चित्रसेनो विविंशतिः ।
दुःशासनमुखा यत्ताः सव्यं पार्श्वमपालयन् ॥ ४
तेषां प्रपक्षाः काम्बोजाः सुदक्षिणपुरःसराः ।
ययुरश्वैर्महावेगैः शकाश्च यवनैः सह ॥ ५
मद्रास्त्रिगर्ताः साम्बष्ठाः प्रतीच्योदीच्यवासिनः ।
शिबयः शूरसेनाश्च शूद्राश्च मलदैः सह ॥ ६
सौवीराः कितवाः प्राच्या दाक्षिणात्याश्च सर्वशः ।
तवात्मजं पुरस्कृत्य सूतपुत्रस्य पृष्ठतः ॥ ७
हर्षयन्सर्वसैन्यानि बलेषु बलमादधत् ।
ययौ वैकर्तनः कर्णः प्रमुखे सर्वधन्विनाम् ॥ ८
तस्य दीप्तो महाकायः स्वान्यनीकानि हर्षयन् ।
हस्तिकक्ष्यामहाकेतुर्बभौ सूर्यसमद्युतिः ॥ ९
न भीष्मव्यसनं कश्चिद्दृष्ट्वा कर्णममन्यत ।
विशोकाश्चाभवन्सर्वे राजानः कुरुभिः सह ॥ १०
हृष्टाश्च बहवो योधास्तत्राजल्पन्त संगताः ।
न हि कर्णं रणे दृष्ट्वा युधि स्थास्यन्ति पाण्डवाः ॥ ११
कर्णो हि समरे शक्तो जेतुं देवान्सवासवान् । C 7 18 B 7 7 K 7 7

---

D7 G5 भरद्वाजो — [e]) D6 सर्वं (for व्यूह्य) — [d]) Ś1 K1-3 D1 6 सूत (for सह)

2 [a]) K1 4 5 D5 6 सैंधवा(D6 °वै)श्च कालिंगा(K4 °ग, D6 °गै)श्च — [e]) S पक्षम् (for पार्श्वम्) After पार्श्वं, Dn2 reads for the first time the portion of the text from कृतवर्मा (in 4[a]) up to प्रपक्षा (in 5[a]), repeating the same in its proper place — [d]) K3 G1 3-5 M दंसिता; K4 Dn2 सैनिका (for दंशिता)

3 K4 reads 3 twice — [a]) G3 4 प्रपक्षं, Cd अपक्ष, Ca v प्र° (as in text) — [b]) G2 प्रवरैश्च महारथै° — Ś1 K1-3 D1 5 om (hapl) 3[cd] — [c]) K4 युक्तो (for ययौ) — [d]) G5 विम*; M3 4 विमल°

4 For the repetition in Dn2, of v l 2 — [c]) K4 योधा (for यत्ता) — [d]) Dn1 M3 4 सव्य (for सव्यं) K4 B1 5 Dn2 S पक्षम् (for पार्श्वम्)

5 For the repetition in Dn2, of v l 2 — [a]) Ś1 Dn1 D3-5 7 8 प्रपक्ष° Ś1 D1 कांभोजा°; K4 lacuna, D3 कांबोज T G2 तेषां पक्ष° प्रपक्षश्च, G3-5 तेषां पक्षप्रपक्षाश्च — [b]) K5 B5 पुरोगमा° (for पुरःसरा°)

6 K4 om (hapl.) 6 — [a]) S अंगास् (for मद्रास्) — [b]) B Dc1 मालवा° (for वासिन°) — [c]) Ś1 B Dn2 D3 T G2 शिवय°, K1 शिवश्च; K2 3 शिवा(K3 °बा)श्च (for शिवय°) K5 सूरसेनाश्चा°; D5 7 8 सूरसेनाश्च — [d]) B3 G1 M मद्राश्च (for शूद्राश्च) K1 मलवै°; K5 D2 3 दरदै°; B5 मानवै°; D3 6 मालवै, D4 मलै (submetric), D7 मलयै (for मलदै) B1 शूद्राश्च नरपुंगवा, T G3-5 मलदै (G3 °दा) सहसैंधवा (G3 5 °वै)

7 [d]) Ś1 K1 3 D1 सूतपुत्र च; Dc1 Dn1 D4 7 8 °पुत्रश्च (for °पुत्रस्य) B1-4 पृष्ठगा°; Dc1 पृष्ठग (for °त°)

8 Dn2 reads 8[ab] twice — [a]) K3 4 B3 4 Dn2 (first time) D3 हर्षयत्°स्वसैन्यानि; Dc1 °यतश्च सै°; Dn2 (second time) प्रवर° सर्वयोधाना — [b]) K4 Dn2 (second time) D3 आदधु°, D5 आदराद्, D6 आद धात्, T1 आददन्; T2 G3 4 आदधन् (for °धत्) B3 स्ववीर्यरणमादधत्, Dn2 (first time) प्रायात्तव सुतै सह — [c]) Dn1 श्रुत्वा (for कर्ण°) — [d]) D4 7, 8 प्रमुखै; G4 प्रमुख° (for प्रमुखे)

9 [a]) G3 4 M3-5 तस्य दीप्ता महाकाया — [b]) D5 सानि (for स्वानि) — [c]) K4 5 Dc1 Dn हस्तिकक्षो, B °कक्षा; D1-3 5 °कक्ष्यो; D4 8 °कक्षौ, D6 °कक्षी; D7 °कक्ष्यैर्; G4 °कक्ष्य- (for °कक्ष्या) K1 महेष्वासा (for महाकेतुर्) — [d]) Ś1 समप्रभ°, K4 Dn2 D3 इवोदित (for समद्युति).

10 S transp 10[ab] and 10[cd] — [a]) S (except G5) किंचिद् — K4 om 10[c]-11[c] — [c]) S विशोका° समपद्यत

11 K4 om 11[abc] (cf. v l 10) — [a]) Dc1 पुष्टे; Dn2 D4 हृष्ट्वा (for हृष्टाश्च) G1 M3 4 यौधास् — [b]) K2, 5 D5 तत्र जल्पति (K2 °त), Dn1 D4 7 8 तदाजल्पत; D6 तत्राजल्पत S तत्र जल्पति संयुगे

किमु पाण्डुसुतान्युद्धे हीनवीर्यपराक्रमान् ॥ १२
भीष्मेण तु रणे पार्थाः पालिता बाहुशालिना ।
तांस्तु कर्णः शरैस्तीक्ष्णैर्नाशयिष्यत्यसंशयम् ॥ १३
एवं ब्रुवन्तस्तेऽन्योन्यं हृष्टरूपा विशां पते ।
राधेयं पूजयन्तश्च प्रशंसन्तश्च निर्ययुः ॥ १४
अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत् ।
परेषां क्रौञ्च एवासीद्व्यूहो राजन्महात्मनाम् ।
प्रीयमाणेन विहितो धर्मराजेन भारत ॥ १५
व्यूहप्रमुखतस्तेषां तस्थतुः पुरुषर्षभौ ।
वानरध्वजमुच्छ्रित्य विष्वक्सेनधनंजयौ ॥ १६
ककुदं सर्वसैन्यानां लक्ष्म सर्वधनुष्मताम् ।
आदित्यपथगः केतुः पार्थस्यामिततेजसः ॥ १७
दीपयामास तत्सैन्यं पाण्डवस्य महात्मनः ।
यथा प्रज्वलितः सूर्यो युगान्ते वै वसुंधराम् ॥ १८
अस्यतामर्जुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ।
वासुदेवश्च भूतानां चक्राणां च सुदर्शनम् ॥ १९
चत्वार्येतानि तेजांसि वहञ्श्वेतहयो रथः ।
परेषामग्रतस्तस्थौ कालचक्रमिवोद्यतम् ॥ २०
एवमेतौ महात्मानौ बलसेनाग्रगावुभौ ।
तावकानां मुखं कर्णः परेषां च धनंजयः ॥ २१

— [d]) T G2–5 जये, G1 M युद्धे (for युधि)

12 [b]) S अपि ध्रुवं (for सवासवान्) — [c]) K5 D8 किं तु (for किमु) K4 B2–4 Dc1 S किं पुन (K4 किं तु [submetric]) पांडवान्युद्धे

13 [a]) K4 हि पुरा; B5 हि रणे; T G2 4 समरे (for तु रणे) — [b]) Dn1 D4 7 8 बाहु( D8 बल )-दर्शिना; T G2 3 5 बलशालिन (for बाहुशालिना) — [c]) K4 ततस् (hypermetric) (for तांस्) Ś1 K1. 3 घोरैर् (for तीक्ष्णैर्) B3 शितैर्बाणैर् (for शरैस्तीक्ष्णैर्) — [d]) Ś1 D4 7 8 संघश॰, K1–3 D1 सर्वश॰, K4 B2–4 Dc1 Dn2 D3 सयुगे, B1. 5 संगरे; Dn1 [अ]सशय (for [अ]सशयम्)

14 [a]) G2 सेना (for ऽन्योन्यं) T G3–5 एवं ब्रुवं॰ त्स्ता॰ (G4 ॰स्तं) सेना — [b]) K5 D2 6 रोमा (for ॰रूपा) — [c]) T G3 4 पूजयंत्यश्च K5 वे (for च) — [d]) T G3 4 प्रशसंत्यश्च B3 (marg as in text) निर्ययु॰ परवीरहा

15 Before 15, Dn1 D4 7 8 ins संजय उवाच — [a]) Dn1 च स, Ca d क्रौञ्च (as in text) — [d]) D6 transp व्यूहो and राजन् — [f]) T G2–5 मारिष (for भारत)

16 [b]) D2 5 प्रतस्थु॰ (for तस्थतु॰) K5 पुरुषावुभौ (for ॰षर्षभौ) S आस्थितौ (T G2 5 ॰तो) भरतर्षभ — [c]) K5 D2 5 उत्सृज्य, Dc1 Dn2 D7 उत्सृत्य, Dn1 उद्धृत्य (for उच्छ्रित्य)

17 [a]) G2 M3 4 ककुद॰ — [b]) B2 Dn2 D8 धाम; B5 Dn1 लक्ष्य (for लक्ष्म) Ś1 ॰धनुर्भृतां — [d]) Dn1 D4 7 8 पाडवस्यामितौजस

18 G5 damaged — [a]) Dn1 D4 7 8 तापयामास (for दीप॰) — [b]) B4 Dn1 D4 7 8 कौरव्यस्य (for पाण्डवस्य). — [d]) G1 M1 2 वसुंधरा — After 18, K5 ins

47* अर्जुनेन तथा राजन्व्यापिता भारती चमू ।

while B Dc1 Dn2 D3 6 ins after 18

48* दीप्यन्दृश्येत हि तथा केतु॰ सर्वत्र धीमत॰ ।

[ Dn2 प्रदहन्दृश्यते तद्वत् (D6 राजन्) (for the prior half) Dn2 D6 पार्थस्य (for सर्वत्र) Dc1 केतु॰ कल्याण दर्शन॰, D6 तथा केतुर्महात्मन॰ (for the post half) ]

19 G5 damaged — [a]) B Dc1 D8 योधानाम्; G2 5 अगृह्णताम् (hypermetric) (for अस्यताम्) — [d]) K5 D2 5 T1 G2 अस्त्राणां च, T2 G3 4 चक्र चास्य (for चक्राणां च)

20 [b]) K2 वयंश्च, D1 वहेच्च, G5 वाह; Ca वह॰; Cd वाह॰; Cdp रव॰ (for वहन्) Ś1 K1 2 D1 चैव (for श्वेत) K1 D1 हयै, K3 हये (for हयो) Dn1 [ऽ]र्जुन॰ (for रथ॰) — [c]) K5 D2 5 चाग्रतस् (for अग्रतस्) — [d]) K4 Dc1 D6 इवोदित (for ॰द्यतम्).

21 [a]) N (Ś1 missing) एवं तौ सु (Dn2 तु, D3 स) महात्मानौ — [b]) B (except B4) Dc1 पर, Dn1 चलत्॰ (for बल॰) S ॰सागरगाव् (for ॰सेनाग्र॰) Ca d cite बल, Cd अग्रे also — [c]) K1–3 D1 मुख॰; K5 B Dc1 Dn D2. 6 8 मुखे (for मुखं) — [d]) Dc1 S तु (for च) D5 संजातो वै न संशय ·

ततो जातातिसंरम्भौ परस्परवधैषिणौ ।
अवेक्षेतां तदान्योन्यं समरे कर्णपाण्डवौ ॥ २२
ततः प्रयाते सहसा भारद्वाजे महारथे ।
अन्तर्नादेन घोरेण वसुधा समकम्पत ॥ २३
ततस्तुमुलमाकाशमावृणोत्सदिवाकरम् ।
वातोद्धूतं रजस्तीव्रं कौशेयनिकरोपमम् ॥ २४
अनभ्रे प्रववर्ष द्यौर्मांसास्थिरुधिराण्युत ।
गृध्राः श्येना बडाः कङ्का वायसाश्च सहस्रशः ।
उपर्युपरि सेनां ते तदा पर्यपतन्नृप ॥ २५
गोमायवश्च प्राक्रोशन्भयदान्दारुणान्रवान् ।
अकार्षुरपसव्यं च बहुशः पृतनां तव ।
चिखादिषन्तो मांसानि पिपासन्तश्च शोणितम् ॥ २६
अपतद्दीप्यमाना च सनिर्घाता सकम्पना ।
उल्का ज्वलन्ती संग्रामे पुच्छेनावृत्य सर्वशः ॥ २७
परिवेषो महांश्चापि सविद्युत्स्तनयित्नुमान् ।
भास्करस्याभवद्राजन्प्रयाते वाहिनीपतौ ॥ २८
एते चान्ये च बहवः प्रादुरासन्सुदारुणाः ।
उत्पाता युधि वीराणां जीवितक्षयकारकाः ॥ २९ C 7 10 B 7 7 K 7 7

---

22 [a]) B2-4 Do1 D4 7 8 यत्तौ; S यौ तौ (for ततो). Do1 जाता च Do1 M1 2 संरब्धौ (for स रम्भौ). Dn2 D8 6 तौ जा(Dn2 D8 या)तावतिसंरब्धौ —[b]) B1 हितैषिणौ, Dn1 जयैषिणौ (for °वधै°) —[c]) Ś1 Dn1 D8 6 अवे(Ś1 °वै)क्षतां, K1 4 B5 D2 अवे(B5 °व)क्ष्येतां (for अवेक्षेतां) S दृष्ट्वान्योन्य रणे कोपात् —[d]) T G3 4 पेततु, G1 2 वेप(G2 °पि)तु; G5 निपेतु (for समरे) D6 कृष्णपाण्डवौ. — After 22, D5 6 ins

49* दिधक्षन्तौ रणे क्रुद्धौ नेत्राभ्यामितरेतरम् ।
निश्वसन्तौ महावीर्यौ धुन्वानौ धनुषी दृढौ ।
समुच्छ्रितपताकेन ध्वजेन रथिनां वरः ।
आचार्यः कुरुपाण्डूनां समामशिरसि स्थितः ।

23 [a]) B5 पुन, Dn2 तथा (for ततः) S सप्रयाते तु सहसा —[c]) B Do1 Dn2 D8 6 आर्तनादेन; D4 7 8 महानादेन (for अन्तर्ना°) K1-3 घोषेण (for घोरेण) S सिंहनादेन महता —[d]) K1 Dn1 समकपयत् (for °कम्पत)

24 [a]) D (except Do1 Dn2 D1 8) तुमलम् —[c]) B5 रथोद्धूतं; D7 वाताभ्र, D8 वातोद्धुतं; G5 ततो द्धूत (for वातोद्धूतं) —[d]) Dn1 कौशेयकसमप्रभ, Cv as in text Cd cites कौशेयं

25 [a]) Dn1 प्रववर्षे; D3 6 प्रत्यवर्ष (for प्रववर्ष) B Do1 Dn2 ववर्ष चौरनभ्रापि; S अनभ्रे वर्षति व्योम्नि —[b]) K5 रुधिरान्विता, Do1 °णि च, Dn1 °ण्यत, G3 °ण्यथ (for ण्युत) —[c]) K4 सेना (for श्येना) Ś1 Dn2 Cd बडाः; K1-3 D1 वटाः; K4 5 B1 3 Do1 Ca बलाः; B2 4 5 Dn1 D2 5 6 बका; D8 शिवा; D8 बरा (for बडा) D2 5 काका (for कङ्का) S (except G3) गृध्रा ककाः (G4 °क) बला (M1 2 °ळ) श्येना —[d]) Dn2 महौजस (for सहस्रश)

26 [b]) K4 भयदा, D4 7 8 भैरवान् (for भयदान्) K5 स्वरान् (for रवान्) Dn1 सर्वतो भैरवान्रवान्, T1 G2 दारुणा भैरवस्वना, T2 G1 3-5 M भैरवा दारुणस्वरा (G5 °ना) —[c]) D1 आकार्षुर्, D8 अपकार्षुर् (hypermetric) (for अका°) Dn1 आकर्षुश्चापसव्य च —[d]) K4 S transp बहुश and पृतना K1 च ततः (for तव) —[e]) K4 D1 4 5 8 विखादिषतो, D2 5 G5 चखादि° (for चिखादि°) —[f]) G5 लोहित (for शोणितम्)

27 [a]) B (except B4) Do1 S अ(Do1 प्रा)पतन् (for अपतद्) K4 B (except B4) Do1 D5 S दीप्यमानाश्च (for °माना) —[b]) D2 5 [अ]विकपना (for सकम्पना) K5 B (except B4) Do1 सनिर्घाता स(Do1 सु)कपना; S निर्घाताश्च सुदारुणा Ca d cite सकम्पना —[c]) K5 B1-3 S ज्वलत्य, Do1 ज्वलत (for ज्वलन्ती) S सेनांते (for संग्रामे) — After 27[c], K5 reads निर्घाता सकपना । श्मशाने रुते नारा (sic) —[d]) K5 D2 5 शब्देन (for पुच्छेन) K4 सर्वत, D6 रोदसी (for सर्वश) S उच्चैरावृत्य सर्वत (G2 संस्थिता; G4 सर्वश)

28 [a]) Ś1 K1-4 D5 परिवेशो D8 महांतश्चो (?); S महांश्चैव — K1 om 28[b] —[c]) K5 (sup lin) [उ]दये (for [अ]भवद्)

29 [b]) B4 दुरासदा (for सुदारुणा) —[c]) S उत्पातास्तव सेनाया (G2-4 °यां) —[d]) Dn1 जीवन (for जीवित) D8 °कारणा (for °का) S प्रयाते सत्य विक्रमे

30 [b]) B1-4 Do1 Dn D4 7 8 Cd जयैषिणौ (for

ततः प्रववृते युद्धं परस्परवधैषिणाम् ।
कुरुपाण्डवसैन्यानां शब्देनानादयज्जगत् ॥ ३०
ते त्वन्योन्यं सुसंरब्धाः पाण्डवाः कौरवैः सह ।
प्रत्यघ्नन्निशितैर्बाणैर्जयगृद्धाः प्रहारिणः ॥ ३१
स पाण्डवानां महतीं महेष्वासो महाद्युतिः ।
वेगेनाभ्यद्रवत्सेनां किरञ्शरशतैः शितैः ॥ ३२
द्रोणमभ्युद्यतं दृष्ट्वा पाण्डवाः सह सृञ्जयैः ।
प्रत्यगृह्णंस्तदा राजञ्शरवर्षैः पृथक्पृथक् ॥ ३३
संक्षोभ्यमाणा द्रोणेन भिद्यमाना महाचमूः ।
व्यशीर्यत सपाञ्चाला वातेनेव बलाहकाः ॥ ३४
बहूनीह विकुर्वाणो दिव्यान्यस्त्राणि संयुगे ।
अपीडयत्क्षणेनैव द्रोणः पाण्डवसृञ्जयान् ॥ ३५
ते वध्यमाना द्रोणेन वासवेनेव दानवाः ।
पाञ्चालाः समकम्पन्त धृष्टद्युम्नपुरोगमाः ॥ ३६
ततो दिव्यास्त्रविच्छूरो याज्ञसेनिर्महारथः ।
अभिनच्छरवर्षेण द्रोणानीकमनेकधा ॥ ३७
द्रोणस्य शरवर्षैस्तु शरवर्षाणि भागशः ।
संनिवार्य ततः सेनां कुरूनप्यवधीद्बली ॥ ३८
संहृत्य तु ततो द्रोणः समवस्थाप्य चाहवे ।
स्वमनीकं महाबाहुः पार्षतं समुपाद्रवत् ॥ ३९

---

-वधै°). S तुमुलं रो(G5 लो)महर्षणं — c) K1 3 4 -सेनानां; B2 Do1 G5 योधानां, B3 4 T G1–4 M -यौधानां (for -सैन्यानां) Dn1 कुरूणां पांडुसैन्यानां — d) Ś1 शब्देनानर्दयन्; K1 2 °नदयन्; K3 B Do1 Dn2 D1, 3 °पूरयज् (D3 °यन्), D2 4 7 8 G1 2 M3, 4 °नादयन्; D6 °नादयज् (submetric) (for शब्देनानादयज्) D4 7 8 दिश°, G2 नभ° (for जगत्).

31 a) D8 तेन्योन्यं च (for ते त्वन्योन्यं) S समारब्धा (for सुसं°) D5 ते त्वन्योन्यसंरब्धा (submetric) — b) B2 Do1 S सह कौरवै° (by transp), B3 4 सहकौरवा Ś1 कौरवा पांडवै° सह — c) N (except Ś1, Ś2 missing) शस्त्रैर् (for बाणैर्) — d) K1 4 5 D (except D1) T G2 जयगृध्रा T G1 3–5 M प्र(G5 स)मन्यव° (for प्रहारिण)

32 a) B1 D3 6 G2 महतां — b) K4 D5 महामतिः (for °द्युति°) — c) K5 प्राद्रवत्; D4 7 8 [अ]भ्यपतत् (for [अ]भ्यद्रवत्) D3 6 सैन्यं — d) Dn2 D3 6 परान्, D2, 5 शनै (for शितै°)

33 a) K2 अभ्यद्भुतं, B3 4 Do1 अभ्युदितं; S अभ्यागत (for अभ्युद्यतं) — c) Ś1 K B2–4 Do1 Dn1 D5 6 ततो, T G2 4 तथा (for तदा)

34 a) Ś1 K1, 5 Dn2 D3 5 सक्षोभ्यमाना; D2 T1 विक्षोभ्यमाणा. — G5 om. (hapl) $34^{b}$–$36^{a}$ — b) K5 (*sup lin.* as in text) D5 तिष्ठमाना, B5 क्षोभ्यमाना (for भिद्य°) S (G5 om) च सा (for महा-) — c) D4, 7 8 च (for स) — d) K2 5 D3 G1 3 M1, 2 वातेनैव B1 3 (marg) 4 Do1 मेघानीवा(B3 °स्तीरा)-निलेरिता (क्र०); B3 मेघा इवानिलेरिता.

35 D4 om $35^{a}$–$36^{b}$ G5 om 35 (cf v l 34) — a) B4 बहूनीव, Dn1 S (G5 om.) °न्यपि, D5 6 °निह, D7 8 °नि हि (for °नीह) — b) B2–4 Do1 वीर्यवान् (for संयुगे) — c) D2 अपातयत् (for अपीड°) K1 अपीडयन्त्रणेनैव — d) D6 सजयान् (for सृञ्जयान्)

36 D4 om $36^{ab}$ (cf v l 35) G5 om. $36^{a}$ (cf v l 34) — a) S (G5 om) हन्यमाना (for वध्य°) — K2 om. $36^{cd}$ — c) K1 पांचाल°; B4 T पंचाला, M3–5 पांडवाः (for पाञ्चाला)

37 a) K5 स हि (for ततो) — b) Dn2 महाबला°, D3 S °बल° (for °रथ°) — c) K2 T G3–5 अच्छिनत्; K4 Dn1 अभिदत् (for अभिनत्) — d) Do1 अनेकश° (for °कधा)

38 a) Ś1 द्रोणश्च; D5 द्रोणस्तु. B4 5 G2 शरवर्षेण; Dn D3 T G1, 3–5 M °वर्षाणि; D4 7 8 °वर्षं तु (for °वर्षैस्तु) K5 D2 5 च (for तु). — b) Dn1 D4, 7 8 T G2–5 शरवर्षेण, Dn2 D3 G1 M °वर्षैस्तु (for °वर्षाणि) B Do1 T G1 2 4 5 M पार्षत°; G3 सयुगे (for भागश°) — c) B Do1 S सर्वान् (for सेनां) — d) K5 D2 5 अभ्यवधीद् (D5 °धाद्); Dn1 अप्यवधद्; D6 अभ्यद्रवद्, S अभ्यपतद् (for अप्यवधीद्) B2–4 Do1 कुरूनप्याजघान ह, Dn2 D3 कुरूणां न्यवधीद्बली

39 a) K2 D1, 7 8 संहत्य; B Do1 संवृत्य; D2 सहृष्य, D6 संहन्य; S सगृह्य; Bom ed सयम्य (for संहृत्य). Dn1 च (for तु) — b) T G2–4 समुपस्थाप्य (for समव°) — d) S समभिद्रवत् (M1 °वन्) (for समुपा°)

स बाणवर्षं सुमहदसृजत्पार्षतं प्रति ।
मघवान्समभिक्रुद्धः सहसा दानवेष्विव ॥ ४०
ते कम्प्यमाना द्रोणेन बाणैः पाण्डवसृञ्जयाः ।
पुनः पुनरभज्यन्त सिंहेनेवेतरे मृगाः ॥ ४१
अथ पर्यपतद्द्रोणः पाण्डवानां बलं बली ।
अलातचक्रवद्राजंस्तदद्भुतमिवाभवत् ॥ ४२
खचरनगरकल्पं कल्पितं शास्त्रदृष्ट्या
चलदनिलपताकं ह्लादिनं वल्गिताश्वम् ।
स्फटिकविमलकेतुं तापनं शात्रवाणां
रथवरमधिरूढः संजहारारिसेनाम् ॥ ४३

इति श्रीमहाभारते द्रोणपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## ७

संजय उवाच ।
तथा द्रोणमभिघ्नन्तं साश्वसूतरथद्विपान् ।
व्यथिताः पाण्डवा दृष्ट्वा न चैनं पर्यवारयन् ॥ १
ततो युधिष्ठिरो राजा धृष्टद्युम्नधनंजयौ ।
अब्रवीत्सर्वतो यत्तैः कुम्भयोनिर्निवार्यताम् ॥ २
तत्रैनमर्जुनश्चैव पार्षतश्च सहानुगः ।

---

40 $^{a}$) S स तु बाणमय वर्षं — $^{b}$) T $G_{2,4,5}$ प्रासृजत्; $G_{1}$ M व्यसृजत्, $G_{3}$ प्राविणोत् ( for असृजत् ) — $^{c}$) $K_{4}$ $D_{01}$ $D_{n2}$ $D_{8,6}$ $G_{3}$ मघवा ( for मघवान् ) $D_{n1}$ $G_{5}$ सहसा ( $G_{5}$ समरे ) क्रुद्ध ( for समभिक्रुद्ध ) — $^{d}$) $D_{n1}$ समताद्दानवान्प्रति

41 $^{a}$) $D_{n2}$ वध्यमाना; $D_{8}$ काल्य°, $D_{4,7,8}$ $G_{2}$ हन्य° ( for कम्प्य° ) — $^{b}$) $G_{1}$ पार्षत ( for पाण्डव ) $D_{6,7}$ सजया ( for सृञ्जया. ) — $^{d}$) $Ś_{1}$ सिंहेनेव वन ( for °नेवेतरे )

42 $^{a}$) $B_{2-5}$ $D_{01}$ $D_{1}$ $T_{1}$ $G_{4}$ तथा ( for अथ ) $K_{1-4}$ $D_{8}$ पर्यापतद्; B $D_{01}$ $D_{1,8}$ पर्यचरद्, $D_{2}$ पर्यतपद् ( for पर्यपतद् ) $D_{4}$ अन्वपर्यपतद्द्रोणः; $D_{7}$ अजापर्यतद्रोण ( sic ) — $^{b}$) $K_{2,5}$ $B_{2-5}$ D ( except Dn $D_{1,8,6}$ ) बलं बले; S अनीकिनीं ( for बल बली ).

43 $^{a}$) $K_{5}$ ( *sup lin* as in text ) खचरशरणकल्प। Cv °नगरकल्पं ( as in text ) $D_{8}$ शस्त्रवृष्ट्या ज्वलत ( for कल्पित शास्त्रदृष्ट्या ) — $^{b}$) $D_{n2}$ चलदनल- ( for °निल ). $B_{2-4}$ $D_{01}$ पवनधु( $D_{01}$ °धु )तपताका; $D_{8}$ ज्वलदनलपताका, T $G_{2}$ $M_{2-6}$ पवनचलपताक; $M_{1}$ पवनवनचलाक ( for चलदनिलपताकं ) $K_{5}$ $D_{5}$ पताका ( for -पताक ) $Ś_{1}$ $K_{1,3-5}$ $D_{n2}$ $D_{6}$ ह्ला( $D_{n2}$ ह्रा )दित, $K_{2}$ ह्लादिनं; $B_{1,5}$ $D_{n1}$ $D_{2-4,7,8}$ ह्लादन; $B_{2-4}$ $D_{01}$ शोभितं; $D_{5}$ ह्लादितं; $G_{3}$ हेपितैर्, $G_{5}$ ह्लादिनी ( for °न ) $D_{n2}$ वेगिताश्वं; $D_{3}$ वल्गितं च; $D_{5}$ चालिताश्वं; $D_{7,8}$ त्रि( $D_{8}$ शि )शिताश्व ( for वल्गि ) — $^{c}$) $D_{5}$ स्फुटितविमलकेतुस B $D_{01}$ त्रासन; $D_{5}$ तापित ( for तापन ) — $^{d}$) S शत्रुसेनां ( $G_{2}$ सैन्य ) जगाहे ( for संजहारारिसेनाम् )

Colophon $Ś_{2}$ missing — *Sub-parvan* Editions द्रोणाभिषेक — *Day of Drona's Generalship* $K_{2}$ प्रथमे दिवसे. — *Adhy name* $K_{5}$ $B_{5}$ Dn $D_{2,3}$ सेनानिर्याण, $G_{1}$ $M_{1,2}$ द्रोणसमरावतार — *Adhy no* ( figures, words or both ) $K_{2,3}$ $B_{1,2}$ $D_{n1}$ $D_{2,8}$ S 6 ( as in text ), $K_{4}$ $B_{5}$ 7, $D_{01}$ 8 — *Śloka no* $D_{01}$ 46, $D_{n1}$ 44

### 7

☞ This adhy is missing in $Ś_{2}$ ( cf v l 7 1 1 ).

1 $G_{3}$ ins श्रीकृष्णाय नमः before the ref $D_{1}$ ins ॐ after the ref — $^{a}$) $K_{4,5}$ $B_{5}$ $D_{1,6}$ ततो, T तदा ( for तथा ) $D_{4,7,8}$ S अरीन्घ्नंत ( for अभिघ्नन्त ) — $^{b}$) $Ś_{1}$ $K_{1,3}$ $D_{1}$ द्विप; $G_{1}$ M -द्विपा ( for द्विपान् ) $K_{4}$ साश्वसूतमथ द्विप — $^{c}$) S राजन् ( for दृष्ट्वा ) — $^{d}$) $K_{2}$ परिवारयन्, S प्रत्यवा° ( for पर्यवा° )

2 $^{b}$) B ( except $B_{5}$ ) $D_{01}$ सर्वयत्नेन ( for सर्वतो यत्तै° ) $D_{6}$ यत्नै; S यत्नात् ( for यत्तै° )

3 $^{a}$) $K_{5}$ $D_{4,6-8}$ तत्रैवम्; $B_{1}$ $D_{n1}$ अथैनम् ( for तत्रैनम् ) — $^{b}$) $K_{5}$ $D_{2,5,6}$ सहानुज°; $G_{1}$ M महारथ° ( for सहानुग° ). T $G_{2-5}$ [illegible]

पर्यगृह्णंस्ततः सर्वे समायान्तं महारथाः ॥ ३
केकया भीमसेनश्च सौभद्रोऽथ घटोत्कचः ।
युधिष्ठिरो यमौ मत्स्या द्रुपदस्यात्मजास्तथा ॥ ४
द्रौपदेयाश्च संहृष्टा धृष्टकेतुः ससात्यकिः ।
चेकितानश्च संक्रुद्धो युयुत्सुश्च महारथः ॥ ५
ये चान्ये पार्थिवा राजन्पाण्डवस्यानुयायिनः ।
कुलवीर्यानुरूपाणि चक्रुः कर्माण्यनेकशः ॥ ६
संगृह्यमाणां तां दृष्ट्वा पाण्डवैर्वाहिनीं रणे ।
व्यावृत्य चक्षुषी कोपाद्भारद्वाजोऽन्ववैक्षत ॥ ७
स तीव्रं कोपमास्थाय रथे समरदुर्मदः ।
व्यधमत्पाण्डवानीकमभ्राणीव सदागतिः ॥ ८
रथानश्वान्नरान्नागानभिधावंस्ततस्ततः ।
चचारोन्मत्तवद्द्रोणो वृद्धोऽपि तरुणो यथा ॥ ९
तस्य शोणितदिग्धाङ्गाः शोणास्ते वातरंहसः ।
आजानेया हया राजन्नविभ्रान्ताः श्रियं दधुः ॥ १०
तमन्तकमिव क्रुद्धमापतन्तं यतव्रतम् ।
दृष्ट्वा संप्राद्रवन्योधाः पाण्डवस्य ततस्ततः ॥ ११
तेषां प्रद्रवतां भीमः पुनरावर्ततामपि ।

— After $3^{ab}$, T G2–5 M3–5 read $6^{ab}$ for the first time, repeating the same in its proper place, while G1 M1 2 read the same after $3^{ab}$ — $^{c}$) K1–3 B Do1 Dn1 D1 प्रत्य(K1 °ति)गृह्णस्, K5 पर्यगृह्णत् (for पर्यगृह्णस्) B2–4 Do1 तथा S तत्र (for सर्वे) — $^{d}$) K3 B5 T समापेतुर्, G M °गच्छन् (for °यान्तं) Dn2 D3 महारथं — After 3, Ś1 reads $6^{ab}$, while Dn1 reads $5^{ab}$

4 G5 damaged — $^{a}$) Ś1 B2 केकयो; K5 Do1 D4 7 कैकया; Dn D2 3 5 6 8 M4 5 कैकेया; M3 केकेया (for केकया) — $^{b}$) Ś1 K1 3 4 B5 Dn D3 6 G3–5 च (for ऽथ) M1 2 धृष्टद्युम्नो महारथ — $^{c}$) Dn2 D3 6 M2 मत्स्यो; T G1, 5 M1 4 मात्स्यो, G2 M3 5 मात्स्यौ; G3 4 मात्स्या (for मत्स्या) — $^{d}$) B1 G1, 5 M द्रुपदश्च (for °दस्य) Dn2 D3 [आ]त्मजस्तथा; S [आ]त्मजै सह (G5 om ह) (for [आ]त्मजास्तथा)

5 Dn1 reads $5^{ab}$ after 3 G5 damaged — $^{a}$) K3, 4 om. (hapl) from संहृष्टा up to चेकितानश्च (in $5^{c}$) Ś1 च संरब्धा; K2 5 D1 च संक्रुद्धा, D7 5 सुसंक्रुद्धा (for च संहृष्टा) — K1 2 D1 om. (hapl.) $5^{bc}$ — $^{b}$) Dn1 D3, 7 8 M3 च (for स) — $^{c}$) Dn2 D3 संहृष्टो (for संक्रुद्धो) — $^{d}$) D4 महारथा

6 Ś1 reads $6^{ab}$ after 3 T G2–5 M3–5 read $6^{ab}$ for the first time after $3^{ab}$, while G1 M1 2 read the same after $3^{ab}$ — $^{b}$) Dn1 वशानुगा, S (all [except G1 M1 2] first time) [अ]नुसैनिका (for [अ]नुयायिन) — $^{c}$) K1 Dn1 कुलवीर्याणि; T2 G3–5 बलवीर्यानु (for कुल°) — $^{d}$) D7 8 T G3–5 [अ]शेषत (for [अ]नेकश)

7 $^{a}$) B Do1 सरक्ष्य(B2 °क्ष)माणां; Dn1 निगृह्यमाणा, D4 7 8 सवृध्य(D7 °ध्य)माणां, S सं(T स)भिद्यमाना, Cd सगृह्यमाणां (as in text) G1 M स्वा (for तां) — $^{b}$) B (except B5) Do1 transp पाण्डवैर् and वाहिनीं — $^{c}$) K1 Dn1 आवृत्य; Cd व्यावर्त्य, Ca व्यावृत्य (as in text) B1–4 Do1 Dn1 क्रोधाद्; B5 राजन् (for कोपाद्)

8 $^{a}$) K2 Dn2 D3 तीव्र (for तीव्रं) D6 क्रोधम्; S वेगम् (for कोपम्) — $^{b}$) D6 रथी Dn1 D1 समरदुर्जय (for °दुर्मद) S विष्वग्वात (G1 °तो) इवो (G2 यथो)द्ध(M3, 4 °ध)त — $^{d}$) B Do1 अभ्रवृन्दमिवानिल, D4 7 8 S महाभ्राणीव मारुत

9 $^{b}$) K5 अभिधावस्, D2 5 अभिप्लावस्; D3 अभिबाधंस् (for अभिधावंस्) K3 B5 D1 इतस्तत; G1 M समतत (for ततस्तत) B4 विधायंस्ततस्तथा (submetric), T G2–5 अभ्यधावत्समतत — $^{c}$) Ś1 K1 D2 5 चकार (for चचार) Ś1 K1 B3 D7 8 G2 मत्तवद्, Cd [उ]न्मत्तवद् (as in text) — $^{d}$) G1 M वृद्धश्चैवातिवेगित

10 $^{b}$) T G3–5 M3–5 पवन, G1 2 M1 2 परम (for ते वात) — $^{c}$) Ś1 आजानीया; K5 अजानेया, D3 कुलीनाश्च; Cd आजानेया (as in text). — $^{d}$) B1 3 5 Dn2 अविश्रांता; D5 विभ्रमिव (sic); D8 सविभ्रांता (for अविभ्रान्ता) B शिवं ययु (for श्रिय दधु) T G3–5 अवि(T G5 °वि)भ्रन्तै शिव पुन; G1 M अयिभ्रन्तशिव वपु, G2 अविभ्रद्वैशस पुन

11 $^{b}$) K5 D5 पातयंतं (for आपतन्त) G5 इवव्रत (for यतव्रतम्) — $^{c}$) G1 M4 5 योधा (for योधा) — $^{d}$) T G2–4 कौंतेयाश्च, G5 कौरवस्य; M3–5 कौंतेयस्य (for पाण्डवस्य) T G3 4 इतस्तत, G1 M1 2 सहस्रश (for ततस्तत)

वीक्षतां तिष्ठतां चासीच्छब्दः परमदारुणः ॥ १२
शूराणां हर्षजननो भीरूणां भयवर्धनः ।
द्यावापृथिव्योर्विवरं पूरयामास सर्वतः ॥ १३
ततः पुनरपि द्रोणो नाम विश्रावयन्युधि ।
अकरोद्रौद्रमात्मानं किरञ्शरशतैः परान् ॥ १४
स तथा तान्यनीकानि पाण्डवेयस्य धीमतः ।
कालवन्न्यवधीद्द्रोणो युवेव स्थविरो बली ॥ १५
उत्कृत्य च शिरांस्युग्रो बाहूनपि सभूषणान् ।
कृत्वा शून्यान्रथोपस्थानुदक्रोशन्महारथः ॥ १६
तस्य हर्षप्रणादेन बाणवेगेन चाभिभो ।
प्राकम्पन्त रणे योधा गावः शीतार्दिता इव ॥ १७
द्रोणस्य रथघोषेण मौर्वीनिष्पेषणेन च ।
धनुःशब्देन चाकाशे शब्दः समभवन्महान् ॥ १८
अथास्य बहुशो बाणा निश्चरन्तः सहस्रशः ।
व्याप्य सर्वा दिशः पेतुर्गजाश्वरथपत्तिषु ॥ १९
तं कार्मुकमहावेगमस्त्रज्वलितपावकम् ।
द्रोणमासादयांचक्रुः पाञ्चालाः पाण्डवैः सह ॥ २०
तान्वै सरथहस्त्यश्वान्प्राहिणोद्यमसादनम् ।
द्रोणोऽचिरेणाकरोच्च महीं शोणितकर्दमाम् ॥ २१
तन्वता परमास्त्राणि शरान्सततमस्यता ।

---

12 a) Ś1 K4 B (except B8) Do1 Dn D2 3 5 T G2–5 प्राद्रवतां; D4 प्रमद्रतां (for प्रद्रवतां) — b) B1 इति (for अपि) — c) K1 4 Dn2 D2–4 वीक्ष्यतां, B (except B5) Do1 पश्यतां (for वीक्षतां) Dn1 शब्द, Dn2 चासीत्, D8 चापि (for चासीत्). — d) Dn1 आसीत् (for शब्द)

13 d) B3 D5 सर्वशः (for सर्वतः) S समालवत सस्वन

14 G4 om 14ab — b) D2 रणे (for युधि) S (G4 om) नाम विश्राव्य चात्मन

15 a) B (except B6) Do1 तेष्वनीकेषु; S पांडवेयस्य (for तान्यनीकानि) D6 शतशोथान्यनीकानि — b) K1 पांडवीयस्य; B3 पांडुपुत्रस्य (for पाण्डवेयस्य) B1 2 (marg as in text) 4 पांडुपुत्रस्य (B2 °पुत्रेषु) मारिष, S तान्यनीकानि भारत (G5 चाहवे) — G3 om 15c–16d — c) K3 D2 4, 5 7 8 चा(K3 अ)वधीद्, B Do1 Dn2 D1, 6 व्य(D6 व्य)चरद्; S (G3 om) न्यहनद् (for न्यवधीद्)

16 G3 om. 16 (of v l. 15) — a) T G2 4 तु (for च) Dn1 उग्रान् (for °ग्रो) — b) Dn2 D2 बाहून् (for बाहून्) Ś1 स भीषणान्; K3 B Do1 D1 3 4 7 8 T G4, 5 सुभूषणान्, Dn1 G2 सुभूषितान्; G1 M1–4 च भूषणान् (for सभूषणान्) — c) Ś1 रथोपस्थाद् (for पस्थान्) — d) D8 अनुक्रोशन् (for उदक्रो°) B2 3 Do1 T G2 4 M3–5 महारवान्, B5 G1 5 M1 2 रथान् (for °रथः)

17 a) G2 तथा तस्य (for तस्य हर्ष) — b) Dn1 G1, 5 M बाणवर्षेण (for °वेगेन) K1 B1 5 D1 5 6 वा विभो, B2–4 Do1 वा प्रभो (B4 °भौ), Dn1 वै तथा; Dn2 चातिभो; D4 5 चाभिभोः, G5 च प्रभो (for चाभिभो) — c) D4 प्राकपत; D5 प्रकंपंत, S (except G2) अकंपंत (for प्राकम्पन्त) K4 शूरो, G1, 2 M यौधा (for योधा) — d) S मूत्रं चापि प्रसुस्रुवुः

18 a) K5 बाणस्य (for द्रोणस्य) Dn2 D5 6 रथनिर्घोषैर् (for °घोषेण) — b) D4 7 8 नेमि (for मौर्वी) Ś1 T G2–4 निर्घोषणेन; Dn1 निष्कर्ष° (for निष्पेष°) D8 मौर्वीभिः पेषणेन च — c) Dn2 D5 6 रथ (for धनु-)

19 a) B1 D4 7, 8 तथा (for अथ). B Do1 D1 6 S धनुषो; D8 बहवो (for बहुशो) — b) B5 Dn D4 7 8 T G2 निःसरन्त; G5 निर्ययुर्वै (for निश्चरन्त) — d) B Do1 S नागाश्व; Dn1 रथाश्व; Dn2 वराश्व; D5 6 नराश्व (for गजाश्व). T G3 4 -पंक्तिषु (for -पत्तिषु)

20 Do1 reads 20ab on marg (sec m) — a) D4 7, 8 तद् (for तं) Ś1 K4 D8 G5 कार्मुक K4 आदधानम् (for -महावेगम्) — b) Ś1 Dn1 अस्त्र — c) S द्रोणमावारयांचक्रुः — d) B1 D1 G3 4 पञ्चालाः (for पाञ्चालाः) D1 पांडवाः (for °वैः). Ś1 K (except K5) पांडवा (Ś1 पार्थकैः) सह मारिष

21 a) K1 5 स तान्विरथ (for तान्वै सरथ) K4 D4 7 8 -हस्ता(K4 °स्या)श्वान् B1–4 तान्स (B2 °न्वै) कुंजरपत्त्यश्वान्; S सनागरथपत्त्यश्वान् — c) Dn1 अकरोच् (for [अ]करोच्) B Do1 चक्रे चिरेण च द्रोणो (B5 द्रोणस्तु); S अचिराद(G1 M °रेणा)करोद्द्रोणो

द्रोणेन विहितं दिक्षु बाणजालमदृश्यत ॥ २२
पदातिषु रथाश्वेषु वारणेषु च सर्वशः ।
तस्य विद्युदिवाभ्रेषु चरन्केतुरदृश्यत ॥ २३
स केकयानां प्रवरांश्च पञ्च
पाञ्चालराजं च शरैः प्रमृद्य ।
युधिष्ठिरानीकमदीनयोधी
द्रोणोऽभ्ययात्कार्मुकबाणपाणिः ॥ २४
तं भीमसेनश्च धनंजयश्च
शिनेश्च नप्ता द्रुपदात्मजश्च ।
शैब्यात्मजः काशिपतिः शिबिश्च
हृष्टा नदन्तो व्यकिरञ्शरौघैः ॥ २५
तेषामथो द्रोणधनुर्विमुक्ताः
पतत्रिणः काञ्चनचित्रपुङ्खाः ।
भित्त्वा शरीराणि गजाश्वयूनां
जग्मुर्महीं शोणितदिग्धवाजाः ॥ २६
सा योधसंघैश्च रथैश्च भूमिः
शरैर्विभिन्नैर्गजवाजिभिश्च
प्रच्छाद्यमाना पतितैर्बभूव
समन्ततो द्यौरिव कालमेघैः ॥ २७
शैनेयभीमार्जुनवाहिनीपा-

---

22 b) Dn1 D5 G1 M संततम् (for सततम्) — c) K4 G1 M वितत, B8 निहितं (for विहित) — d) B4 T2 G2 शरजालम्, D7 बाल॰ (for बाण॰) Dn2 D8 समतत (for अदृश्यत)

23 a) Ś1 K1. 2 D1 रथाग्रेषु, Dn1 सथाश्वेषु (for रथाश्वेषु) B1–3 T1 पदातिस्यंदनाश्वेषु; D5 पदातिरथचाश्वेषु — b) Ś1 सर्वत (for सर्वश॰) T1 रथेष्वपि सह स्त्वश॰ — c) K2 इवार्केषु, D6 इवाकाशे (for इवाभ्रेषु). — d) D5 चरकेतुर् (for चरन्केतुर्)

24 a) D (except D1 5 6) T1 कैकयाना (for केक॰) Ś1 राजन्, K1. 2 4 D1 सर्वान् (for पञ्च) — b) B Dc1 Dn2 D2 6 M1 2 पंचालराजं (for पाञ्चाल॰) Dn1 युधि सं (for च शरै॰) K1–4 D1 विमृद्य, K5 B5 Dn D2 5 T G2–4 प्रमृज्य, B1–4 Dc1 D3 6 8 G5 प्रमथ्य (for प्रमृद्य) — c) B1–3 5 अदीनयोधं; B1 D2 T G2–5 ॰सत्त्वो; Dn2 अपीदयोधी (sic) (for अदीनयोधी) — d) B8 [ऽ]भ्यगमत् (for ॰यात्)

25 b) K5 शनेश् (for शिनेश्) K2 3 5 B1 3 Dn2 D6 G1 M3–5 द्रुपदात्मजाश् (for ॰त्मजश्) — c) K5 Dn2 D6 शै(Dn2 सै)ब्यात्मजा, B8 Dc1 D8 सै(Dc1 शि)ब्यात्मज॰, T G3–5 M3–5 तथार्जुनि॰, G1 M1 2 शौरे॰ सुत॰ (for शैब्यात्मज॰) S च (G1 M स) शैब्यो (for शिबिश्च) — d) K3 B दृष्ट्वा (for हृष्टा) G1 [ऽ]पकिरन्; M1 2 [ऽ]वकिरन्, M8 [ऽ]प्यकिरन् (for व्यकिरन्) — After 25, T G1 2 5 M ins.

50* श्रेणीकृता संयति मोघवेगा
द्वीपे नदीनामिव काशरोहा ।

[(L 1) G5 श्रेणीकृताद् T G2 मेघवेगा, G5 मोरवेगाद् (for मोघवेगा) — (L 2) G1 M पाशवाहा॰ (for काशरोहा॰)]

26 T G1 2 5 M read 26ab twice — a) B8 4 Dc1 D2 तेषामथ; Dn1 तेषां महद् (for तेषामथो) B5 ते द्रोणबाणा॰ समरे प्रयुक्ता॰, Dn2 D3 6 ते द्रोणबाणाशनि॰ (Dn2 ॰सन, D3 ॰शत)वेगयुक्ता, T G1 2 5 M (all first time) तेषां शरा द्रोणशरैर्निकृत्ता, S (all [except G3, 4] second time) ते द्रोणबाणासनविप्रमुक्ता — b) D3 तेषामथ द्रोणधनुर्विमुक्ता (= 26a), G1 2 5 M (all first time) भूमावदृश्यंत वि(G1 च नि)वर्तमाना॰ — c) B1 गजाश्वनृणां, Dn1 गजादिकाना, G4 गजांश्च यूनां (for गजाश्वयूनां) — d) Ś1 K (except K5) B5 D1 दिग्ध गात्रा॰, B1–4 ॰पत्रा॰ (for ॰वाजा॰) S जग्मु(G1 M ययु)र्महीं बर्हिणवर्ह(G1 M2 ॰र्हि)वाजा॰

27 a) B8 योधसिंहैश्च, Dn1 ॰संघै॰ स, G1 M यौधसंघैश्च — b) D4 7 8 विचित्रैर्, G1 M विभग्नैर् (for विभिन्नैर्) G3 4 रथ- (for गज) — c) S सहसा (for पतितैर्) — d) K3 B Dc1 D1 S समावृता (for समन्ततो) S लोहिताभ्रै॰ (M3 ॰भ्रै॰); Ca d कालमेघै (as in text)

28 a) Dn2 D3 सैनेय-, D6 सैन्येन (for शैनेय). K5 Dn2 D2 5 T वाहिनी (D5 ॰नीं) तां (Dn2 या; T यां), B Dc1 D3 4. 6–8 वाहिनीपा (B Dc1 ॰श; D3. 6 ॰ना) (for -वाहिनीपान्) — b) Ś1 D1 शैवा- (D1 ॰ब्या)भिमन्यू, K3 4 Dn2 D6 सैव्या(Dn2 ॰ब्या; D6 ॰न्या)भि॰; K5 Dn1 शैब्याभिपन्नान् (K5 ॰मन्यौ) (for ॰भिमन्यू) D4 6 8 सह (D8 स हि) काशिराज॰ (D6 8 ॰ज); T G1–4 M च सकाशिराजौ (G4 ॰ज) (for सह काशिराज्ञा). B Dc1 सौभद्रपांचालसका

ञ्शैब्याभिमन्यू सह काशिराज्ञा ।
अन्यांश्च वीरान्समरे प्रमृद्य-
द्रोणः सुतानां तव भूतिकामः ॥ २८
एतानि चान्यानि च कौरवेन्द्र
कर्माणि कृत्वा समरे महात्मा ।
प्रताप्य लोकानिव कालसूर्यो
द्रोणो गतः स्वर्गमितो हि राजन् ॥ २९
एवं रुक्मरथः शूरो हत्वा शतसहस्रशः ।
पाण्डवानां रणे योधान्पार्षतेन निपातितः ॥ ३०

अक्षौहिणीमभ्यधिकां शूराणामनिवर्तिनाम् ।
निहत्य पश्चाद्धृतिमानगच्छत्परमां गतिम् ॥ ३१
पाण्डवैः सह पाञ्चालैरशिवैः क्रूरकर्मभिः ।
हतो रुक्मरथो राजन्कृत्वा कर्म सुदुष्करम् ॥ ३२
ततो निनादो भूतानामाकाशे समजायत ।
सैन्यानां च ततो राजन्नाचार्ये निहते युधि ॥ ३३
द्यां धरां खं दिशो वारि प्रदिशश्चानुनादयन् ।
अहो धिगिति भूताना शब्दः समभवन्महान् ॥ ३४
देवताः पितरश्चैव पूर्वे ये चास्य बान्धवाः ।

---

शिराज; $D_{2\ 7}$ शैब्या( $D_{2}$ ब्यो )भिमन्यु स हि काश राज्ञ ( $D_{3}$ स काशिराजं ); $G_{6}$ शैब्याभिमन्युश्च स काशि राज्ञो — $^{c}$) $B_{1}$ धीमान्; $Dn_{1}$ सैन्यान्, $D_{4\ 7\ 8}$ योधान्; $G_{5}$ lacuna (for वीरान्) B $D_{01}$ T $G_{3-5}$ सहसा (for समरे) $Ś_{1}$ $K_{2\ 3.\ 5}$ $Dn_{2}$ $D_{1\ 8}$ प्रमृद्नद्; $K_{1\ 4}$ समृद्धाद्, B $D_{01}$ प्रमर्द; $Dn_{1}$ विमृद्नद्, $D_{4}$ प्रमृद्नद्; $D_{5}$ समुज्ञवान्; $D_{6}$ प्रगृह्य; $G_{3.\ 4}$ प्रवृत्तान्; $G_{3}$ प्रमुक्ता (for प्रमृद्याद्)

29 $^{a}$) S भारतेंद्र (for कौरवेन्द्र) — $^{b}$) $D_{4}$ om. समरे महात्मा B $D_{01}$ S महांति (for महात्मा). — $^{c}$) $G_{2}$ बालसूर्यो; Cd कालसूर्यो (as in text) — $^{d}$) $B_{1}$ हतो (for द्रोणो) $Ś_{1}$ $K_{1-3}$ स्वर्गमिवाद्य, $K_{4}$ °हाद्य; $D_{2\ 6}$ °तोधि (for मितो हि) $K_{5}$ च राजन्; $B_{2}$ $Dn_{2}$ $D_{5}$ विराजन् (for हि राजन्) $B_{1\ 3-5}$ $D_{01}$ स्वर्गममित्रघाती — After 29, $Dn_{2}$ $D_{3\ 6}$ ins

51* स तु कृत्वा महत्कर्म द्रोण परबलार्दन ।

30 $^{a}$) K (except $K_{5}$) विप्रो (for शूरो) — $^{b}$) $Ś_{1}$ हत (for हत्वा) — $^{c}$) $Ś_{1}$ युध्दा, $G_{1}$ M यौधान् (for योधान्) — $^{d}$) $D_{8}$ [अ]भिपालितान् (for निपातित)

31 $^{a}$) $G_{5}$ $M_{1-3}$ अक्षोहिणीम् $Dn_{2}$ om. (hapl) भ्यधिकां शूराणाम $D_{4.\ 7\ 8}$ अभ्यधिकं — $^{c}$) $G_{5}$ निपत्य (for निहत्य) T $G_{2-5}$ द्युतिमान् (for धृति) — $^{d}$) $B_{3\ 4}$ $D_{01}$ $D_{4\ 5\ 7\ 8}$ अगमत् (for अगच्छत्).

32 $^{a}$) $K_{1}$ B $D_{4}$ T $G_{2}$ पचालैर् — $^{c}$) $M_{1\ 2\ 5}$ रुग्मरथो — $^{d}$) $Dn_{2}$ स दुष्करं, T $G_{3-4}$ सुदारुण (for सुदुष्करम्)

33 S reads 33$^{c}$–34$^{b}$ after 36$^{ab}$ $K_{2}$ om (hapl) 33$^{b}$–34$^{c}$ — $^{b}$) $B_{2-4}$ $D_{01}$ आश्चर्यं (for आकाशे) S समपद्यत (for °जायत) — $^{c}$) $M_{1\ 2}$ सेनाना B (except $B_{5}$) $D_{01}$ $G_{1}$ M तदा (for ततो) — $^{d}$) $D_{6}$ च हते, $D_{7}$ निहिते (for निहते) $K_{5}$ सति (for युधि) $K_{4}$ $D_{1}$ आचार्ये विनिपातिते; $D_{8}$ आचार्येपि हते युधि; T आचार्यो ( $T_{1}$ °र्या ) निहतो युधि

34 For the sequence in S, cf v l 33 $K_{2}$ om. 34$^{abc}$ (cf v l. 33) $G_{5}$ damaged — $^{a}$) $B_{1\ 2}$ $D_{01}$ $G_{1}$ M धरां ख द्यां (by transp), $D_{4\ 7\ 8}$ द्यां विनाद्य, T धरा व्योम, $G_{2}$ धरां नभो, $G_{3-5}$ धरां ( $G_{4}$ °रा ) व्योम $K_{5}$ lacuna, $D_{3}$ च, $D_{6}$ वि (for ख) $B_{1\ 5}$ $D_{01}$ $Dn_{1}$ $D_{1-3\ 5\ 6}$ दिशो वापि, $D_{4\ 7\ 8}$ दिशश्चापि; S दश दिश (for दिशो वारि) — $^{b}$) $D_{4\ 7\ 8}$ विदिशश् (for प्रदि°) $D_{01}$ चैव; $D_{3}$ चापि; T $G_{2-4}$ अन्व (for अनु) — $^{c}$) B (except $B_{4}$) $D_{01}$ S हाहा (for अहो) $D_{5}$ शब्दानां (for भूतानां). — $^{d}$) $B_{5}$ $Dn_{2}$ $D_{3\ 6}$ भृश (for महान्)

35 $^{a}$) S देवाश्च (for देवता) — $^{b}$) $Dn_{2}$ $D_{6}$ सर्वे; $D_{4}$ पूर्वं; $D_{8}$ सर्वं (for पूर्वे) $M_{1}$ एवास्य (for ये चास्य) $Ś_{1}$ बंधव; S (except $G_{5}$) मानवा (for बान्धवा) — $^{c}$) $K_{1}$ निहितं — $^{d}$) $K_{4}$ $D_{7}$ $G_{5}$ भरद्वाजं

36 For the sequence in S, cf v l 33 — $^{a}$) $B_{1}$ $D_{4}$ च (for तु) $B_{5}$ महाराज (for जयं लब्ध्वा) — $^{b}$) S (except $G_{5}$) सिंहनादं — $^{c}$) $B_{5}$ $Dn_{2}$ $D_{2\ 3}$ सिंहनादेन — After 36, S ins

52* विचित्रजाम्बूनदभूषितध्वजं
महारथं रुक्मरथं निपातितम् ।
निशम्य कश्चिद्धि न हर्षमेयिवान्
ऋते मृधे द्रुपदसुतात्ससञ्जयात् ।

अपरान्तगिरिद्वारे कस्तं द्रोणाद्वारयत् ॥ ४०
स्त्रीपूर्वो यो नरव्याघ्रो यः स वेद गुणागुणान् ।
शिखण्डिनं याज्ञसेनिमम्लानमनसं युधि ॥ ४१
देवव्रतस्य समरे हेतुं मृत्योर्महात्मनः ।
द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ॥ ४२
यस्मिन्नभ्यधिका वीरे गुणाः सर्वे धनंजयात् ।
यस्मिन्नस्त्राणि सत्यं च ब्रह्मचर्यं च नित्यदा ॥ ४३
वासुदेवसमं वीर्ये धनंजयसमं बले ।
तेजसादित्यसदृशं बृहस्पतिसमं मतौ ॥ ४४
अभिमन्युं महात्मानं व्यात्ताननमिवान्तकम् ।
द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ॥ ४५
तरुणस्त्वरुणप्रख्यः सौभद्रः परवीरहा ।
यदाभ्यद्रवत द्रोणं तदासीद्वो मनः कथम् ॥ ४६
द्रौपदेया नरव्याघ्राः समुद्रमिव सिन्धवः ।
यद्द्रोणमाद्रवन्संख्ये के वीरास्तानवारयन् ॥ ४७
ये ते द्वादशवर्षाणि क्रीडामुत्सृज्य बालकाः ।

---

D₅.₇ अपरानपि निर्वासीद्; Dn₁ D₂ ₅ ₆ अपक्रांत गिरि द्वा(D₅ ₆ °रेद्वा)रि — ᵈ) D₁ lacuna for कस्त and द्वारयत्. K₅ B₂ ₃ ₄ (first time) ₅ Dc₁ Dn D₃ ₆ ₇ द्रोणात्क स(B₂-₅ Dc₁ Dn₁ °त्कस्त)मवारयत् (Dn₁ °यन्), B₁ ₄ (second time) द्रोणात्कस्त न्यवारयत्

41 B₂-₅ Dc₁ om (hapl.) 41–42 D₅ om 41ᵃᵇ — ᵃ) K₃ ₅ B₁ D (Dc₁ D₅ om) स्त्रीपुंसयोर् (for स्त्रीपूर्वो यो) D₇ reads from नरव्याघ्रो up to युधि (in 41ᵈ) on marg D₃ नरव्याघ्र S स्त्रीपुंसो पुरुषव्याघ्र (T °घ्र, G₁ M °घ्रो) — ᵇ) G₅ यस्तु (for य' स). Dn₁ गुणागुण (for °गुणान्) — D₅ reads 41ᶜ–42ᵈ on marg — ᶜ) D₅ G₃-₅ याज्ञसेनम् — ᵈ) Ś₁ Dn D₇ अग्लान, D₄ अज्ञान (for अम्लान) K₂ मानसं; K₄ D₁ समय, B₁ वपुष (for मनस) S अस्यतम पराजित

42 B₂-₅ Dc₁ om 42 (cf v l. 41) D₅ reads 42 on marg — ᵇ) D₂ G₃ ₄ हेतुर् D₄ मृत्यु (for मृत्योर्) — ᵈ) Dn₁ D₆ T G₁-₅ शूरा' (for वीरा) D₂ G₁ M समवारयन्; G₆ प्रत्यवारयन् (for पर्यवा) — After 42, D₅ repeats 33ᵃᵇ

43 D₁ reads 43–45 twice — ᵃ) K₁ D₇ अ- (D₇ आ)त्यधिका B₂ ₄ Dc₁ विद्या; Dn₁ सर्वे (for वीरे) — ᵇ) B₂ ₃ Dc₁ गुरो' सर्वा; Dn₁ गुणा वीरे (for गुणा' सर्वे) — ᶜ) D₇ अस्मिन् (for यस्मिन्) D₆ चास्त्राणि T G₂-₅ यस्य शस्त्राणि दिव्यानि; G₁ M₁ ₃ तस्मिन्नस्त्राणि दिव्यानि — ᵈ) D₂ सर्वदा; S नित्यदा' (for नित्यदा)

44 For the repetition in D₁, cf v l. 43 — ᵃ) B (except B₁) Dc₁ युद्धे (for वीर्ये) — ᶜ) K₅ T G₃-₅ सकाश (for सदृश)

45 For the repetition in D₁, cf v l 43 — ᵇ; = 66ᵈ — ᶜ) D₁ (both times) यात (for यान्त) — ᵈ) K₂ किं (for के) B₂-₄ Dc₁ Dn₁ D₂ ₃ शूरा (for वीरा) K₁-₄ B₁ D₂ G₂ स(K₂ B₁ D₂ G₂ त)मवारयन्; B₆ त न्यवा' (for पर्यवा')

46 G₆ om (hapl) 46–47 D₁ repeats 46ᵃᵇ after 47 — ᵃ) K₂ तरुणिस्; D₁ (both times) तरुणास् (for तरुणस्) K₁ ₂ Dn₂ G₄ M₆ तरणि; K₃ ₄ D₁ (both times) ₃ तरुणि, K₅ T G₂ ₃ तरुण; Dn₁ D₆ त्वरणि; G₁ M [s]तरुण (for त्वरुण) K₁ प्रख्या', Bom ed प्रज्ञ' B Dc₁ तरुणो दर्शनीयश्च; D₄ ₅ ₆ तरुणार्कसमप्रख्य — ᵇ) D₄ reads वीर twice — ᶜ) B₁ D₁ ₆ यदाभ्यधावद्वै द्रोणं; B₂-₄ Dc₁ D₂ °भ्यधावत्स द्रोण, B₅ °भ्यधावद्द्रोण स; T G₂-₄ °भ्ययात्स त द्रोणं — ᵈ) D₅ के शूरा पर्यवारयन्.

47 D₅ G₅ om 47 (for G₆, cf v l 46) — ᵃ) B₅ महेष्वासा, G₁ M महात्मान (for नरव्याघ्रा) D₂ द्रौपदेयान्नरव्याघ्रान् — ᶜ) B₂ यं; D₆ ₈ G₁ M ये (for यद्) Dn₁ D₆ ₄ ₆ प्रा(D₄ अ)द्रवन् G₁ ₂ M₁-₄ सखे K₅ D₂ प्रा(D₂ आ)द्रवतो रणे द्रोण. — ᵈ) Ś₁ B₁ ₃ ₄ Dc₁ Dn₁ शूरास् (for वीरास्) K₂ ₄ B₆ G₃ न्यवारयन् K₅ Dn₂ D₂-₄, ₆ ₇ के शूरा पर्य(K₅ D₂ सम)वारय(D₄ om रय)न् — After 47, D₁ repeats 46ᵃᵇ

48 K₄ D₁ om (hapl) 48–49 — ᵃ) Ś₁ D₂ M₁ एते; Dc₁ D₆ ये च; Dn₂ D₆ पंच, D₆ ते ते, T G₃-₅ येपि (for ये ते) D₅' यदाभ्यधावत द्रोण — ᵇ) K₁ क्रीडाम् (for क्रीडाम्) — ᶜ) Ś₁ K₁ ₂ अवस द् (for अवसन्) K₅ भीष्मे D₆ ₆ अस्त्राण्येवाभ्यस न्भीष्मे — ᵈ) G₁ M₁-₄ विश्रुतो G₃ वृत्तम् (for व्रतम्)

अस्त्रार्थमवसन्भीष्मे बिभ्रतो व्रतमुत्तमम् ॥ ४८
क्षत्रंजयः क्षत्रदेवः क्षत्रधर्मा च मानिनः ।
धृष्टद्युम्नात्मजा वीराः के तान्द्रोणादवारयन् ॥ ४९
शताद्विशिष्टं यं युद्धे समपश्यन्त वृष्णयः ।
चेकितानं महेष्वासं कस्तं द्रोणादवारयत् ॥ ५०
वार्धक्षेमिः कलिङ्गानां यः कन्यामाहरद्युधि ।
अनाधृष्टिरदीनात्मा कस्तं द्रोणादवारयत् ॥ ५१
भ्रातरः पञ्च कैकेया धार्मिकाः सत्यविक्रमाः ।
इन्द्रगोपकवर्णाश्च रक्तवर्मायुधध्वजाः ॥ ५२
मातृष्वसुः सुता वीराः पाण्डवानां जयार्थिनः ।
तान्द्रोणं हन्तुमायातान्के वीराः पर्यवारयन् ॥ ५३
यं योधयन्तो राजानो नाजयन्वारणावते ।
षण्मासानभिसंरब्धा जिघांसन्तो युधां पतिम् ॥ ५४
धनुष्मतां वरं शूरं सत्यसंधं महाबलम् ।
द्रोणात्कस्तं नरव्याघ्रं युयुत्सुं प्रत्यवारयत् ॥ ५५
यः पुत्रं काशिराजस्य वाराणस्यां महारथम् ।
समरे स्त्रीषु गृध्यन्तं भल्लेनापहरद्रथात् ॥ ५६
धृष्टद्युम्नं महेष्वासं पार्थानां मन्त्रधारिणम् ।

49 K4 D1 om 49 (of v l 48) —[b]) Ś1 K1 2 B3 5 क्षत्रवर्मा, D4 °धर्मेश्च, M3 4 क्षमधर्मा K1 2 Dn1 मारिष; B1 2 4 मानद°, B3 मानद, B5 भारत, G1 M1–4 मानित (for मानिन°). D5 G4 क्षत्रधर्माति (G4 °व)मानिन. —[c]) G1 M धृष्टद्युम्नात्मजान् K1 S वीरान्; B1 धीरा (for वीरा). —[d]) Dn1 S कस (for के) B2 Dn G1 3 4 M अवारयत्

50 B4 om (hapl) 50–51 M3 om (hapl) 50 —[a]) Dc1 Dn1 शक्राद्, D6 एतद्, S (M3 om) यस्माद् (for शताद्) Dn2 D4 G2–4 संयुद्धे, D1 युयुद्धे, D5 ये युद्धे, T युद्धेषु, G1 M1, 2 4 5 नो युद्धे, G5 सग्रामे (for यं युद्धे) —[b]) Ś1 समपश्यत, B (B1 om) D2 4 G1, 5 M1 2 4 5 समम(G1 M1, 2 4 5 °म)न्यंत, Dc1 प्रसरंतीह, Dn1 समपश्यति, Dn2 प्रशसतीह, D6 प्रवदंतीह, T G3 4 नावमन्यत (for समपश्यन्त) —[d]) D3 अवारयेत्

51 B1 D2 om 51 (for B4, of v l 50) —[a]) D5 वार्धकेपि (for °क्षेमि) —[b]) B1 Dn2 D3 G5 M3 4 आहरद् (for आ°) —[c]) Ś1 K1–4 D4 5 7 8 M3 अनावृ(D7 °ह)ष्टिर् (for °धृष्टिर्)

52 Ś1 K1–3 om (hapl) 52–55 —[a]) S केकया (G3 कैकेया) भ्रातर° पच —[b]) K5 D2 5 धर्मज्ञा (for धार्मिका°) K5 Dn1 D2 4 5 7 8 -वादिन°, Dn2 D3 संगरा° (for विक्रमा) —[c]) B1 वर्णाभा, B2 G1 M3 4 वर्णाश्चा, B2 (marg) 3 4 Dc1 D1 सकाशा; Dn2 -सर्माश्च, D6 -कर्णाश्च (for वर्णाश्च) B5 T G2–5 इंद्रगो(G3–5 °को)पसवर्णाश्च —[d]) B1 Dn2 D3, 6 रक्तवर्णायुधध्वजा°, B5 रक्तवर्मासुर°; D7 G1 M1 2 5 [आ]वर्णायुधध्वजा, G1 रक्तवर्णायुध°, D3 रक्तचर्मा°, T1 G2–4 रत्नमवर्णा°, G1 M रुक्म(M1 2 °रम)वर्मा°, G5 रक्तबाणा°

53 Ś1 K1–3 om 53 (of v l 52) —[a]) Dn2 D3 5 6 G3–5 मातृष्वस्र (for °ष्वसु) —[b]) S जयैषिण° (for जयार्थिनः) —[d]) D1 वीरान् D3 पर्यवारयत्; G5 प्रत्यवारयन् (for पर्यवा°)

54 Ś1 K1–3 om 54 (of v l 52) D6 om (hapl) 54–55 —[a]) G3 योधयंतं, M1 यौधयंतो T G2–4 राजानं —[b]) D4 7 वारणाह्वये (for °वते) —[c]) K4 षण्मासादपि (for °नभि) B4 Dc1 D1 2 7 G5 अपि(D2 7 °ति)संरब्धा, Dn1 G2 अभिसरब्ध (G2 °ब्धान्), Dn2 D3 भृशसरब्धा (D3 °ब्धान्), T अभिसरुद्धा (for °सरब्धा) —[d]) Dn2 D3 जिघांसत D1 प्रति, D7 8 पति (for पतिम्).

55 Ś1 K1–3 D5 om 55 (cf. v l 52, 54) K5 om from 55 up to the end of adhy 10 —[a]) B1 S वीर (for शूर). —[b]) D5 सत्यसत्त्व (for °सध) B1–4 महारथ, S जितेंद्रिय (for महाबलम्) D4 सत्यस*** बल —[d]) K4 B5 Dn2 D2 3 5 G1 M पर्यवारयत् (K4 D3 M1 3 4 °यन्), Dc1 T G2–5 समवारयत् (T G2 °यन्) (for प्रत्यवारयत्)

56 K5 om 56 (of v l 55) —[a]) Dn2 D3 पुत्र य° (by transp), G2 य पुत्र° —[b]) D1 M वारणस्यां; G2 सर्वजस्य (for वाराणस्या) T G2 4 महारथ (for °रथम्) —[c]) K1 lacuna for समरे D3 G2 समरेस्त्रेषु D3 om पु Ś1 गृध्नत; D6 गृध्रत, G5 M1 2 गृध्रत (for गृध्यन्त) —[d]) K1 यल्लेन, G4 फल्लेन (for भल्लेन) K4 B1 3–5 Dc1 Dn2 D1 3 5 6 T G3 4 [अ]पाहरद्, B2 [अ]पातयद् (for [अ]पहरद्)

57 K5 om 57 (of v l 55) —[a]) D4 lacuna for धृष्टद्युम्नं —[b]) Dn1 अनुचारिण; Dn2 D6 अस्त्रधारिण, D1 T2 G1–5 मत्रधारण (for मन्त्रधारिणम्)

युक्तं दुर्योधनानर्थे सृष्टं द्रोणवधाय च ॥ ५७
निर्दहन्तं रणे योधान्दारयन्तं च सर्वशः ।
द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ॥ ५८
उत्सङ्ग इव संवृद्धं द्रुपदस्यास्त्रवित्तमम् ।
शैखण्डिनं क्षत्रदेव के तं द्रोणादवारयन् ॥ ५९
य इमां पृथिवीं कृत्स्नां चर्मवत्समवेष्टयत् ।
महता रथवंशेन मुख्यारिघ्नो महारथः ॥ ६०
दशाश्वमेधानाजह्रे स्वन्नपानाप्तदक्षिणान् ।
निरर्गलान्सर्वमेधान्पुत्रवत्पालयन्प्रजाः ॥ ६१
पिबन्त्यो दक्षिणां यस्य गङ्गास्रोतः समापिबन् ।
तावतीर्गा ददौ वीर उशीनरसुतोऽध्वरे ॥ ६२
न पूर्वे नापरे चक्रुरिदं केचन मानवाः ।
इति संचुक्रुशुर्देवाः कृते कर्मणि दुष्करे ॥ ६३
पश्यामस्त्रिषु लोकेषु न तं संस्थास्नुचारिषु । C 7 37 B 7 10 K 7 10

---

—$^c$) $D_{n1}$ दुर्योधनस्यार्थे —$^d$) $B_1$ धृष्ट (for सृष्ट)

58 $K_5$ om 58 (cf v l 55) —$^a$) S द्रोण (for योधान्) —$^b$) $K_2$ धारयत, $D_{n2}$ $D_{3\ 6}$ S वारयंत; $D_4$ वारयेत (for दारयन्त) —$^c$) $D_4$ यात $K_2$ द्रोणाभिमुखमायात· —$^d$) Dn $D_{4,7\ 8}$ शूरा· (for वीरा·)

59 $Ś_1$ $K_{1-3\ 5}$ om (hapl) 59 (for $K_5$, cf v l 55) —$^a$) $D_4$ *त्सग; $T_2$ उत्सर्गे (for उत्सङ्ग) Dn $D_{2-6\ 8}$ एव (for इव) $D_{c1}$ सवद्ध (for संवृद्ध) —$^b$) $D_{n1}$ [आ]त्मसंभव, $D_{n2}$ [अ]स्त्रविक्रम; $D_{3\ 6}$ [आ]शुविक्र( $D_3$ °क्र )म (for [अ]स्त्रवित्तमम्) —$^c$) $K_4$ B $D_{c1}$ Dn $D_{1\ 3\ 4.6}$ शिखण्डिन $K_4$ B $D_{c1}$ $D_{1\ 2}$ T शस्त्रगुप्त, G M क्षत्रगुप्तं (for क्षत्रदेव) —$^d$) $K_4$ $B_5$ के वा; $B_{1-4}$ $D_{c1}$ को वा; $D_{n1}$ $G_5$ कस्त, $D_{1\ 2}$ के च; T $G_{3\ 4}$ के तु (for के त) $B_{1-4}$ $D_{c1}$ $D_{n1}$ अवारयत् (for °यन्)

60 $K_5$ om 60 (cf v l 55) —$^a$) $B_{2-4}$ $D_{c1}$ transp य and इमा $D_{n1}$ $D_5$ S (except $G_{3\ 4}$) सर्वां (for कृत्स्नां) $B_6$ य इमां रथघोषेण —$^b$) $D_{n1}$ $D_5$ परिवेष्टयत्; $D_8$ परिवेष्टयेत् (for समवेष्टयत्) $B_5$ महता समरेषु यत्, $D_4$ वर्मवत्स*वेष्टयन् —$^c$) $Ś_1$ K ($K_5$ om) $B_{1-4}$ D रथघोषेण (for °वंशेन) $B_6$ चर्मवत्पृथिवीं कृत्स्नां —$^d$) $Ś_1$ $K_{1-4}$ $D_6$ मुख्यान्निघ्नन् ($Ś_1$ घ्नो), $D_4$ lacuna M महाबल· $D_{n1}$ $D_{1\ 2\ 5\ 8}$ मुख्यान्निघ्नन्महारथान्

61 $K_5$ om. 61 (cf v l 55) —$^a$) $D_2$ [आ]वव्रे (for [आ]जह्रे) $D_4$ दशाश्वमेधानायज्ञे —$^b$) $K_{2\ 3}$ स्वन्नपानार्थे, $D_{c1}$ $D_3$ स्वन्नपानान्त ($D_3$ त्त), $D_{n2}$ स्वर्णपानाप्त; $D_2$ अन्नपानादि; $D_3$ स्वर्णपात्रान्त; $D_4$ समाप्तानाप्त; $D_5$ अन्नपानाप्त; $D_6$ स्वर्णदानाप्त; $D_7$ समस्तानाप्त; S समाप्तवर ($M_1$ om वर) (for स्वन्नपानाप्त) —$^c$) $Ś_1$ निर*त्वात्; $K_1$ निरममत्वात् (hypermetric), $K_2$ निर**न्; $B_2$ निराकुलान्; $D_{1\ 4}$ नि*र्गलान्; $D_6$ निर्मलान् (submetric) (for निरर्गलान्) $Ś_1$ $K_{1-4}$ Dn $D_{1\ 3-5}$ सप्तमेधान्, T सर्वेभयान् (for सर्वमेधान्) $D_3$ निर्मलान्सप्तमेधांश्च, $G_1$ M निरर्गळांस्तु त्रीन्मेधान्, $G_5$ निर्गलान्सर्वमेधाश्वान् —$^d$) $G_{3\ 4}$ पालयत् $K_4$ प्रजां

62 $K_5$ om 62 (cf v l 55) $B_2$ reads $62^{ab}$ twice —$^a$) $Ś_1$ $K_{1\ 2}$ $D_1$ पिवत्यो, $K_4$ $B_2$ (second time) पिबतो, $D_{n1}$ यावंत्यो; $D_2$ यावतो, $D_3$ यावत्यो, $D_{4\ 7}$ पीवर्यो (for पिबन्त्यो) $D_{n1}$ $D_{2-4\ 7\ 8}$ दक्षिणा· $D_{n1}$ चास्य (for यस्य) —$^b$) $D_{3\ 7}$ गगाश्रोत·, $D_{n1}$ खिंदवन्व·, $D_5$ समापिवत् (for समापिबन्) $K_1$ गगास्रोतसि तत्परा·, $B_2$ (second time) गगास्नानमपामिव, $D_4$ गंगाश्रोतसि*** —For $62^{ab}$, B ($B_1$ also) $D_{c1}$ $D_{n2}$ $D_6$ Ca d subst

79* गङ्गास्रोतसि यावत्य सिकता अप्यशेषत ।

[ B $D_6$ Ca d गगाश्रोत·सु ($B_5$ °श्रोतस्तु) याव( $D_6$ °व )त्य (for the prior half) $B_1$ स्युरशेषत; $B_{3-5}$ $D_6$ सत्य°, $D_{c1}$ सत्यनेकश (for अप्यशेषत) $B_2$ शक्ता पातुमशेषत, Ca d सिकता स्युरशेषत· (with the remark इति पाठ साधु in both) (for the posterior half) ]

On the other hand, S subst for $62^{ab}$

80* विसृष्टा दक्षिणा यस्य गङ्गाजलमवारयत् ।

—$^c$) $T_1$ तावतीर्या, $G_1$ $M_{1-4}$ तावद्रा· ($M_3$ °द्गौ) स; $M_5$ तावती· स (for तावतीर्गा) $D_5$ विमान्; T $G_{2-5}$ धीमान् (for वीर)

63 $K_5$ om. 63 (cf v l 55). —$^c$) $D_{n2}$ $D_6$ इव (for इति) $B_{1-4}$ $D_{c1}$ य, $M_{3-5}$ सं (for स)

64 $K_5$ om. 64 (cf v l 55) —$^a$) $B_{3-5}$ $D_6$ पश्यामि $D_4$ lacuna for लोकेषु —$^b$) $K_1$ सस्थातु·; $B_1$ सस्थासु, $B_2$ सस्थानु·; $B_{3-5}$ $D_{c1}$ $D_{n2}$ $D_{3\ 6}$ संस्थान; $D_{n1}$ सस्थाणु; $D_{4\ 7\ 8}$ सस्थाणु; $D_5$ स्व

जातं वापि जनिष्यं वा द्वितीयं वापि संप्रति ॥ ६४
अन्यमौशीनराच्छैब्याद्धुरो वोढारमित्युत ।
गतिं यस्य न यास्यन्ति मानुषा लोकवासिनः ॥ ६५
तस्य नप्तारमायान्तं शैब्यं कः समवारयत् ।
द्रोणायाभिमुखं यान्तं व्यात्ताननमिवान्तकम् ॥ ६६
विराटस्य रथानीकं मत्स्यस्यामित्रघातिनः ।
प्रेप्सन्तं समरे द्रोणं के वीराः पर्यवारयन् ॥ ६७
सद्यो वृकोदराज्जातो महाबलपराक्रमः ।
मायावी राक्षसो घोरो यस्मान्मम महद्भयम् ॥ ६८
पार्थानां जयकामं तं पुत्राणां मम कण्टकम् ।
घटोत्कचं महाबाहुं कस्तं द्रोणादवारयत् ॥ ६९
एते चान्ये च बहवो येषामर्थाय संजय ।
त्यक्तारः संयुगे प्राणान्किं तेषामजितं युधि ॥ ७०
येषां च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः ।
हितार्थी चापि पार्थानां कथं तेषां पराजयः ॥ ७१
लोकानां गुरुरत्यन्तं लोकनाथः सनातनः ।

---

स्थान (for सस्थास्नु) K4 D1 न तं स्थाष्णु (D1 °स्नु) चरिष्णु च, S न च स्था(G1 M1 2 तरस्था, M3-5 स स्था)स्नु च(G5 प)रिष्णु च — c) K6 B1 3-5 D1 2 7 T चापि; G1 M वाथ (for वापि) Ś1 K3 B Dc1 D1 2 जनिष्यंतं, Dn2 D8 भविष्यं वा, T G2 भविष्यद्वा, G3 4 जनिष्या(G4 °ष्य)द्वा (for जनिष्यं वा) Dn1 जात वा जनयिष्यति — d) D6 न समं (for द्वितीयं). K2 B4 5 Dc1 Dn D1-3 5-8 चापि (for वापि) K2 B Dc1 सांप्रतं, D8 न प्रति (for संप्रति) D4 द्वितीयं वासव प्रति, S न च संप्रति वर्तते

65 K5 om 65 (of v l. 55) — a) G1 M1-4 अन्यद् (for अन्यम्) D8 मन्यस्त्वौशीनराच्छैब्याद् — b) Ś1 K1 4 Dn2 D5 8 धुरं, D1 ध्रुवं (for धुरो) G1 M3-5 अस्य तु (for इत्युत) M1 2 धुरो वोधारमस्य तु. — G3 om 65c–66d — c) Ś1 K1-4 [अ]नुयास्यति, B5 न जानति, D4 न यास्यं वा (for न यास्यन्ति). — d) B2 3 Dc1 T G1 4 5 M मनुष्या

66 K5 G3 om 66 (of v l. 55, 65) Dc1 reads 66bc on marg (see m) — b) K1-3 D3 शूरं; K4 सूर; Dn2 सैव्य; D5 नैव्य (for शैव्य) Ś1 नैव कस्त समवारयत्; B1-4 शैब्य (B1 सेव्यं) के प्रत्यवारयत्; G1 2 4 5 M के वीरा पर्यवारयन् — Ś1 K1-3 om. (hapl.) 66c–69d G1 M1 2 om 66c–67d — c) B2 (marg as in text), 3 4 द्रोणाभिमुखमायात — d) = 45b

67 Ś1 K1-3 5 G1 M1 2 om 67 (of v 1 55, 66) For the repetition of 67ab in D4, see below — a) D4 (both times) विराट स (for विराटस्य) — D4 om 67bc — b) M3-5 मात्स्यस्य B2-4 ॰कर्षिण; Dc1 ॰कर्शिन; D8 ॰कर्शिन (for घातिन) — c) Dn1 यांतं च; D2 5 युक्तं स, D7 8 यांत स, M3-5 प्रेक्षत (for प्रेप्सन्त). B2-4 Dc1 विजय (Dc1 °ये) सद्ये (B2, 3 Dc1 युद्धे); Dn1 D2 5 7 8 समरे वीर (for समरे द्रोण) Dn2 D3 6 द्रोणस्याभिमुखं यांत — d) B2-4 प्रत्यवारयन् — After 67, D4 reads 69ab for the first time repeating it in its proper place, followed by the repetition of 67ab

68 Ś1 K1-3 5 om 68 (of v 1 55, 66). — a) B4 मन्ये (for सद्यो) — c) D5 रक्षसां, D8 राक्षसां K4 B1 4 5 Dn2 D1-3 6 8 वीरो (for घोरो) — d) D4 7 महाभय Dn1 यस्मान्मे सुमहद्भयं

69 Ś1 K1-3 5 om 69 (of v. 1 55, 66) For the repetition in D4, of v 1 67 — a) G5 पालयन् (for पार्थानां) D7 om जय K4 lacuna, B5 D8 च; Dn2 D6 वै (for त) — c) Dc1 S महाकाय; D1 °स्मान (for °बाहुं) — d) S हैडिंब के (G5 M1 2 °ब को, M3 4 °बं के) न्यवारयन् (G5 M1-4 °यत्) — After 69, S ins a passage given in App I (No 3)

70 K5 om 70 (of v 1 55). — b) G4 M1 एषाम् — c) B2-4 Dc1 D6 समरे (for सयुगे) — d) Ś1 अजितैर् Dn1 किमेषा न जित युधि

71 K5 om 71 (of v 1. 55) — a) K1 G1 एषां. Dn1 D5 8 व्याघ्र — b) B1 गदाधर, M4 न्युपाश्रय (for व्यपाश्रय) — Dn1 D4 7 om (hapl) 71cd — c) Ś1 K1 3 D6 8 G5 हितार्थे, K4 हितार्थे; B3 Dn2 हितार्थेश्च (for हितार्थी). S चैव (for चापि)

72 K5 om 72 (of v 1 55) — a) K2 B4 5 Dn2 D8 6 गुरुरत्यर्थं; D2 5 °राद्य स, D3 °रूपको (for °रत्यन्तं) — b) B5 लोकनाय, D5 सर्वलोक (for लोकनाथ) Dn2 om न K4 लोकनायसनातम. — c) S1 K1-4 B4 D5 रथे, D4 7 नरो (for रणे). T G3 4 लोकनाथो; G2 सदा नाथो (for रणे नाथो). — d) D4 7 दिव्ये Ś1 दिव्यारमज; B1-4 Dc1 °त्मक;

नारायणो रणे नाथो दिव्यो दिव्यात्मवान्प्रभुः ॥ ७२
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः ।
तान्यहं कीर्तयिष्यामि भक्त्या स्थैर्यार्थमात्मनः ॥ ७३

इति श्रीमहाभारते द्रोणपर्वणि नवमोऽध्यायः ॥ ९ ॥

## १०

धृतराष्ट्र उवाच ।
शृणु दिव्यानि कर्माणि वासुदेवस्य संजय ।
कृतवान्यानि गोविन्दो यथा नान्यः पुमान्क्वचित् १
संवर्धता गोपकुले बालेनैव महात्मना ।
विख्यापितं बलं बाह्वोस्त्रिषु लोकेषु संजय ॥ २
उच्चैःश्रवस्तुल्यबलं वायुवेगसमं जवे ।
जघान हयराजं यो यमुनावनवासिनम् ॥ ३
दानवं घोरकर्माणं गवां मृत्युमिवोत्थितम् ।
वृषरूपधरं बाल्ये भुजाभ्यां निजघान ह ॥ ४
प्रलम्बं नरकं जम्भं पीठं चापि महासुरम् । C 7 336 B 7 ॥ K 7 ॥

---

B6 °त्मवित्, Dn2 D8 6 °त्मना; G2–4 °र्यवान् (for °त्मवान्). K1–4 D1 दिव्यो दिव्यपराक्रम°, G6 दिव्या दिव्यार्थवान्प्रभु°

73 K6 om. 73 (of v l 55). —ᵃ) T2 G2 transp दिव्यानि and कर्माणि B1 चित्राणि (for दिव्यानि) —ᵈ) B1 8 धैर्यार्थम् (for स्थैर्या°) K3 भक्त्या स्थैर्यान्ममात्मन ; Dn2 D8 6 कार्यार्थमिह चात्मन°

Colophon om in K6, Ś1 missing — *Sub-parvan* Editions द्रोणाभिषेकपर्व — *Adhy name* K1 3 प्रश्न ; K2 Dn1 G1 M1 2 धृतराष्ट्रप्रश्न ; D2 4 5 धृतराष्ट्रचिंता —*Adhy no* (figures, words or both) K3 B1 3 Dn1 D8 8 9 (as in text), D3 10 —*Śloka no* Do1 73, Dn1 75

## 10

☞ This adhy is missing in Ś1 (cf v l. 7 1 1) K6 om. this adhy (cf v l 7 9 55)

1 G6 om the ref —ᵃ) Cd transp दिव्यानि and कर्माणि —ᶜ) S विश्वात्मा (for गोविन्दो) —ᵈ) D4 यथा नान्यस्करिष्यति

2 ᵃ) B4 Dn1 D4 संवर्धि( B4 °र्ध )तो (for संवर्धता) B1–4 Do1 गोकुले वर्धमानेन —ᵇ) B3 रामेणैव; T G2–6 बालेन च (for बालेनैव) — After 2ᵃᵇ, D4 7 8 ins :

81* शकटं पूतनां हत्वा भग्नौ च यमलार्जुनौ ।
[ D4 8 पूतना D4 हित्वा ]

—ᶜ) K1 विज्ञापित; G1 M प्रख्यापित (for विख्या°) T G3–5 बाल्ये (for बाह्वोस्) —ᵈ) K4 सजय, D7 सजये (for सजय)
— For 3–5, S subst

82* पूतनां शकुनिं हत्वा केशिनं चैव वाजिनम् ।
ऋषभं धेनुकं चैव अरिष्टं च महाबलम् ।
वृकं हत्वा महाबाहुं धृत्वा गोवर्धनं गिरिम् ।
चाणूरं मुष्टिकं चैव रङ्गमध्ये निहत्य च ।

[ (L 1) T G2 3 5 शकट (for शकुनिं) M1 2 पूतना शकटं मुक्त्वा (for the prior half) T G2 वाजिन° — (L 3) T G2 गवां मुक्त्वा (T2 मोक्ता), M1 2 वृका न्हत्व (for वृकं हत्वा) M3 4 महाबाहुर् G1 3 5 वृका न्मुक्त्वा (G3 गवां मोक्त्वा, G5 गा[ *inf lin* दा ]व मुक्त्वा) महाबाहुर् (for the prior half) G3 कृत्वा (for धृत्वा) — (L 4) T G2 चाणूर G3 मूषिक (for मुष्टिक) ]

3 ᵃ) Ś1 तुल्यबलो —ᵇ) B1–3 Do1 मातरिश्व (for वायुवेग) Ś1 -समो (for -सम) D6 बले (for जवे) —ᶜ) Ś1 जगाम (for जघान) B1–4 Do1 हयराजं स; B3 (marg) 5 Dn2 D8 हयराजान, D6 च हयं राजन्; D6 समरे राजा (for हयराज यो) Cd cites हयराज (as in text) —ᵈ) B (B3 also as in text) Do1 -तीर ; D4 तट, D6 जल (for वन)

4 ᵇ) D4 7 इव स्थित; D8 उपस्थितं (for इवोत्थितम्) —ᶜ) Ś1 K1 3 4 D1 बाल्यो, D5 7 लोके (for बाल्ये) —ᵈ) Dn1 D4 7 जानुभ्यां (for भुजाभ्यां), B4 च; B6 स; Dn2 तं (for ह)

8

मुरुं चाचलसंकाशमवधीत्पुष्करेक्षणः ॥ ५
तथा कंसो महातेजा जरासंधेन पालितः ।
विक्रमेणैव कृष्णेन सगणः शातितो रणे ॥ ६
सुनामा नाम विक्रान्तः समग्राक्षौहिणीपतिः ।
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ॥ ७
बलदेवद्वितीयेन कृष्णेनामित्रघातिना ।
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ८
दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः ।
आराधितः सदारेण स चास्मै प्रददौ वरान् ॥ ९
तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।
निर्जित्य पृथिवीपालानवहत्पुष्करेक्षणः ॥ १०
अमृष्यमाणा राजानो यस्य जात्या हया इव ।
रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ११
जरासंधं महाबाहुमुपायेन जनार्दनः ।
परेण घातयामास पृथगक्षौहिणीपतिम् ॥ १२
चेदिराजं च विक्रान्तं राजसेनापतिं बली ।
अर्घे विवदमानं च जघान पशुवत्तदा ॥ १३
सौभं दैत्यपुरं स्वस्थं शाल्वगुप्तं दुरासदम् ।

---

5 a) K1 जवूं, B1–4 Do1 पीठ (for जम्भ) — b) Ś1 K1 3 4 पीसं चापि, B1 2 4 मुरु जंभ, B3 मुरं जंवं, Do1 मुरं जंभ, D3 अरिष्टं च (for पीठं चापि) B1 महाभुज (for °मुरम्) — c) K1 4 D4 8 मुरं, K2 सुरं; Dn1 मरु°; D1 मुमु (for मुरु) B5 Dn D3–8 चामरं, D2 चातक (for चाचल°) B1–4 Do1 हयग्रीव महाकायम् — d) B2–4 Do1 पुरुषोत्तम (for पुष्करे क्षण)

6 a) K4 कंशो, D6 केशी (for कंसो) S महाराजो (G5 °बाहुर्) (for °तेजा) — c) D2 कर्णेन, M कृष्णस्य (for कृष्णेन) — d) D2 क्षणश°, D5 गणश (for सगण) K1 3 4 B1 5 Dn2 D2 5 6 पातितो; D4 7 8 शासितो (for शातितो) B2–4 Do1 निहत सगणो रणे, S सानुबन्धाश्रयो हत

7 a) D3 सुनाम, G1 M3–5 सुदामा (for सुनामा) K1, 2 4 Dn1 D1 नाम विख्यात°, K3 रणविख्यात, B5 रणविक्रांत°, Do1 बलविक्रांत, D7 चाथ मित्रघ्न° (for नाम विक्रान्त°) D4 corrupt — b) D3 सम्यगक्षौहिणी, T G1 5 M1–4 समग्रा(M1 2 सहस्रा)क्षोहिणी B2 3 Do1 वृत° (for पति°) — B4 om 7cd — c) Dn1 D5 8 G1 M भोजराजन्य°, D3 4 7 °राजश्च (for °राजस्य). Cv as in text — d) D4 भ्रातर सत्यवीर्यवान् Cv cites भ्राता (as in text)

8 a) Ś1 K1–4 Dn1 D1 4 5 7 8 मनस्वी, Cd तरस्वी (as in text) — d) Ś1 T G2–5 ससेन, K1 2 4 D (except Do1) स शूर° (for ससैन्य°) T G3–5 सेनवान् (for °राट्)

9 a) Ś1 दुर्वासाश्चैव T2 G3 विप्रेंद्रस्, G1 2, 4 5 M विप्रश्च (for विप्रर्षिस्). — b) Dn2 D3 तप, D6 तत (for तथा) — d) Dn2 D3 6 T G2–5 वरं (for वरान्)

10 a) G4 सदा (for तथा). D6 गंधार M3 राजन्य (for राजस्य) — b) Dn2 D5 6 8 T2 G3–5 Ca d वीर, Do1 धीर (for वीर°) — d) B D1 2 6 8 T1 भावहत्; Dn1 अहनत्; G5 अहरत्; Cd भवहत् (as in text) B2–4 S पुरुषर्षभ°, D1 पुष्करेक्षया (for °क्षण°)

11 a) Cv राजानं (for °नो) — b) T G3–5 [ऽ]भवन्, G2 [ऽ]वहन् (for यस्य) Dn2 D3 यस्य याता; G1 M सिंधुजाता (for यस्य जात्या) — c) D4 रथे वैवाहके युक्ता; D7 8 रथैर्वैवाहिकैर्युक्ता, Cv वैवाहिके रथे युक्ता — d) K1 D4 कृतव्रण°; D7 क्षतव्रणा (for कृत°) Cv प्रतोदनकृतव्रणा°

12 a) B1–3 Do1 S (except G2) महाराज (for °बाहुम्) — b) D4 उपयाने (for उपायेन) — c) T G3 भीमेन, Ca d परेण (as in text) — d) K1 पृथगक्षौहिणीं पतिं, B1 3 5 Do1 D2 7 8 S समग्रा(D7 8 °हस्रा)क्षौ(T G1 M1–4 °क्षो)हिणीपतिं, B2, 4 समग्राक्षौहिणीश्वर

13 b) K3 गज, D3 राजन् (for राज) K4 D7 G1 बलिं, M3–5 कृतं (for बली) — c) K2 4 B3 D5 अर्घ्ये, Do1 Dn1 D4 अर्थे, D3 यज्ञे (for अर्घे). D6 विवादमाने (for विवदमान) Ś1 K2 4 D1 वै, B2–4 Do1 तु (for च) K1 अर्घेण विवदामान (sic), S अर्घ्येण विवदितं वीर — d) G1 M जघान पुरुषोत्तम°

14 a) K1–4 दैत्यपतिं; D2 5 °वर, D6 दैत्य परं; D7 यज्ञे पुरं (for दैत्यपुर) — b) K1–4 D7 S

मुरुं चाचलसंकाशमवधीत्पुष्करेक्षणः ॥ ५
तथा कंसो महातेजा जरासंधेन पालितः ।
विक्रमेणैव कृष्णेन सगणः शातितो रणे ॥ ६
सुनामा नाम विक्रान्तः समग्राक्षौहिणीपतिः ।
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ॥ ७
बलदेवद्वितीयेन कृष्णेनामित्रघातिना ।
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ८
दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः ।
आराधितः सदारेण स चास्मै प्रददौ वरान् ॥ ९
तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।
निर्जित्य पृथिवीपालानवहत्पुष्करेक्षणः ॥ १०
अमृष्यमाणा राजानो यस्य जात्या हया इव ।
रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ११
जरासंधं महाबाहुमुपायेन जनार्दनः ।
परेण घातयामास पृथगक्षौहिणीपतिम् ॥ १२
चेदिराजं च विक्रान्तं राजसेनापतिं बली ।
अर्घे विवदमानं च जघान पशुवत्तदा ॥ १३
सौभं दैत्यपुरं स्वस्थं शाल्वगुप्तं दुरासदम् ।

---

5 $^{a}$) $K_1$ जचूं; $B_{1-4}$ $Dc_1$ पीठ (for जम्भ) —$^{b}$) $Ś_1$ $K_{1\,3\,4}$ पीठं चापि, $B_{1\,2\,4}$ मुरुं जभ; $B_3$ मुर जंवं, $Dc_1$ मुरं जभ, $D_3$ अरिष्ट च (for पीठं चापि) $B_1$ महाभुजं (for °मुरम्) —$^{c}$) $K_{1\,4}$ $D_{4\,8}$ मुरं; $K_2$ सुरं; $Dn_1$ मरु, $D_1$ मुमुं (for मुरुं) $B_5$ Dn $D_{3-8}$ चामरं; $D_2$ चांतक (for चाचल) $B_{1-4}$ $Dc_1$ हयग्रीव महाकायम् —$^{d}$) $B_{2-4}$ $Dc_1$ पुरुषोत्तम (for पुष्करेक्षण)

6 $^{a}$) $K_4$ कशो, $D_6$ केशी (for कंसो) S महाराजो ($G_5$ °बाहुर्) (for °तेजा) —$^{c}$) $D_2$ कर्णेन, M कृष्णस्य (for कृष्णेन) —$^{d}$) $D_2$ क्षणश°, $D_5$ गणश (for सगण) $K_{1\,3\,4}$ $B_{1\,5}$ $Dn_2$ $D_{2\,5\,6}$ पातितो; $D_{4\,7\,8}$ शासितो (for शातितो) $B_{2-4}$ $Dc_1$ निहत सगणो रणे, S सानुबधाश्रयो हत

7 $^{a}$) $D_3$ सुनाम, $G_1$ $M_{3-5}$ सुदामा (for सुनामा). $K_{1\,3\,4}$ $Dn_1$ $D_1$ नाम विख्यात; $K_3$ रणविख्यात; $B_5$ रणविक्रांत°, $Dc_1$ बलविक्रांत, $D_7$ चाथ मित्रघ्न° (for नाम विक्रान्त°) $D_4$ corrupt —$^{b}$) $D_3$ सम्यगक्षौहिणी; T $G_{1\,5}$ $M_{1-4}$ समग्रा($M_1$ = सहस्रा)क्षोहिणी $B_{2\,3}$ $Dc_1$ वृत (for पति°) — $B_4$ om $7^{cd}$ —$^{c}$) $Dn_1$ $D_{5\,8}$ $G_1$ M भोजराजन्य; $D_{3\,4\,7}$ °राजश्च (for °राजस्य). Cv as in text —$^{d}$) $D_4$ भ्रावर सत्यवीर्यवान् Cv cites भ्राता (as in text)

8 $^{c}$) $Ś_1$ $K_{1-4}$ $Dn_1$ $D_{1\,4\,5\,7\,8}$ मनस्वी, Cd तरस्वी (as in text). —$^{d}$) $Ś_1$ T $G_{2-5}$ ससेन, $K_{1\,2\,4}$ D (except $Dc_1$) स शूर (for ससैन्य°) T $G_{3-5}$ सेनवान् (for °राट्)

9 $^{a}$) $Ś_1$ दुर्वासाश्चैव $T_2$ $G_3$ विप्रेंद्रस्, $G_{1\,2\,4\,5}$ M विप्रश्च (for विप्रर्षिस्). —$^{b}$) $Dn_2$ $D_2$ तप; $D_6$ तत (for तथा) —$^{d}$) $Dn_2$ $D_{3\,6}$ T $G_{2-5}$ वरं (for वरान्)

10 $^{a}$) $G_4$ सदा (for तथा). $D_6$ गंधार $M_3$ -राजन्य (for राजस्य) —$^{b}$) $Dn_2$ $D_{5\,6\,8}$ $T_2$ $G_{3-5}$ Ca d वीर, $Dc_1$ धीर (for वीर) —$^{d}$) B $D_{1\,2\,6\,8}$ $T_1$ आवहत्, $Dn_1$ अहनत्, $G_5$ अहरत्, Cd अवहत् (as in text) $B_{2-4}$ S पुरुषर्षभ°, $D_1$ पुष्करेक्षया (for °क्षण)

11 $^{a}$) Cv राजान (for °नो). —$^{b}$) T $G_{3-5}$ [ऽ]भवन्, $G_2$ [ऽ]वहन् (for यस्य) $Dn_2$ $D_8$ यस्य याता; $G_1$ M सिंधुजाता (for यस्य जात्या) —$^{c}$) $D_4$ रथे वैवाहके युक्ता; $D_{7\,8}$ रथैर्वैवाहिकैर्युक्ता, Cv वैवाहिके रथे युक्ता —$^{d}$) $K_1$ $D_4$ कृतव्रण, $D_7$ क्षतव्रणा (for कृत°). Cv प्रतोदनकृतव्रणा.

12 $^{a}$) $B_{1-3}$ $Dc_1$ S (except $G_3$) महाराज (for °बाहुम्) —$^{b}$) $D_4$ उपयाने (for उपायेन) —$^{c}$) T $G_3$ भीमेन, Ca d परेण (as in text) —$^{d}$) $K_1$ पृथगक्षौहिणीं पतिं, $B_{1.\,3\,5}$ $Dc_1$ $D_{2.\,7\,8}$ S समग्रा($D_{7\,8}$ °हस्रा)क्षौ(T $G_1$ $M_{1-4}$ °क्षो)हिणीपतिं, $B_{2\,4}$ समग्राक्षौहिणीश्वर

13 $^{b}$) $K_3$ गज, $D_3$ राजन् (for राज) $K_4$ $D_7$ $G_1$ बलिं, $M_{3-5}$ कुर्वं (for बली) —$^{c}$) $K_{2\,4}$ $B_2$ $D_5$ अर्घ्ये, $Dc_1$ $Dn_1$ $D_4$ अर्थे, $D_3$ यज्ञे (for अर्घे). $D_6$ विवादमाने (for विवदमान) $Ś_1$ $K_{3\,4}$ $D_1$ वै; $B_{2-4}$ $Dc_1$ तु (for च) $K_1$ अर्घेण विवदामान (sic), S अर्घ्येण विवदित वीरं —$^{d}$) $G_1$ M जघान पुरुषोत्तम°

14 $^{a}$) $K_{1-4}$ दैत्यपतिं, $D_{2\,5}$ °वर, $D_6$ दैत्यं परं; $D_7$ यज्ञे पुरं (for दैत्यपुर) —$^{b}$) $K_{1-4}$ $D_7$ S

समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥ १४

अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
वत्सगर्गकरूषांश्च पुण्ड्रांश्चाप्यजयद्रणे ॥ १५

आवन्त्यान्दाक्षिणात्यांश्च पार्वतीयान्दशेरकान् ।
काश्मीरकानौरसकान्पिशाचांश्च समन्दरान् ॥ १६

काम्बोजान्वाटधानांश्च चोलान्पाण्ड्यांश्च संजय ।
त्रिगर्तान्मालवांश्चैव दरदांश्च सुदुर्जयान् ॥ १७

नानादिग्भ्यश्च संप्राप्तान्व्रातानश्वशकान्प्रति ।
जितवान्पुण्डरीकाक्षो यवनांश्च सहानुगान् ॥ १८

प्रविश्य मकरावासं यादोभिरभिसंवृतम् ।
जिगाय वरुणं युद्धे सलिलान्तर्गतं पुरा ॥ १९

युधि पञ्चजनं हत्वा पातालतलवासिनम् ।
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् ॥ २०

खाण्डवे पार्थसहितस्तोषयित्वा हुताशनम् । E 7 / B 7 / K. 7

---

(except G5) साल्वगुप्तं; D6 सुगुप्त च (for शाल्वगुप्त) — c) Ś1 वि*त्वा (for विक्रम्य) — d) D4 भारत (for माधव)

15 a) K4 अंगा वगा; T G1 3 5 M अगवग, G4 अकवंक (for अङ्गान्वङ्गान्) K4 Dc1 D5 7 G3 4 M1-3 कलिंगाश्च (for कलिङ्गांश्च) — b) B1 Dn2 T1 G4 मगधान्। K1 कैशि (for काशि) K4 B1-3 Dn2 D2-8 कोशलान्; Dc1 कौशलान्, Dn1 कौशिकान्; G3 4 कौसलान् (for कोसलान्) — c) K1-3 Dn1 D2 7 वत्सवर्गं; B1 2 (marg) 3-5 D1 व(B2 m वा)त्स्यगार्ग्यं, B4 मात्स्यगार्ग्यं; D3 वत्सदंतान्; D6 तथा वत्स; D8 वत्स्यवर्गं (for वत्सगर्गं) Dc1 वात्स्यंगार्ग्यं कलिंगांश्च; Dn2 करूषां मालवांश्चैव, S वत्सभर्गं(G1 M वत्सकांश्च; G5 वात्स्यभर्ग्यं)करूशांश्च — d) B2-5 Dc1 Dn2 पौंड्रांश्च, Dn1 D4 पुंड्रांश्च; D1 सुह्मांश्च; D5 पुंड्राश्च; D7 पुड्रांश्च; M3 4 पुण्यांश्च (for पुण्ड्रांश्च) B2-4 Dc1 चैव, T G1 3 4 M3-5 चाथ (for चापि) D4 [अ]जयन् (for [अ]जयद्)

16 a) K1 आवन्त्यान्; K4 T आवन्त्यां, G3 आवंत्या (for आवन्त्यान्). Dn1 दक्षिणात्यांश्च (for दाक्षि°) — b) D1 पार्वतेयान् K1 दशीकरान्, B5 G3 कशेरकान्, Dc1 दुरासदान्; Dn2 D8 कसेरुकान्; D4 वसेकरान्; T G2 4 M5 कशेरुकान्; G1 M1-4 दशेरुकान्, G5 करेणुकान् (for दशेरकान्) — c) Ś1 कश्मीरकान्, Dc1 काश्मीरजान् (for °रकान्) K3 B D1 औरसिकान्; D8 जातुधानान्; D5 औकरसान्; D8 केसरकान्; T G2 3 औरभ(G2 °भ्र)कान्; G1 M1 2 औदरिकान्; G4 औभरकान्; G5 औरम्भतान् (for औरसकान्) — d) K1 समर्दकान्; B Dc1 Dn2 समुद्रकान्, Dn1 D2 4 5 7 8 सचर्दु(D7 8 दुं)रान्; D1 समर्दरान्, D6 समाधय, T G2-4 समंत(G2 °द)कान् (for समन्दरान्)

17 a) Ś1 D1 कांभोजान् Dn1 D1 वारधानांश्च, Dn2 D8 वाटधाना(Dn2 °नां)स्तु, D6 वाह्लिकांश्चैव; S माल(T G1 M °ळ)वांश्चैव (for वाटधानांश्च) — b) Ś1 D5 चोड्रान्; K1 चोड्यान्, K2 3 चौड्रान्; Dn1 चौंडान्; Dn2 D8 पुंड्रान्, D4 लोचान्, D6 सुवान्, T G1 5 M चोळान्; G4 चौलान् (for चोलान्) Dn2 D8 अन्यांश्च, D6 पाडुश्च (for पाण्ड्यांश्च) T G2-5 माधव (for संजय) — c) B3 (marg as in text) विदर्भान् (for त्रिगर्तान्) Dn2 मालवास्वष्टान्; D8 मालवान्स्वस्तान्; T G2-5 मगधांश्चैव (for मालवांश्चैव) — d) Ś1 K4 वरदांश्च, B5 दारदांश्च, Dn2 D6 पारदांश्च (for दरदांश्च) Dn2 सदुर्जयान् S (except G1) क(M द)रदांश्चैव दुर्जयान्

18 a) D8 om च Dn1 सप्राप्ता; Dn2 सभांतान् (for संप्राप्तान्) — b) Dn1 D5 जातानश्व; Dn1 जातानाश्च (for व्रातानश्व) B1 4 5 Dn2 D8 खषां (Dn2 वसां)श्चैव शकांस्तथा, B2 3 Dc1 D4 7 8 नृपांश्चैव (D4 7 8 राजानश्च) शकास्तथा; D6 (orig) रतिचोका शकान्प्रति, D6 (marg sec m) एतानन्यान्प्रकामत, T G1-4 M आंध्रान्म्ले(G1 M1 2 अध्रम्ले, G4 आंधान्म्ले, M3-5 अध्रान्म्ले)च्छगणानपि, G5 आंध्रम्लेच्छगणानपि — d) G5 (inf lin as in text) सवनांश्च (for यवनांश्च) Ś1 K (K5 om) B1 4 Dn D1-5 7 8 यवन च स(K1 म)हानुग, D6 धनजयसहानुग

19 b) D7 वारीभिर् (for यादोभिर्) D1 यादोगणनिषेवित; D6 जादोरतिससवृतं (sic) — d) Dn2 D2 3 5 8 तदा (for पुरा) Ś1 सलिलाभिगंत पुरा

20 a) B5 युद्धे, G1 M तत्र (for युधि) — b) T G5 M3 पाताळतलं M1 2 वासिन (for -वासिनम्) B5 दैत्य पाताळवासिन — d) Ś1 K1 3 4 D1 transp दिव्यं and शङ्खम् K4 om वाप्त

21 a) K4 om मध्ये — d) Ś1 K1 2 चक्रे (for चर्क) Ś1 महायशा, B2-4 Dc1 तथैव च; B4 D8 महाबलं; G1 M1 2 जनार्दन (for महाबल),

आग्नेयमस्त्रं दुर्धर्षं चक्रं लेभे महाबलः ॥ २१
वैनतेयं समारुह्य त्रासयित्वामरावतीम् ।
महेन्द्रभवनाद्वीरः पारिजातमुपानयत् ॥ २२
तच्च मर्षितवाञ्शक्रो जानंस्तस्य पराक्रमम् ।
राज्ञां चाप्यजितं कंचित्कृष्णेनेह न शुश्रुम ॥ २३
यच्च तन्महदाश्चर्यं सभायां मम संजय ।
कृतवान्पुण्डरीकाक्षः कस्तदन्य इहार्हति ॥ २४
यच्च भक्त्या प्रपन्नोऽहमद्राक्षं कृष्णमीश्वरम् ।
तन्मे सुविदितं सर्वं प्रत्यक्षमिव चागमत् ॥ २५
नान्तो विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः ।
कर्मणः शक्यते गन्तुं हृषीकेशस्य संजय ॥ २६
तथा गदश्च साम्बश्च प्रद्युम्नोऽथ विदूरथः ।
आगावहोऽनिरुद्धश्च चारुदेष्णश्च सारणः ॥ २७
उल्मुको निशठश्चैव झल्ली बभ्रुश्च वीर्यवान् ।
पृथुश्च विपृथुश्चैव समीकोऽथारिमेजयः ॥ २८
एते वै बलवन्तश्च वृष्णिवीराः प्रहारिणः ।

22 $^{a}$) Do1 समासाद्य (for °रुह्य) — $^{b}$) K1 3 4 D1 तोषयित्वा, Dn2 D3 6 द्राव° (for त्रास°) Ś1 K1 3 4 D1 मनस्विनीं; K2 मनीषिणीं, D5 [अ]मरावार्ति (for °वतीम्) — $^{c}$) D4 भुवनाद् (for भवनाद्) Ś1 महेंद्रात्तत्पुरं गत्वा, K1–4 D1 महेंद्रांत·पुर (K4 °रो) गत्वा — $^{d}$) Ś1 अवाप्तवान्, Dn2 D3 6 उपाहरत् (for °नयत्)

23 $^{a}$) Dn2 D3 तत्तु, D5 6 तत्र (for तच्च) — After 23$^{ab}$, Dn1 D4 7 8 ins

83* गोवर्धनस्योद्धरणे ज्ञात्वा वै समसज्जत ।

[Dn1 समजातय°, D7 समसज्जता (for °सज्जत)]

— $^{c}$) D2 राजा (for राज्ञां) Dn1 नाप्यजितं, Dn2 वाप्य°, D2 T G2 4 चाप्यजित, D7 चाथ जित; G6 च न कृत°, M3 चाविदित, M4 चाविजितं (for चाप्य°) B2 Dn M3 4 किंचित्, D2, 5 T G2–5 कश्चित् (for कंचित्) B1 D3 राज्ञश्चाप्यजितान्काश्चित् — $^{d}$) B2 5 Do1 Dn2 D2–4 6–8 S शुश्रुम D5 कृष्णं नेह न शुश्रुम

24 $^{a}$) T1 G3 अस्या यन्, T2 G2 4 अस्यां यन्, G1 M यच्च वै, G5 अस्याय (for यच्च तन्). — $^{b}$) Dn1 केशव (for संजय) — B3 reads 24$^{c}$–25$^{d}$ on marg — $^{d}$) T G2–5 तदन्य° क (by transp) B1 D2 इव (for इह) S करिष्यति (for इहार्हति) Ś1 तद्भवाञ्श्रोतुमर्हति; B2–4 Do1 कोन्य° कर्तुं तयार्हति

25 B3 reads 25 on marg — $^{a}$) Dn1 तत्र, D2 तच्च, D3 6 यत्र (for यच्च) Ś1 B1 D2 6 प्रसन्नो (for प्रपन्नो) — $^{c}$) G5 सुविस्तर (for °दित) — $^{d}$) Ś1 चाभवत्, K (K5 om) D3 4 7 8 चागत; B1 4 Do1 Dn D1 6 चागम, B2 3 5 D2 5 T G4 M3–5 चागमात् (for चागमत्) Ca d cite अगमम् and Cap Cdp आगमात्

26 $^{a}$) B नांतं (for नान्तो). — $^{b}$) D3 बुद्धि (for बुद्ध्या) — $^{c}$) B1 5 Do1 Dn D1, 3, 4 6–8 कर्मणां; D2 कर्मणा (for कर्मण) D2 om गन्तु

27 $^{a}$) D7 8 सदा, M3 5 यथा (for तथा). D6 [अं]गदश् (for गदश्) Ś1 सांभश्, Dn2 D5 6 शांबश् (for साम्बश्) — $^{b}$) Ś1 K1 2 Dn D3–5 7 8 प्रद्युम्नश्च, D2 धृष्टद्युम्न, D6 विद्युम्नश्च (for प्रद्युम्नोऽथ) Ś1 वितूरथ, K1 विदूरत°; K2–4 S (except G2) विडूरथ; Dn1 महारथ°; D7 विद्धरथ (for विदूरथ°). — $^{c}$) Ś1 K1, 2 4 D4 अ(D4 आ)गाहवो; B1–3 5 D1, 2 5 अगावहो; B4 असावहो; Do1 अगावणो, Dn1 अवगाहो, D6 अंगावोह; D7 8 आगवेहो; T G2–4 आशावहो; G5 आशाप्लवो (for आगावहो) M3 आगावबुध्यायुक्तस्य — $^{d}$) K1 चारुदोम° स; G5 चारुदोष्णश्च (for °देष्णश्च) Ś1 K2–4 B (except B4) Do1 Dn2 D1 2 5 6 G2 स (for च)

28 $^{a}$) D5 उल्मूको, T1 उलमको; G1 M उन्मुको (for उल्मुको) K1 निशिठश्चैव; Dn1 D4 7 8 निपध (Dn1 °त)श्चैव (for निशठ°) — $^{b}$) Ś1 झल्ली पर्धश्च; K1 लल्मी वभ्रुश्च, K2 गल्ली यभ्रुश्च, B1 3–5 Dn1 D1 4 क्षिल्ली वभ्रुश्च; Dn2 सिलौ यभ्रुश्च, D2 5 झाल्लि(D2 क्षिल्लि) चक्रश्च; D3 सलो यभ्रुश्च, D5 शठो यभ्रुश्च, D7 झिल्ली भ्रभ्रुश्च, T G2–5 विबभ्रुश्चैव; M3 4 झाल्लिपभ्रश्च; M5 झल्लिर्बभ्रुश्च (for झल्ली बभ्रुश्च) — $^{c}$) G3 प्रयुश्; G5 प्रथुश् (for पृथुश्) D7 विष्टथुश्, G5 विप्रथुश् (for विपृथुश्). — $^{d}$) K3 B Dn D1 7 शमीको(D7 °कौ)थ, D2 5 श(D6 स)मीकश्च; D4 समीकोथ, G1 M3 समि(M3 समी)कोय (for समीकोऽथ) Do1 रिपुंजय°, M1 2 [अ]रिमेजय (for [अ]रिमेजय°) K2 D3 समीको वरिमजय°; T G2–5 समक्रोधो नु (G2 मम क्रोधाश्च, G5 समक्रोधश्च) सजय

29 $^{a}$) B Dn2 D2 एतेन्ये, Do1 इत्येते (for एते

कथंचित्पाण्डवानीकं श्रयेयुः समरे स्थिताः ॥ २९
आहूता वृष्णिवीरेण केशवेन महात्मना ।
ततः संशयितं सर्वं भवेदिति मतिर्मम ॥ ३०
नागायुतबलो वीरः कैलासशिखरोपमः ।
वनमाली हली रामस्तत्र यत्र जनार्दनः ॥ ३१
यमाहुः सर्वपितरं वासुदेवं द्विजातयः ।
अपि वा ह्येष पाण्डूनां योत्स्यतेऽर्थाय संजय ॥ ३२
स यदा तात संनह्येत्पाण्डवार्थाय केशवः ।
न तदा प्रत्यनीकेषु भविता तस्य कश्चन ॥ ३३
यदि स्म कुरवः सर्वे जयेयुः सर्वपाण्डवान् ।
वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ॥ ३४
ततः सर्वान्नरव्याघ्रो हत्वा नरपतीन्रणे ।
कौरवांश्च महाबाहुः कुन्त्यै दद्यात्स मेदिनीम् ॥ ३५
यस्य यन्ता हृषीकेशो योद्धा यस्य धनंजयः ।
रथस्य तस्य कः संख्ये प्रत्यनीको भवेद्रथः ॥ ३६
न केनचिदुपायेन कुरूणां दृश्यते जयः ।
तस्मान्मे सर्वमाचक्ष्व यथा युद्धमवर्तत ॥ ३७
अर्जुनः केशवस्यात्मा कृष्णोऽप्यात्मा किरीटिनः ।

---

वै ) — ᵇ ) B1–4 Dc1 वृष्णिपुत्रा॰ (for ॰वीरा॰) B1 महाबला॰ (for प्रहारिण ) — ᶜ ) G5 कथं वै (for कथं चित् ) — ᵈ ) K1–4 D1 समरस्थिता ; B2–4 Dc1 समरार्थिन॰ (for समरे स्थिता॰ ) Dn1 (marg ) चयेयु॰ समरे श्रिता

30 ᵃ ) G4 आहूता (for आहूता ) — ᶜ ) K1 D6 शंसयितं ; D1 शशयित, D7 8 शशयिकं (for संशयित ) B5 कृत्स्नं (for सर्वं )

31 ᵃ ) D4 laouna for बलो — ᵇ ) A few MSS कैलाश॰ — ᶜ ) D7 om हली — ᵈ ) T G M1 2 5 यत्र तत्र (by transp ), M3 4 यत्र यत्र K1 मनीषिण॰ (for जनार्दन ) — After 31, S ins

84* एक एव द्विधा भूतो दृश्यते मानुषैर्भुवि ।

32 G5 om. 32 — ᵃ ) G3.4 पितुर्यमाहु॰ पितर — For 32ᵃᵇ, T G1 2 M subst

85* पितॄणामपि यः पूर्वो वेदेषु परिपठ्यते ।
[ G1 देवेषु (for वेदेषु ) ]

— G3 4 om 32ᶜᵈ — ᶜ ) K1 वार्ष्णेय॰; B1–4 Dc1 वार्थाय (for वा ह्येष ) B5 सोपि संजय पांडूनां ; T G1 2 M सोपि कृच्छ्रेषु पार्थानां — ᵈ ) Dn1 योत्स्यत B5 वीर्यवान् ; T G1 2 M केशव॰ (for संजय ) B1–4 Dc1 योत्स्यते केशव॰ स्वयं ; D4 योत्स्येर्थाय स***

33 T G3 M5 om. (hapl ) 33ᵃᵇ — ᵃ ) D4 यत् (for स ) K2 D4 7 सदा, K3 सदा (for यदा ) B (except B5 ) Dc1 युध्येत (for संनह्येत ) K1 सदा तात संनह्येन्यो ; G3 4 सोपि कृच्छ्रेषु पार्थानां — ᵇ ) K1–4 G3–5 योत्स्यतेर्थाय ; B1. 3 4 पांडवार्थे हि (for ॰वार्थाय ) K3 Dc1 D1 8 संजय ; K4 सजय॰ , B3 युध्यत॰ (for केशव॰ ) — ᶜ ) B1–4 Dc1 D1 प्रविसयोद्धा ; B5 प्रत्यनीकाय, S प्रत्यनीको( M3 ॰के )न्यो (for प्रत्यनीकेषु ) — ᵈ ) Dc1 reads from ता तस्य up to महात्मन॰ (in 43ᵈ ) twice Ś1 K2–4 Dn D1 2 4 5 7 तत्र ; K1 तथ ; B3 तात (for तस्य ) D8 भविता श कथचन, D6 शिष्ट स्यातोथ कश्चन

34 For the repetition in Dc1, of v l 33 — ᵃ ) Dn1 यद्यस्मत्, D2 यद्धि स्म (for यदि स्म ) — ᵇ ) K3 B Dc1 (both times ) D1 8 S नाम (for सर्वं ). K1 ॰पार्थिवान् (for पाण्डवान् ) — ᶜ ) B3 (marg ) 3 4 Dc1 (both times ) [ऽ]र्थे हि (for ऽर्थाय ) Dn1 transp तेषां and वै D6 वार्ष्णेयो योधयस्तेषां — ᵈ ) B3 शरम् ; B1 D2 5 अस्त्रम् (for शस्त्रम् )

35 For the repetition in Dc1, of v l 33 — ᵃ ) Ś1 K1–4 तत्र (for ततः ) Dn1 D5 T G1–4 M नरव्याघ्रान्, G5 ॰व्याघ्र (for ॰व्याघ्रो ) — ᵇ ) K4 नरपतिं ; Dn1 भूमिपतीन् ; D6 रण॰, S नारायणो (for नरपतीन् ) — ᶜ ) K3 कौरवश्च (for ॰वांश्च )

36 For the repetition in Dc1, of v l 33 — ᵇ ) B3 4 Dc1 (both times ) transp योद्धा and यस्य. — ᶜ ) D8 क्षेत्रे ; G1 M1–4 सख्ये, G3 5 शक्तः (for सख्ये ) — ᵈ ) Ś1 K1 4 Dn1 D4–8 प्रत्यनीके (for ॰नीको ) K1 D4 [ऽ]भवद्रथ॰ ; T G3 4 भवेदय (T ॰थ॰ ) ; G5 भवेद्युधि (for भवेद्रथ॰ )

37 For the repetition in Dc1, of. v l 33 — ᶜ ) D1 om मे S संजयाचक्ष्व (for सर्वमाचक्ष्व ) Ś1 K1 4 B5 D1 7 8 तस्मात्सर्वं (B5 D4 7 8 तन्मे सर्वं ) स( K4 म )माचक्ष्व

38 For the repetition in Dc1, of v l, 33,

अर्जुने विजयो नित्यं कृष्णे कीर्तिश्च शाश्वती ॥ ३८
प्राधान्येन हि भूयिष्ठममेयाः केशवे गुणाः ।
मोहाद्दुर्योधनः कृष्णं यन्न वेत्तीह माधवम् ॥ ३९
मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः ।
न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम् ॥ ४०
पूर्वदेवौ महात्मानौ नरनारायणावुभौ ।
एकात्मानौ द्विधाभूतौ दृश्येते मानवैर्भुवि ॥ ४१
मनसापि हि दुर्धर्षौ सेनामेतां यशस्विनौ ।
नाशयेतामिहेच्छन्तौ मानुषत्वात्तु नेच्छतः ॥ ४२

युगस्येव विपर्यासो लोकानामिव मोहनम् ।
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः ॥ ४३
न ह्येव ब्रह्मचर्येण न वेदाध्ययनेन च ।
न क्रियाभिर्न शस्त्रेण मृत्योः कश्चिद्विमुच्यते ॥ ४४
लोकसंभावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ ।
भीष्मद्रोणौ हतौ श्रुत्वा किं नु जीवामि संजय ॥ ४५
यां तां श्रियमसूयामः पुरा यातां युधिष्ठिरे ।
अद्य तामनुजानीमो भीष्मद्रोणवधेन च ॥ ४६
तथा च मत्कृते प्राप्तः कुरूणामेष संक्षयः ।

---

Before 38, K4 ins. अर्जुन उवाच — b) B2-4 Dc1 (both times) D3 S कृष्णश्चात्मा; D4 कृष्णस्यात्मा; D5 कृष्णो ह्यात्मा (for कृष्णोऽप्यात्मा). — c) D4 7 8 वै जयो, T G2-5 तु जयो (for विजयो) B4 M1 2 नित्य (for नित्यं) — After 38, B Dc1 ins

86* सर्वेष्वपि च लोकेषु बीभत्सुरपराजित ।

39 For the repetition in Dc1, of v l 33 — a) B Dc1 (both times) [प्]व (for हि). S तु भूयिष्ठा (for हि भूयिष्ठम्) — b) T G3 अमोघा° (for अमेया°) — c) Dn1 मूढो (for मोहाद्) T G1-4 M तु वशिनं (G3 M3 4 °न°); G5 वशीकृतं (for दुर्योधन) D7 8 कृष्णो (for कृष्णं) — d) B Dc1 (both times) D1 यो न (for यन्न) Ś1 lacuna for यन्न वे K1 य° पश्यतीह; K3 8 द्वेषयत्येव; D5 न मन्यतीह, S न सर्वो वेत्ति (for यन्न वेत्तीह) D4 7 8 महाबलं (for [इ]ह माधवम्) D6 जानात्येव हि मानवं

40 For the repetition in Dc1, of v l. 33 — a) K1 D3 देवयोगेन, D4 8 मृत्युपाशे(D8 °से)न, D7 मृत्युपाशिने (sic), T G M1 2 5 देवपाशेन, M3 4 देवमायेन (for दैवयोगेन) — b) D4 8 दैवदष्ट, D7 दैवदंडश्च (hypermetric) (for मृत्युपाश-) K1-4 D1 -वशीकृत°, D5 तिरस्कृत (for पुरस्कृत°) S वैष्णवेन समावृत°

41 For the repetition in Dc1, of v l 33 — a) D5 पूर्वौ देवौ (for पूर्वदेवौ) — b) K4 om (hapl) from नर up to एकात्मानौ (in 41a) — c) D4 7 8 द्विधा कृत्वा, M1 2 द्विधाभूतो (for द्विधाभूतौ) — d) K1. 3. 4 D3-5 G3 दृश्यते (for दृश्येते) B1 4 G1 M1. 2 मानुषैर्भुवि; B2 3 Dc1 (both times) मानुषैरपि, Dn1 D6 मानवौ भुवि (for °वैर्भुवि).

42 For the repetition in Dc1, of v. l 33 — a) B2-4 Dc1 (both times) चापि, G5 [अ]पीह (for [अ]पि हि) Ś1 K1 2 4 D6 दुराधर्षौ (for हि दुर्धर्षौ) — b) Ś1 K4 D3 एनां, D5 एतौ (for एतां) Ś1 मनस्विनौ (for यश°) — c) Ś1 K1-4 ममेच्छतौ, D1 समेक्षतौ; M3. 5 यदीच्छतौ, M4 lacuna (for इहेच्छन्तौ) D2 5 नाशयेतामहिंसतौ, D3 नाशयेता महच्छत्रून् (sic) — d) D3 6 मनुष्यत्वात् (for मानुष°) K3 D2 च, T G2-5 न (for तु) T G2-5 चेच्छत, G1 M3 4 नेच्छतां, M1. 2 5 नैच्छतां (for नेच्छतः)

43 For the repetition in Dc1, of v l 33 — a) B4 लोकस्येव (for युग°) — b) B2 5 Dn2 D3 5 इह (for इव) — c) D4 भीष्मस्येव हि (hypermetric), D7 8 भीष्मस्येक (for भीष्मस्य च) T G2-5 वध (for वधस्)

44 a) Ś1 B3 4 न ह्येवं, Dn2 D3 नार्जवाद्, D6 नार्जवान् (for न ह्येव) — c) K1. 4 Dn1 D1 5-7 G1 शास्त्रेण; B1 2 3 D2 चास्त्रेण, B4 Dc1 चेष्टाभिर् (for शस्त्रेण) — d) B (except B1) D5 निवार्यते, Dc1 निवारित (for विमुच्यते) S मृत्योरध्वनि मु(G5 °ध्वान मु, G5 [inf lin] °ध्वा विमु; M3 4 °ध्वनि प)च्यते

45 d) K1 D4. 5 किं तु; Dc1 किमु (for किं नु) Ś1 जीवमि (for जीवामि)

46 a) Dn1 D5 6 असूयाम; D4 अयास्याम°; D7 8 अपश्याम° (for असूयाम°) — b) B2 परां (for पुरा) B Dc1 D5 दृष्ट्वा; Dn1 D3 योर्डी, D2 4 जातां; D3 जाता (for यातां) K4 पुण्यात्ताम् (submetric) (for पुरा यातां) S पांडवस्य महात्मन° — d) B1-4 Dc1 Dn2 D2 6 ह, B5 Dn1 D7 8 हि (for च).

पक्कानां हि वधे सूत वज्रायन्ते तृणान्यपि ॥ ४७
अनन्यमिदमैश्वर्यं लोके प्राप्तो युधिष्ठिरः ।
यस्य कोपान्महेष्वासौ भीष्मद्रोणौ निपातितौ ॥ ४८
प्राप्तः प्रकृतितो धर्मो नाधर्मो मानवान्प्रति ।
क्रूरः सर्वविनाशाय कालः समतिवर्तते ॥ ४९
अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ।
अन्यथैव हि गच्छन्ति दैवादिति मतिर्मम ॥ ५०
तस्मादपरिहार्येऽर्थे संप्राप्ते कृच्छ्र उत्तमे ।
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ॥ ५१

इति श्रीमहाभारते द्रोणपर्वणि दशमोऽध्यायः ॥ १० ॥

## ११

संजय उवाच ।
हन्त ते वर्णयिष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
यथा स न्यपतद्द्रोणः सादितः पाण्डुसृञ्जयैः ॥ १
सेनापतित्वं संप्राप्य भारद्वाजो महारथः ।

---

47 a) G1 M यथा (for तथा)　D7 8 प्राप्त (for प्राप्त)　Ś1 K1-4 तथा च मत्कृतेनाहो; B1 6 Do1 D1 2 मत्कृते चाप्यनुप्राप्त°　— b) D6 पृष (for पृष)　D7 सजय; D8 सजय; G2 8 सक्षय° (for सक्षय°)　— c) B1 2 (both marg) 8-5 Do1 Dn1 पापानां, Dn2 D2 4 6-8 संघूर्नां (for पक्कानां)　K2-4 D1 2 हि नृणां, D4 7 8 सक्षय° (for हि वधे)　— d) D6 वज्रायंति (for वज्रायन्ते)　K4 तृणा मखे; D1 तृणान्युत (for तृणा न्यपि). D7 8 विवूर्षवे नृणामपि

48 a) B D1 S अनतम् (for अनन्यम्)　— b) T G2 4 काल (for लोके)　— c) B2 क्रोधान्; B3 कोपे (for कोपान्)

49 a) D4 7 8 प्रकृतितो (D4 °नो); T G2-5 प्रकृतिजो (for °तितो)　D6 प्राप्तस्तु प्राकृतो धर्मो　— b) K1 माधवो; Dn1 T1 G3 न धर्मो; D4 नाधर्मौ (for °र्मो)　B Do1 Dn2 D2 न धर्मो मामकान्प्रति　— c) B3 मत; T G2 4 5 शूरा°, G3 शूर° (for क्रूर°)　T G2-5 सर्वे (for सर्व°)　— d) K1-4 सम्प्रति, B1 (marg) सनति, Dn D3 4 7 8 सममि, D6 त नाति; G1 M सनाति (for समति)　B1 Do1 D1 2 T G2-5 कालोयं (B1 Do1 कालो वै, D1 2 कालोसौ, G1 कालो*) नातिवर्तते

50 a) Dn1 M8 अन्यथा चिंतितो ह्य(M8 सोप्य)र्थो; M4 °साप्यर्थो　— b) G1 M तपस्विभि (for मन°)　T G2-5 नरैराशापरायणै°　— c) G3 om हि　Ś1 K1-4 D2 5 प्रवर्तंते; B1 D5-8 विपर्यंते; Dn1 D1 4 प्रपद्यंते; Dn2 विपत्यते; D8 विपच्यते (for हि गच्छन्ति)　— d) Ś1 K1-4 B2-4 Do1 Dn1 D4 7 8 दैवयोगात् (for दैवादिति). D5 दैवयोगात्सविन्मम, D6 दैवेनेह विशा पते

51 a) K3 D4 अपरिहार्यर्थे　— b) K1 B3-5 कृच्छ्रम्, D2 7 कृत्स्न (for कृच्छ्र)　D8 सत्तमे (for उत्तमे)　Dn1 प्राप्ते कृच्छ्रे तथोत्तमे; G5 सप्राप्त कृच्छ्रमुत्तम　— c) S (except G1) अवार(G3 °रि)णीये (G5 °यन्) (for अपारणीये)　T G3 5 M1 2 निश्चिन्त्य; G1 निश्चिन्त्ये (for दुश्चिन्त्ये)

Colophon om. in K5　Ś1 missing　— *Sub parvan* Editions द्रोणाभिषेक　— *Adhy name* K1-3 धृतराष्ट्रप्रश्न°, Dn D2 5 6 वासुदेव(D6 श्रीवासुदेव)प्रशंसा, D4 धृतराष्ट्रवाक्यं　— *Adhy no* (figures, words or both) K3 B1 2 Dn1 D8 S 10 (as in text)　— *Śloka no* Do1 52

### 11

☞ This adhy is missing in Ś1 (cf v 1 7 1.1)

1 M3 4 om the ref　— After the ref S ins

87* शुश्रूषस्व स्थिरो भूत्वा शसतो मम भारत ।
[(G1 स्थितो (for स्थिरो)]

— a) K3 Do1 Dn2 D2 3 6 G2 5 कथयिष्यामि; K5 D5 संप्रवक्ष्यामि, Dn1 D4 7 8 की(D7 कि)र्तयिष्यामि; T G1 3 4 M वर्त° (for वर्ण°)　Cd as in text　— b) Ś1 K1 2 M1 2 सर्वं; G1 M3-5 यथा (for

मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥ २
यत्कौरवाणामृषभादापगेयादनन्तरम् ।
सेनापत्येन मां राजन्नद्य सत्कृतवानसि ॥ ३
सदृशं कर्मणस्तस्य फलं प्राप्नुहि पार्थिव ।
करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ॥ ४
ततो दुर्योधनश्चिन्त्य कर्णदुःशासनादिभिः ।
तमथोवाच दुर्धर्षमाचार्यं जयतां वरम् ॥ ५
ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ।
गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ॥ ६
ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः ।
सेनां प्रहर्षयन्सर्वामिदं वचनमब्रवीत् ॥ ७
धन्यः कुन्तीसुतो राजा यस्य ग्रहणमिच्छसि ।
न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसि ॥ ८
किमर्थं च नरव्याघ्र न वधं तस्य काङ्क्षसि ।

---

सर्वं ) Dn1 -दर्शनात् ( for दर्शिवान् ) — c ) K1 2 4 transp यथा and स Dn2 D3 6 सोभ्यपतद्, D4 7 सैन्यप°, D5 सख्येप°; S सत्यपरो ( for स न्यपतद् ) — d ) K1 सादिता, G2 पातित, G1 सूदित ( for सादित° ) D7 सजयै ( for सञ्जयै )

2 b ) D4 7 8 महाबल° ( for °रथ ) S द्रोणो हर्षमुपेयिवान् — c ) Dn2 D6 सैन्यस्य सर्वस्य ( by transp ), S सैन्यस्य राजानं — d ) S इदं वचनमब्रवीत्

3 Before 3, S ins द्रोण° — a ) K4 5 D1 य° ( for यत् ) — c ) K1 सैनापत्येन B3-5 यद्; G1 M1 2 मा ( for मां ) T G2 5 सेनापत्ये त्वया राजन् — d ) D3 अथ; D5 न च ( for अद्य ) T G2 4 सत्कृतवानहं, G3 5 °वाहन ( for °वानसि ) B4 मामद्य कृतवानसि — After 3, S ins

88* अनुरूपं फलं तस्य कर्मणो लभ्यतां त्वया ।

4 b ) K5 Dc1 D2 3 6-8 G2 3 5 आप्नुहि ( for प्राप्नुहि ) B2-4 Dc1 D1 भारत, Dn2 D4 मानव, D2 पांडव, G2 कौरव ( for पार्थिव ) — c ) B5 transp करोमि and कामं Ś1 ( orig ) कामुक, Ś1 ( marg ) कर्म किं ( for कामं कं ) K5 B5 Dn D2-6 T G2-4 किं ( for कं ) — d ) Dn1 वृणुष्व त ( for प्रवृणीष्व ) Dn1 T G1 3 M3 5 यदि( M3 °दी )च्छसि ( for यमिच्छसि ) Dn2 D3 6 वृणीष्व किमिहेच्छसि, G5 *णीष्व वरमिच्छसि

5 Before 5, S ins संजय — a ) K1 चिंत्य, B Dc1 Dn2 D3 6 S राजा, D2 चिंत्य° ( for चिन्त्य ) — c ) Dc1 Dn2 D1 3 T G2 4 समभ्योवाच; G1 2 3 M समभ्यों( G2 3 M3 °र्यो )वाच ( for तमथो° ) — d ) M1 2 वर° ( for वरम् )

6 Before 6, S ( except G3 ) ins दुर्योधन — b ) K2 D1 जीवमाद्य; Ca d °ग्राहं ( as in text ) — c ) D3 G3 रथिनं ( for रथिनां ) Dc1 Dn1 D4 7, 8 T श्रेष्ठ ( for श्रेष्ठं ) — d ) Dn1 S सकाशम् ( for समीपम् ) B1-4 Dc1 उपानय ( for इहानय ). — After 6, S ins

89* इच्छेयं वै महात्मानं धर्मात्मानं युधिष्ठिरम् ।
भ्रातॄणां पश्यतामेव जीवग्राहेण मे द्विज ।
प्रीणाम्यनेन कार्येण ससुहृज्जनबान्धवः ।

[ ( L 2 ) Cv post half as above — ( L 3 ) G2-5 भृणो( G2 5 °णो )म्येतेन ( for प्रीणाम्यनेन ) ]

7 Before 7, S ins संजय — c ) Dn2 D3 सेना° ( for सेनां ) Dn1 सर्वान्, Dn2 D3 6 राजन् ( for सर्वाम् )

8 a ) B1-3 5 Dn2 D1 राजन्, B4 G4 यस्य ( for राजा ) — b ) D3 यस्त्वं, G4 जीव ( for यस्य ) D4 7 8 त्व ग्राहम् ( for ग्रहणम् ). B4 ग्रहणं त्वमिहेच्छसि — After 8ab, D4 7 8 read 9ab for the first time, repeating it in its proper place. — c ) K2-4 B Dn D1 2 3 8 सुदुर्धर्ष S न वधं तस्य दुर्धर्ष — d ) G2 वधम् ( for वरम् ). B1 3-5 T G1 3-5 M प्रयाचसे, G2 प्रयच्छसे ( for प्रयाचसि ) D7, 8 वरमेनं न याचसे, Cv as in text

9 D4 7 8 read 9ab for the first time after 8ab — a ) D4 ( first time ) 7 ( both times ) 8 ( first time ) तु ( for च ) — b ) K1 2 Dn1 M3-5 वधं तस्य न; B1 वध न तस्य; D5 न वधस्तस्य ( for न वधं तस्य ) B4 कांक्षते, B5 D2 4 8 ( last two second time ) S काङ्क्षसे ( for काङ्क्षसि ) D4 ( first time ) 7 ( both times ) 8 ( first time ) वध कर्तुं न वाञ्छसि — c ) D4 नाशम्*, T G2-5 नाशंससे ( for °ससि ) K2 3 क्रिया; Dn1 क्षयाम् ( for क्रियाम् ) Ś1 K1-4 मया; K4 G1 M एनां ( for एतां ) — d ) D7 यतो; D3 lacuna, T G2-5 मम; G1 M1 2 4 मयि; M3 5 मही ( for मत्तो ) K4 B1 दुर्योधनो D4 स्वयं ( for ध्रुवम् )

नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम् ॥ ९
आहो स्विद्धर्मपुत्रस्य द्वेष्टा तस्य न विद्यते ।
यदिच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनि ॥ १०
अथ वा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान् ।
राज्यांशं प्रतिदत्त्वा च सौभ्रात्रं कर्तुमिच्छसि ॥ ११
धन्यः कुन्तीसुतो राजा सुजाता चास्य धीमतः ।
अजातशत्रुता सत्या तस्य यत्स्निह्यते भवान् ॥ १२

द्रोणेन त्वेवमुक्तस्य तव पुत्रस्य भारत ।
सहसा निःसृतो भावो योऽस्य नित्यं प्रवर्तते ॥ १३
नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि ।
तस्मात्तव सुतो राजन्प्रहृष्टो वाक्यमब्रवीत् ॥ १४
वधे कुन्तीसुतस्याजौ नाचार्य विजयो मम ।
हते युधिष्ठिरे पार्थो हन्यात्सर्वान्हि नो ध्रुवम् ॥ १५
न च शक्यो रणे सर्वैर्निहन्तुममरैरपि ।

---

10 D4 7 8 read 10ab twice — a) B3 Dn D5 6 अहो स्विद्, D3 4 (second time) 7 (first time) 8 (second time) अहोस्व, D7 (second time) अथ वा (for आहो स्विद्) B Dc1 D4 (second time) 7 (first time) 8 (second time) S धर्मराजस्य (for °पुत्रस्य) — b) D4 (first time).7 (second time) 8 (first time) हिंसा (for द्वेष्टा) B3 D4 (second time) 7 8 (both first time) यस्य, T G M2 3 5 कश्चिन् (for तस्य) M1 कश्चिद्द्वेष्टा कश्चिन्न विद्यते (hyper metric) — c) Ś1 K1-4 D1 यत्त(K1 त्व)मिच्छसि; K5 Dn1 D2 5 येनेच्छसि त्व, B1-4 M4 यदीच्छसि त्व; D8 G1 M1-3 5 त(D8 य)मि°, T G2-5 तदि° (for यदि°)

11 b) Dn1 पांडवं — c) Ś1 राज्यं मां; K4, 5 B Dc1 Dn D1-3 5 राज्य स; D4 राज्य*; D7 8 राज्यार्धं (for राज्यांशं) Dn1 सु (for च) D6 राज्य सधाय दत्त्वा च — d) D6 सौभ्राज्य, M3 4 सौभद्रं, M5 सौहार्दं (for सौभ्रात्रं) K5 Dn D2 3 5 अर्हसि (for इच्छसि)

12 b) B3-5 Dc1 Dn1 D1 6 T G2-4 सुजात, G5 सुजातो (for ता) B3 4 S तस्य, D2 5 यस्य (for चास्य) — c) B5 Dn1 T G2-5 तस्य; D5 यस्य, D7 8 नित्य (for सत्या) — d) Dn2 यस्य (for तस्य) D2 यस्मिन्प्रियो, D4 *स्निह्यते; D5 ह्यस्पृशते (for यत्स्निह्यते) K1 3 तस्य यत्स्नेह्यते भयात्; S यस्य (T G3 4 येन) सस्नि(M1 2 °सि)ह्यते भवान्.

13 Before 13, S (except G3 4) ins संजय: — a) Ś1 B5 Dc1 Dn1 D1 चैवम्; K1 त्वेहम्, M3 त्वेतद् (for त्वेवम्) — c) Ś1 K1-3 D2 विस्मृतो; K4 B1 D6 Ca d निसृतो; D5 निस्सितो; G5 निर्वृतो (for निःसृतो) — d) Dn2 य स; T G2-4 यस्तु; G1 3 M यश्च (for योऽस्य) B Dc1 S (except M3, 4, M5 also as in text) हृदि स्थित (for प्रवर्तते)

14 a) K1 D4 नाकरोद्; G3 नाकार (for नाकारो) K1 न्यूहितु; G3 गूहित (for गूहितु) Dn2 D3 नाय गृहीतु शक्यो वै — b) G5 (marg) न ह्येवाभिनिगूहितु — d) D5 [अ]पहृष्टो (for प्रहृष्टो) D7 8 पृष्टो वाक्य मथाब्रवीत

15 Before 15, Dc1 Dn1 G M3-5 ins दुर्योधन: — a) D4 7 मथ; D8 M3-5 [अ]स्य (for [आ]जौ) G2 वधे युधिष्ठिरस्याजौ — b) Ś1 न चाशा (for नाचार्य). S आचार्य (G3 °र्यो) न जयो मम — c) B4 D2 पार्था (for पार्थो) — d) B3 4 D2 हन्यु (for हन्यात्) B5 D6 सर्वं हि नो; D4 सर्वानपि (for सर्वान्हि नो) B5 बल (for ध्रुवम्) S सर्वानस्मान्वधि(G1 M °न्हनि)ष्यति

16 a) K5 D5 न हि; D4 6-8 न स, S नैव (for न च) B D2 शक्या (for शक्यो) K4 B1-4 Dc1 सर्वे; B5 D2 पार्था, D6 पार्थो; D7 सर्वैर् (for सर्वैर्) — b) K1 निहर्तुम् (for निहन्तुम्) — After 16ab, S ins

90* यदि सर्वे हनिष्यन्ते पाण्डवाः ससुता मृधे ।
ततः कृत्स्नं वशे कृत्वा निःशेषं नृपमण्डलम् ।
ससागरवनां स्फीतां विजित्य वसुधामिमाम् ।
विष्णुर्दास्यति कृष्णायै कुन्त्यै वा पुरुषोत्तमः ।

[ (L 2) M1-4 क्षिप्र, M6 क्षत्र (for कृत्स्न) Cv कृत्य (for कृत्वा) — (L. 4) M3-5 कृत्स्नां वै (for कृष्णायै) M3 5 स (for वा) ]

— c) D7 8 T G3 4 एष (for एव) K2 B Dc1 Dn2 D2-4 6 तेषां (for चैषां) K1 शोम: (sic) (for शेष) D5 यद्येक एव, G1 M यद्येक ए(M1 °को ये)षां; G2 5 यद्येष चैषां (for य एव चैषां) — d) K4 5 Dn2 D1 3 G2 सर्वान् (for स एव) M1 2 अशेषयेत् (for न शेष°). Ś1 K2 3 D5 6 G4 5 सर्वानस्मान(K2 °र्थान्-; D6 °स्मान्स)शेषयेत्; K1 सर्वानस्मानशोषयन्; Dn1 D7 8

न ह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः ।
किमङ्ग पुनरेवान्यो मर्त्यः सत्यं ब्रवीमि वः ॥ १७
अर्जुनस्य सुतं त्वेष शिष्यत्वादभिरक्षति ।
पुत्राः शिष्याश्च दयितास्तदपत्यं च धर्मिणाम् ॥ १८
संरक्ष्यमाणो द्रोणेन मन्यते वीर्यमात्मनः ।
आत्मसंभावितो मूढस्तं प्रमथ्नीत माचिरम् ॥ १९
एवमुक्तास्तु ते राज्ञा सात्वतीपुत्रमभ्ययुः ।
संरब्धास्तं जिघांसन्तो भारद्वाजस्य पश्यतः ॥ २०
दुःशासनस्तु तच्छ्रुत्वा दुर्योधनवचस्तदा ।
अब्रवीत्कुरुशार्दूलो दुर्योधनमिदं वचः । २१
अहमेनं हनिष्यामि महाराज ब्रवीमि ते ।
मिषतां पाण्डुपुत्राणां पाञ्चालानां च पश्यताम् ।
ग्रसिष्याम्यद्य सौभद्रं यथा राहुर्दिवाकरम् ॥ २२
उत्क्रुश्य चाब्रवीद्वाक्यं कुरुराजमिदं पुनः ।
श्रुत्वा कृष्णौ मया ग्रस्तं सौभद्रमतिमानिनौ ।
गमिष्यतः प्रेतलोकं जीवलोकान्न संशयः ॥ २३

---

वै हन्तुमिच्छति, T $G_{1, 3, 4}$ M न हिनस्ति न चेच्छति

17 For sequence in $K_1$, cf. v l 12 $G_{2, 5}$ om 17 (cf v l 16) —$^{a}$) T $G_4$ समर (for °रे) $K_3$ $B_4$ $Dn_2$ युध्येद् (for मुच्येद्) —$^{b}$) $D_3$ तत को (for अन्तको) —$^{c}$) $B_4$ $Dn_2$ अन्य°; $D_{3, 6}$ बाल°, Cd अङ्ग (as in text) $K_4$ अप्यान्यो, $D_{5, 6}$ एवासौ (for एवान्यो) $Ś_1$ किमगदत्तुलोता (*sup lin* °त्व)न्यो (sic), $K_{1, 3}$ किमग*****

18 For sequence in $K_1$, cf v l. 12 $G_{2, 5}$ om. 18 (cf v l. 16) $Dn_2$ reads $18^{ab}$ for the first time after $16^{ab}$ —$^{a}$) $B_1$ $M_{3-5}$ सुतस् $B_1$ चेष; $Dc_1$ T $G_{3, 4}$ चैव (for त्वेष) —$^{b}$) $M_{1, 2}$ शिष्यं त्वाम् (for शिष्यत्वाद्) $D_5$ अपि रक्षति, $M_{3-5}$ अभिरक्षित $Dn_2$ (second time) मन्यते नाततायिनं —$^{c}$) $Ś_1$ (before corr) B $Dc_1$ शिष्या पुत्राश् (by transp), $D_3$ पुत्रा शिष्यश्, $G_3$ पुत्राञ्शिष्याश् $Ś_1$ (*inf lin* by corr) पुत्राच्छिष्याद्धि दयितस्, $K_{1-3}$ $D_1$ पुत्रा($K_2$ त्र)श्च शिष्यो दयित($K_3$ °ता)स् —$^{d}$) $Ś_1$ $K_{1-4}$ $D_1$ तत्समं, $D_4$ धर्मिणे (for °णाम्)

19 For sequence in $K_1$, cf v l 12 $G_{2, 5}$ om $19^{abc}$ (cf v l 16) —$^{a}$) $G_{3, 4}$ संरक्ष्यमाणा —$^{b}$) $G_{3, 4}$ मन्यते —$^{c}$) S ($G_{2, 5}$ om.) आत्मसभावित मूढं —$^{d}$) $K_5$ T समप्रमथ्नीत, $B_3$ तम्प्र; $G_{1, 3, 4}$ M संप्रमृद्नीत; $G_2$ समप्रमृद्नय, $G_5$ समप्रमुक्तत

20 For sequence in $K_1$, cf v l 12 —$^{a}$) $K_1$ $D_4$ उक्त्वा (for उक्तास्) $K_4$ $D_1$ तेन राज्ञा; $K_5$ $Dn_1$ तु ते धीरा; $Dn_2$ ततो राज्ञा, $D_5$ तु ते शूरा; S तु राजान° (for तु ते राज्ञा) —$^{b}$) $G_5$ सत्वती $D_3$ अभ्ययात्, $G_3$ अन्वयु° (for अभ्ययु) —$^{c}$) $Ś_1$ $K_{1-4}$ $D_1$ सहितास् (for संरब्धास्) $B_3$ सं, $B_4$ $Dc_1$ $D_{2, 7}$ ते; $M_{3-5}$ तु (for त) —$^{d}$) S सैनिका° ($G_{2, 5}$ समत) (for पश्यत)

21 For sequence in $K_1$, cf v l 12 —$^{a}$) $Dn_2$ $D_{5, 6}$ च (for तु) —$^{c}$) $Ś_1$ $K_2$ $B_4$ -शार्दूल; $D_{7, 8}$ °ल (for °लो) — For 21, S subst

280* दु:शासनस्तु संरब्ध ज्ञात्वा भ्रातरमग्रजम् ।
साञ्जिवर्त्यं रथोदारानथ भ्रातरमब्रवीत् ।
[ (L 2) Prior half damaged in $G_5$ ]

22 For sequence in $K_1$, cf v l 12 —$^{b}$) $D_{7, 8}$ S राजन्सत्य (for महाराज) $Dn_2$ $D_{3, 4, 6}$ ब्रवीहि मां (for °मि ते) —$^{c}$) S मिषतां पांडवेयानां —$^{d}$) A few MSS पचालानां $D_5$ महात्मनां (for च पश्यताम्) —$^{e}$) $D_6$ om (hapl) from सौभद्र up to ग्रस्तं (in $23^{c}$) T $G_{1, 3, 4}$ M ग्रसि($G_3$ °ही)ता ह्यस्मि ($G_1$ $M_{1, 2}$ °तास्म्यद्य) सौभद्र; $G_2$ ता सैंहिकेयोस्मि, $G_5$ °ता ह्यासिता ह्यस्मि (sic) —$^{f}$) $K_4$ $D_1$ पांचालानां च पश्यतां ($= 22^{d}$), S स्वर्भानुरि($G_{2, 5}$ सौभद्रमि)व भास्कर

23 For sequence in $K_1$, cf v l 12 $D_6$ om $23^{abc}$ (cf. v l 22) $Dn_2$ om $23^{ab}$ —$^{a}$) $K_{1, 4}$ $D_{1, 3}$ उत्क्रम्य; $K_5$ उत्कुष्य, $D_4$ उत्कृष्य; $D_5$ उत्कृश्य S राजन् (for वाक्य) — $G_4$ om $23^{b}$ —$^{b}$) $Ś_1$ $K_{1, 5}$ $D_{4, 5, 7, 8}$ S ($G_4$ om) वच° (for पुन°) —$^{c}$) $K_4$ $D_1$ तस्यौ (for कृष्णौ) $G_1$ $M_{1, 2}$ transp कृष्णौ and ग्रस्त —$^{d}$) $Ś_1$ $B_1$ अभि; $K_4$ $Dn_1$ $D_1$ $M_2$ इति (for अति) $Dc_1$ Dn $D_{3, 4, 6-8}$ मानिन (for °नौ) $B_4$ सौभद्रमपलायिनौ —$^{e}$) $G_1$ $M_{1, 2}$ प्रयास्यत° (for गमिष्यत) $D_6$ (marg) पर (for प्रेत) —$^{f}$) $K_5$ $Dn_1$ मर्त्यं; $M_{3-5}$ इह (for जीव) $K_{1-4}$ $D_1$ जीवलोकस्य पश्यत°

24 For sequence in $K_1$, cf v l. 12 —$^{a}$) $Dn_2$ तांश् (for तौ) $D_5$ तु श्रुत्वा; T $G_{3, 4}$ श्रुत्वा

तौ च श्रुत्वा मृतौ व्यक्तं पाण्डोः क्षेत्रोद्भवाः सुताः ।
एकाह्ना ससुहृद्वर्गाः क्लैब्याद्धास्यन्ति जीवितम् ॥ २४
तस्मादस्मिन्हते शत्रौ हताः सर्वेऽहितास्तव ।
शिवेन ध्याहि मा राजन्नेष हन्मि रिपुं तव ॥ २५
एवमुक्त्वा नदन्राजन्पुत्रो दुःशासनस्तव ।
सौभद्रमभ्ययात्क्रुद्धः शरवर्षैरवाकिरन् ॥ २६
तमभिक्रुद्धमायान्तं तव पुत्रमरिंदमः ।
अभिमन्युः शरैस्तीक्ष्णैः षड्विंशत्या समर्पयत् ॥ २७
दुःशासनस्तु संक्रुद्धः प्रभिन्न इव कुञ्जरः ।
अयोधयत सौभद्रमभिमन्युश्च तं रणे ॥ २८
तौ मण्डलानि चित्राणि रथाभ्यां सव्यदक्षिणम् ।
चरमाणावयुध्येतां रथशिक्षाविशारदौ ॥ २९
अथ पणवमृदङ्गदुन्दुभीनां
क्रकरमहानकभेरिझर्झराणाम् ।
निनदमतिभृशं नराः प्रचक्रु-
र्लवणजलोद्भवसिंहनादमिश्रम् ॥ ३०

इति श्रीमहाभारते द्रोणपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

तु (for च श्रुत्वा). Dn2 हता (for मृतौ) — b) Ś1 K Dn1 D1 2 5 7 8 पांडो पुत्रा भयात्तव (K5 Dn1 D2 5 °त); D4 पांढो क्षत्राहमासुता (sic) — c) Dn2 एकांगा; D2 एकांता; D3.6 पांचाला (for एकाह्ना) B3 एकात्मान सुहृद्वर्गा; D4 एकांगा सुहृद्वर्गाण (sic), S सुहृद्गणास्तदेकाम्रा (G1 M1 2 °दैकाह्ना; M3-5 °यैकाह्ना) — d) K2 क्लैशाद्; D7 क्लैश्यद् (for क्लैब्याद्) S त्यक्ष्यंति (for हास्यन्ति)

25 For sequence in K1, cf. v l 12 — a) D7 8 पुत्रो; G1 M1 2 राजन् (for शत्रौ) — b) Ś1 G1 M1-4 सर्वाहितास् D4 सर्वेपि निहतास्तत — Ś1 om (hapl) 25c-26b K1-4 D1 om (hapl) 25cd — c) B1 2 5 ध्याय मां; B4 मां ध्याहि; Dn2 D3 6 ब्रूहि मां; D4 ब्रूहि मे K5 B3 Dc1 Dn1 D2 5 7 8 G2-5 मां (for मा) — d) B4 रिपून्; Dn2 D2 5 पुरस् (for रिपुं)

26 For sequence in K1, cf v l 12. Ś1 om. 26ab (cf v l 25) — a) K5 B1.3-5 Dn2 D2 7 [अ]नदद्; D3 M3-5 ततो; T G M1 2 तदा (for नदन्) — For 26ab, K1-4 D1 subst

281* दुःशासनस्तथेत्युक्तो भ्राता तव सुतस्तदा ।

— D3 om. (hapl) 26d-28a. — d) K2 4 B1 (marg) 2 D8 T G1 3 4 M3 4 अवाकिरत्

27 For sequence in K1, cf v l. 12. D3 om 27 (cf v l. 26) Dn1 om 27a-28a — a) K1-4 B D1 5 7 अतिक्रुद्धम् (for अभि°) — b) S (except G5) भ्रातराग्रम् (for तव पुत्रम्) D2 4 5 आरिंदम; D6 7 S °दम — c) S राजन् (for तीक्ष्णै.) — d) Ś1 K1-4 D1 सम(Ś1 °मा)र्दयत्; K5 B (except B5) Dc1 Dn2 D2 5 G3 4 समार्पयत्.

28 For sequence in K1, cf v l 12 Dn1 D3 om. 28a (cf v l 27, 26). — a) G3.4 दुःशासन (for °नस्). — c) D5 सक्रुद्धम् (for सौभद्रम्) T G1.3 4 M अभिमन्यु च सौभद्रम्; G2 5 दुःशासनश्च (G5 °न च) सौभद्र — d) T G1 3 4 M3-5 तथा; M1 2 तदा (for रणे) Ś1 अभिमन्युं ततो रणे; K1-4 D1 धनंजयसुतं रणे; G2.5 सौभद्रश्चापि तं तथा

29 For sequence in K1, cf. v l. 12 — a) Dc1 D1 5 8 M3-5 मंडलानि विचित्राणि — c) B1 (marg as in text) व्रसमाणाव्; D1 3 6 स्वर°; D4 भ्रम° (for चर°) B2 (marg) अयुध्येतां (for अयुध्येतां) — d) D7 8 रथे; M1.2 रणे (for रथ) D3 6 युद्ध (for शिक्षा) K4 विशारदै

30 For sequence in K1, cf v l 12 — a) Ś1 K1 D1 क्रकच, K2 B Dc1 Dn1 D2-7 T G2-5 M1 क्रकच-; K3-5 B1 (marg) D8 क्रकच, Dn2 क्रकण; M3 कुकच (for क्रकर) Dn1 D5 भेरी- (for भेरि) K4 -जर्जराणां; K5 B2 8 S (except G5) झर्झरीणां; Dn1 -झिल्लिरिणां, D2 3 झ(D3 झि)ल्लरीणां (for झर्झराणाम्) — c) K5 Dn1 D7 8 S जना (for नरा)

Colophon. Ś2 missing — *Sub-parvan* Ś1 K1-3 B Dc1 Dn1 D1 5 7 8 अभिमन्युवध — *Day of Droṇa's Generalship* K1 3 तृतीययुद्धदिवसे; K2 द्वितीयदिवसे; T G3 तृतीयेह्नि — *Adhy name* K4 D7 अभिमन्यु

# ३९

संजय उवाच ।

शरविक्षतगात्रस्तु प्रत्यमित्रमवस्थितम् ।
अभिमन्युः स्मयन्धीमान्दुःशासनमथाब्रवीत् ॥ १
दिष्ट्या पश्यामि संग्रामे मानिनं शत्रुमागतम् ।
निष्ठुरं त्यक्तधर्माणमाक्रोशनपरायणम् ॥ २
यत्सभायां त्वया राज्ञो धृतराष्ट्रस्य शृण्वतः ।
कोपितः परुषैर्वाक्यैर्धर्मराजो युधिष्ठिरः ।
जयोन्मत्तेन भीमश्च बह्वबद्धं प्रभाषता ॥ ३
परवित्तापहारस्य क्रोधस्याप्रशमस्य च ।
लोभस्य ज्ञाननाशस्य द्रोहस्यात्याहितस्य च ॥ ४

---

दुःशासनयुद्ध; Dn2 D6 T G3 अभिमन्युयुद्ध, D4 चक्र युद्धे अभिमन्युयुद्ध; G2 अभिमन्युदुःशासनसमागम. —*Adhy no* (figures, words or both) B1 2 39, Dn1 S 38 (as in text), D2 35, D8 40 —*Śloka no* Do1 Dn1 30

## 39

☞ This adhy is missing in Ś2 (cf v l 7 34 20) For the sequence in K1, cf v l 7 38 12

1 After the ref, S ins

282* तत समभवद्युद्ध तयो पुरुषसिंहयो ।
तस्मिन्काले महाबाहु सौभद्र परवीरहा ।
सशरं कार्मुकं छित्त्वा लाघवेन न्यपातयत् ।
दुःशासनं शरैर्घोरै सततक्ष समन्तत ।
[ (L 3) T G2 व्यपातयत् ]

— a) K1 D5 विक्षिप्त; G5 वीक्षित K5 Dn D3 4 6 T G गात्रं (for गात्रस्) K6 च (for तु) — b) Ś1 K1-3 D1 7 प्रत्यमित्रान्, B1 °मित्र (for °त्रम्) Ś1 K1-3 D1 अवस्थित°; B2 व्यवस्थितान्; D7 अवस्थितान् — c) K1 स्वय श्रीमान्; K2 Dn1 स्मयञ्छ्रीमान्; S महाराज (for स्मयन्धीमान्)

2 b) B4 D1 6-8 शूरम् (for शत्रुम्) — c) D4 6 G3 5 -कर्माणम्, M1 2 च (for -ध) — K4 om 2d — d) G5 विक्रोशन (for आ°)

3 a) Ś1 K1 2 4 D1 8 सदा; T तथा (for त्वया) Dn3 यत्सभां त्वपरा राज्ञो; D2 पूर्वं सभायां यद्राज्ञो — b) T G1-3 धार्तराष्ट्रस्य (for धृत°) K1 B4 D7 8 T G2-5 M8 पश्यत (for शृण्वत) — After 3ab, K2 ins

283* अक्षकूट समाश्रित्य सौबलस्याभवद्बलम् ।
शृणु मे वचन तात पितृव्योऽसि महामते ।
सौहृद पृष्ठत कृत्वा सर्वैरेव दुरात्मभि ।
भुक्त राज्यमिद मूढै सर्वधर्मबहिष्कृतै ।
सुहृद्भिर्भुज्यते राज्य सुहृद्भिर्भुज्यते सुखम् ।
विना सुहृद्भिर्भोगाश्च ऐहिकामुष्मिक च यत् ।
स्थिराभूतं च तत्सर्वं सुहृद्भिर्वर्जितं तदा ।
दूर्धूतदेवना यूय पापिष्ठा पापवञ्चका ।
तेषां त्वमग्रणी पाप येन सा द्रुपदात्मजा ।
आनीता च सभां साध्वी तस्येद कर्मण फलम् ।
दर्शयिष्यामि सर्वेषां कुरूणां च दुरात्मनाम् ।

— a) K1 Dn1 D7 8 G3 4 पुरुषैर् (for प°) — c) Ś1 लोकोन्मत्तेन; K Dn1 D2 5 7 8 बलो°; D6 त्वयो° (for जयो°) Dn1 भीमस्तु; Dn3 D3 4 6 °स्य, D3 भीमेन (for भीमश्च) S जयोन्मादे (T G2 °यस्याजे; G3-5 °योध्याजे) न संरब्ध — f) K5 [अ]भद्र; M1 2 [अ]वध; Ca d [अ]बद्ध (as in text) K5 B5 D2 5 G5 प्रभाषित°; Dn D3 4 6 T G1-4 M °षित. Ś1 बहुभद्रमभाषत; K1-4 D1 बहुभद्र च भाषित — After 3, K5 Dn D3 4-6 S ins (cf 283*, line 1)

284* अक्षकूट समाश्रित्य सौबलेन दुरात्मना ।

[ M3 युधिष्ठिर°, M4 (*sup lin*) महात्मना (for दुरा°) K5 Dn D3 5 सौबलस्याबल बल; D4 सौबल *** बल, D6 सौबलस्य पलायिन (for the posterior half) ]

— K5 Dn1 D2 4-6 cont Ś1 K1-4 B Do1 D1 5 7 8 ins after 3 (cf 5cd)

285* तत्त्वयेदमनुप्राप्त तस्य कोपान्महात्मन ।

[ Dn1 त्वयेदमिह सप्राप्त (for the prior half) Ś1 कोपात्तस्य (by transp), D6 तत्कोपादे D6 महात्मना ]

4 D6 om (hapl) 4-5 — b) Ś1 K1-3 D1 [अ]पशमस्य; D3 [अ]पगमस्य; D4 प्रथमस्य; G3 5 [अ]तिश (for [अ]प्रश°) — c) G3 5 लोकस्य (for लोभस्य) S हीनस्य (for नाशस्य) — d) K5 Dn D1 मोहस्य; D4 लोभस्य (for द्रोहस्य). K1 4 D1

पितॄणां मम राज्यस्य हरणस्योग्रधन्विनाम् ।
तत्त्वामिदमनुप्राप्तं तत्कोपाद्वै महात्मनाम् ॥ ५
सद्यश्चोग्रमधर्मस्य फलं प्राप्नुहि दुर्मते ।
शासितास्म्यद्य ते बाणैः सर्वसैन्यस्य पश्यतः ॥ ६
अद्याहमनृणस्तस्य कोपस्य भविता रणे ।
अमर्षितायाः कृष्णायाः काङ्क्षितस्य च मे पितुः ॥ ७
अद्य कौरव्य भीमस्य भवितास्म्यनृणो युधि ।
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणम् ॥ ८
एवमुक्त्वा महाबाहुर्बाणं दुःशासनान्तकम् ।
संदधे परवीरघ्नः कालाग्न्यनिलवर्चसम् ॥ ९
तस्योरस्तूर्णमासाद्य जत्रुदेशे विभिद्य तम् ।
अथैनं पञ्चविंशत्या पुनश्चैव समर्पयत् ॥ १०
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
दुःशासनो महाराज कश्मलं चाविशन्महत् ॥ ११
सारथिस्त्वरमाणस्तु दुःशासनमचेतसम् ।
रणमध्यादपोवाह सौभद्रशरपीडितम् ॥ १२
पाण्डवा द्रौपदेयाश्च विराटश्च समीक्ष्य तम् ।
पाञ्चालाः केकयाश्चैव सिंहनादमथानदन् ॥ १३

---

[ अ ]भिहतस्य, Ca d [ अ ]त्याहि° (as in text) Ś1 प्रद्रोहस्याहितस्य च, S क्रूरस्यापनयस्य च

5 D6 om. 5 (of v l 4) — a) G4 राज्ञश्च (for राज्यस्य). — b) D8 4 हरणाच्च (for °णस्य) Ś1 धन्वनां (for धन्विनाम्) S दुर्जयस्योग्रधर्मिणां — c) K2 B1 8 5 Do1 D2 5 तत्त्वया; B3 4 तत्तु वा; G1 8 M सं त्वाम् (for तत्त्वाम्) D4 अनुप्राप्य — d) Ś1 कोपात्तेषां; K5 Dn1 D2 4 तेषां कोपान्; B4 Do1 प्रकोपाद्धि (Do1 °द्वै); S तस्य कोपान् (G3 5 °पं) (for तत्कोपाद्वै) D2 S महात्मन.

6 a) G2 5 सत्य, M8-5 साक्षात् (for सद्यश्). K2 6 चाग्रम्; K4 5 Dn1 D1 7 8 चाद्यम्; Do1 D8 6 चेदम्; D4 चैतद्; T G-5 कृतस्य; G1 M कृतम् (for चोग्रम्) D3 सद्यश्चायासधर्मस्य — b) K5 D3 5 G1 M आप्नुहि; T G3-5 आप्स्यसि (for प्राप्नुहि) — c) Dn2 D8 6 शासिष्यामि (for °तास्मि) S पातितास्म्य (G2 5 °तयिष्ये)द्य पापं (T G8 4 °प) त्वां

7 d) Dn1 कोपितस्य (for काङ्क्षि°) M8-5 जये (for च मे) K5 रिपु (for पितु)

8 a) D2 अथ (for अद्य) K1-8 Dn D1-4 8 कौरव; S तावस्य (for कौरव्य) — b) K6 भविता ह्यनृणो S भुवि (for युधि) — c) M8-5 त्व (for मे) Some MSS मोक्षसे

9 Before 9, S (except M1 2) ins संजय° — K1 reads the portion from 9b up to 7 40 3 after 7 37 5. — c) K4 T G2 3 5 -वीरघ्न — d) K4 कालाग्निनल°; T G1-3 5 M8-5 °ग्निसम- (for °ग्न्य निल).

10 For sequence in K1, of v l 9 — a) B4 D8 6 स शरस् (for तस्योरस्) — b) Ś1 D7 8 जत्रुदेश D2 5 विभज्य (for विभिद्य) Ś1 स; Dn2 D8 6 च (for तम्) — For 10ab, S subst

286* तेन तं जत्रुदेशे वै विद्धा परपुरंजय ।
[ G1 M ततस् (for तेन) M1 2 शत्रुदेशे (for जत्रु°) ]

— After 10ab, N (Ś2 missing) ins

287* जगाम सह पुङ्खेन वल्मीकमिव पन्नग ।

— c) D6 तथा (for अथ) — d) Ś1 K8 5 B D (except D1) एव, S अग्रै° (for चैव) Ś1 D4 समार्दयत्; K1-4 Dn2 D1 समर्द°, K5 B Dn1 D2 M5 समार्प°; D8 6 समार्छ° (for समर्प°) — After 10, N (Ś2 missing) ins

288* शरैरग्निसमस्पर्शैराकर्णसमचोदितै ।
[ K3 Dn1 D8-8 नोदितै (for चो°) ]

11 For sequence in K1, of v l 9 — b) K5 Dn1 S स्यदनोपस्थ आ( K6 Dn1 °स्थमा )विशत् — K2 reads 11cd on marg — c) G1 दुर्योधनो (for दुःशासनो) — d) S कश्मलापह( M1 2 °पहः; M8-5 °भिह )तो भृशं Cd cites कश्मल (as in text)

12 For sequence in K1, of v l 9 — a) B1 2 Do1 G1 M1 2 त (for तु) — b) K4 5 D2 5 S अचेतन. — c) Dn1 D4 अथोवाह (for अपो°)

13 For sequence in K1, of v l 9 G4 reads 13a–15b twice — b) Dn2 D7 8 तद् (for तम्). S (G4 both times) विराट° सह सृजयै°. — c) A few MSS पंचाला° K5 Do1 D5 7, 8 कैकयाश्; Dn D2 4, 6 सृंजयाश्. — d) K1-2 D1, 5 अथोन्नदन्.

वादित्राणि च सर्वाणि नानालिङ्गानि सर्वशः ।
प्रावादयन्त संहृष्टाः पाण्डूनां तत्र सैनिकाः ॥ १४
पश्यन्तः स्मयमानाश्च सौभद्रस्य विचेष्टितम् ।
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं पराजितम् ॥ १५
धर्ममारुतशक्राणामश्विनोः प्रतिमास्तथा ।
धारयन्तो ध्वजाग्रेषु द्रौपदेया महारथाः ॥ १६
सात्यकिश्चेकितानश्च धृष्टद्युम्नशिखण्डिनौ ।
केकया धृष्टकेतुश्च मत्स्यपाञ्चालसृंजयाः ॥ १७
पाण्डवाश्च मुदा युक्ता युधिष्ठिरपुरोगमाः ।
अभ्यवर्तन्त सहिता द्रोणानीकं विभित्सवः ॥ १८
ततोऽभवन्महद्युद्धं त्वदीयानां परैः सह ।
जयमाकाङ्क्षमाणानां शूराणामनिवर्तिनाम् ॥ १९
दुर्योधनो महाराज राधेयमिदमब्रवीत् ।
पश्य दुःशासनं वीरमभिमन्युवशं गतम् ॥ २०
प्रतपन्तमिवादित्यं निघ्नन्तं शात्रवान्रणे ।
सौभद्रमुद्यतास्त्रातुमभिधावन्ति पाण्डवाः ॥ २१

14 For the sequence in $K_1$, cf v 1 9 For the repetition in $G_4$, cf v 1 13 —$^{b}$) S ( $G_4$ both times ) हृष्टवत् ( for सर्वश॰ ) —$^{c}$) $K_{3.5}$ Dn $D_{1-8}$ T $G_{3.4}$ ( both times ) $_5$ $M_{3-5}$ प्रवादयत ( $K_5$ Dn $D_4$ T $M_{3-5}$ ॰न ), $G_1$ मावादयत॰ ; $G_2$ प्रसादयत॰ ; $M_{1.2}$ प्राग्वादयंत ( for ॰वादयन्त )

15 For the sequence in $K_1$, cf v 1 9 For the repetition in $G_4$, cf v 1 13 —$^{a}$) B $Do_1$ अपश्यन् ; $D_{5.6}$ पश्यत , $D_6$ पश्यत ; $D_{7.8}$ पश्यति ( for ॰त॰ ) S ( $G_4$ both times ) स्मयमाना स्म ( $G_{1.2}$ $M_{1.2}$ नाश्च ) पश्यति —$^{b}$) $K_4$ $D_1$ च चेष्टित॰ ( $D_1$ ॰तं ) —$^{c}$) $Dn_2$ $D_{3.4.6}$ S ( except $G_3$ ) दृष्ट्वा ( for दृप्तं ) —$^{d}$) $Dn_2$ $D_{3.4.6}$ दुष्ट , S ( except $G_6$ ) दृप्त ( $M_{1.2}$ प्त ) ( for दृष्ट्वा ) $K_{4.5}$ $D_{1.4.6}$ शत्रु ( for शत्रुं )

16 For the sequence in $K_1$, cf. v 1 9 —$^{b}$) $K_3$ $Dn_1$ S प्रतिमाश्चाश्विनो॰ शुभा॰ —$^{c}$) $G_1$ $M_{1.2}$ भारयंतो ( for धार ) $Dn_2$ ध्वजाग्र्यांश्च , $D_{1.7.8}$ ॰ग्र्येषु , S रथाग्र्ये( $G_{1.5}$ $M_{1.2}$ ग्रे )षु —$^{d}$) $G_1$ $M_{1.2}$ द्रौपदेयान्महारथान् ( $G_1$ ॰या )

17 For the sequence in $K_1$, cf v 1 9 —$^{a}$) $M_{3.4}$ सत्यकिश्च —$^{c}$) $K_3$ $Dn_2$ $D_{1.7}$ कैकया ; $K_3$ $B_{1.3}$ $Do_1$ $Dn_1$ $D_{3.4.5.8}$ कैकेया ; $D_6$ कैकेयो —$^{d}$) $K_{3.4}$ B ( except $B_2$ ) $D_{6.7}$ मत्स्या॰ ( for मत्स्य- ) S पांचाला मत्स्यसृंजया

18 For the sequence in $K_1$, cf v 1 9 —$^{a}$) $D_2$ पांचालाश्च ; $G_3$ पांडवेया ( for ॰वाश्च ) —$^{c}$) B $Do_1$ S अभ्यद्र( $G_3$ ॰धा )वत ( for ॰वर्तन्त ) $Ś_1$ मुदिता ; $K_4$ $Dn_1$ $D_2$ सहसा ; B $Do_1$ त्वरिता ; T $G_{2-5}$ संहृष्टा ; $G_1$ M संक्रुद्धा ( for सहिता ).

19 For the sequence in $K_1$, cf v 1 9 —$^{a}$) $Ś_1$ $K_{2-4}$ $D_1$ तत्राभवन् ; S यथा ( for ततोऽभ॰ ) $K_{4.5}$ B $Do_1$ $D_4$ महा ( for महद् ) —$^{c}$) $D_5$ चाकांक्षमाणानां ( for ॰मा ). —$^{d}$) $D_8$ अभि ( for अनि ) S अतिघोरमभीतवत् — After 19, N ( $Ś_1$ missing ) ins

289* तथा तु वर्तमाने वै संग्रामेऽतिभयंकरे ।

[ $Ś_1$ $K_{3.4}$ $D_{1.7.8}$ तथाभि , $K_2$ युद्धेभि ; $K_6$ $D_2$ तथाति , $B_{2.4}$ तेषां तु ; $Dn_1$ तथा च ( for तथा तु ) ]

20 For the sequence in $K_1$, cf v 1 9 —$^{a}$) $Ś_1$ $K_{1.2}$ $D_1$ महाराजो ( for ॰ज ) S अथ दुर्योधनो राजा —$^{b}$) $D_8$ इति च ( for इदम् )

21 For the sequence in $K_1$, cf v 1 9 —$^{a}$) $K_2$ प्रपतत्तम् $M_{1.2}$ आयात ( for आदित्य ) —$^{b}$) S निघ्नत क्षत्रियर्षभान् — After $21^{ab}$, N ( $Ś_1$ missing, $B_3$ on marg ) ins

290* अथ चैते सुसंरब्धा सिंहा इव बलोत्कटा ।

[ $Ś_1$ $K_{1-4}$ $Dn_1$ $D_{7.8}$ अपि , $B_5$ तथा ( for अथ ) $K_5$ $Dn_1$ $D_5$ चैव सु ; $B_1$ चैतेषु , $D_4$ चैव सु ( for चैते सु ) $K_5$ $Dn_1$ $D_4$ मदो( $D_8$ ॰द्दो )त्कटा ]

—$^{c}$) Dn $D_{1.2.5-8}$ $G_1$ M मुदितास् ; T $G_{2-5}$ अभितस् ( for उद्यतास् ) $K_1$ सौभद्रस्तु त त्रातुम् ( submetric ) —$^{d}$) $Ś_1$ $K_2$ B ( except $B_1$ ) $Do_1$ $Dn_2$ $D_{2-5}$ अभ्यधावत ( $D_5$ ॰ति ) — After 21, $K_2$ ins

291* ततः कर्णो ययौ राजन्नभिमन्युजिघांसया ।
बालोऽयं युध्यमानोऽद्य मया योद्धुमिहेच्छति ।
एनं वधिष्यामि रिपुं यथा वृत्रं शचीपतिः ।
एवमुक्त्वा तु राधेयो रथारूढो महारथः ।
ययौ योद्धुं महावीरः कुरूणां तत्र पश्यताम् । [5]
प्रध्माप्य शङ्खं राधेयो महामेघौघनिस्वनम् ।
रथेनाभ्यपतद्वेगादादित्यसदृशेन वै ।
धनुषा पूर्यमाणेन मौर्वीगुणविभूषिणा ।

29

ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम् ।
अभ्यवर्षत संक्रुद्धः पुत्रस्य हितकृत्तव ॥ २२
तस्य चानुचरांस्तीक्ष्णैर्विव्याध परमेषुभिः ।
अवज्ञापूर्वकं वीरः सौभद्रस्य रणाजिरे ॥ २३
अभिमन्युस्तु राधेयं त्रिसप्तत्या शिलीमुखैः ।
अविध्यत्त्वरितो राजन्द्रोणं प्रेप्सुर्महामनाः ॥ २४
तं तदा नाशकत्कश्चिद्द्रोणाद्वारयितुं रणे ।
आरुजन्तं रथश्रेष्ठान्वज्रहस्तमिवासुरान् ॥ २५
ततः कर्णो जयप्रेप्सुर्मानी सर्वधनुर्भृताम् ।
सौभद्रं शतशोऽविध्यदुत्तमास्त्राणि दर्शयन् ॥ २६
सोऽस्त्रैरस्त्रविदां श्रेष्ठो रामशिष्यः प्रतापवान् ।
समरे शत्रुदुर्धर्षमभिमन्युमपीडयत् ॥ २७
स तथा पीड्यमानस्तु राधेयेनास्त्रवृष्टिभिः ।
समरेऽमरसंकाशः सौभद्रो न व्यषीदत ॥ २८
ततः शिलाशितैस्तीक्ष्णैर्भल्लैः संनतपर्वभिः ।
छित्त्वा धनूंषि शूराणामार्जुनिः कर्णमार्दयत् ।
स ध्वजं कार्मुकं चास्य छित्त्वा भूमौ न्यपातयत् ॥ २९
ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः ।

---

शरैरग्निशिखाकारैराशीविषसमप्रभैः ।

22 For the sequence in $K_1$, of v 1 9 — [a]) $Ś_1$ $K_{1\ 3-5}$ Dn $D_{1-5}$ शितैर्बाणैर्, $D_{6-8}$ सितैर्बाणैर् (for शरैस्तीक्ष्णैर्) $K_2$ विव्याध निशितैर्बाणैर् — [b]) S महारथ ($M_4$ °थ°) (for दुरासदम्) — $B_3$ reads 22[cd] on marg — [c]) $Dn_1$ अभ्यवर्तत, $D_2$ °वर्षत; S °वर्षत्सु (for °त) $K_5$ $Dn_1$ संग्रामे, $G_{4\ 5}$ सक्रुद्ध — [d]) $K_1$ स तस्य (for पुत्रस्य) $K_5$ $Dn_1$ S प्रिय (for हित-)

23 For the sequence in $K_1$, of v 1 9 — [a]) $Ś_1$ $D_8$ तत्र (for तस्य) — [b]) S विष्टम्य (for विव्याध) — [c]) B $Da_1$ $Dn_2$ $D_{3\ 4\ 6}$ शूर, S शूरं (for वीर°). — [d]) S सौभद्र प्रत्यवु($G_1$ M °वि)ध्यत

24 For the sequence in $K_1$, of v 1 9 — [a]) $Dn_2$ $D_{3\ 4\ 6}$ च (for तु) — [b]) $D_8$ सप्तत्या त्रि- (for त्रिसप्तत्या) S शिलाशितै (for शिलीमुखै°) — [c]) $Ś_1$ $D_5$ त्वरित; $Dn_2$ $D_{3\ 4\ 6}$ कुपितो (for त्वरितो) — [d]) $K_{1\ 2}$ $B_{3\ 5}$ $D_5$ S द्रोण (for द्रोणं) $Dn_1$ $G_1$ M महारथं; $D_4$ $G_3$ °रथा, T $G_{2\ 4\ 5}$ °रथ° (for °मना°)

25 For the sequence in $K_1$, of v 1 9 — [a]) $D_{7\ 8}$ न (for तं) $B_4$ $D_{1\ 2\ 5\ 6}$ S तथा (for तदा) $Ś_1$ राजन् (for कश्चिद्) — [b]) $G_1$ $M_{1\ 2}$ द्रोण (for द्रोणाद्) B $Da_1$ $Dn_2$ $D_{3\ 4\ 6}$ रथी ($B_4$ बली) (for रणे) — [c]) $B_4$ रारुजंतं $Ś_1$ $D_{3\ 4\ 6-8}$ रथश्रेष्ठ (for °श्रेष्ठान्) — [d]) $G_{2\ 5}$ वज्रहस्त (for °स्तम्) N ($Ś_2$ missing) वज्रहस्तात्मजात्मजं ($D_2$ °न्महात्मन°)

26 For the sequence in $K_1$, of v 1 9 — [a]) $Dn_1$ जयं (for जय) — [b]) $K_1$ तेषां (for मानी). $K_5$ $B_{3\ 4}$ Dn $D_{3\ 4\ 6}$ धनुष्मतां (for °र्भृताम्). S राजन्सैन्ये पराजिते — [d]) S परमास्त्राणि (for उत्त°)

27 For the sequence in $K_1$, of v 1 9 — [b]) $Dn_2$ $D_{3\ 4\ 6}$ राधेयस्तु (for रामशिष्य) $D_5$ परमास्त्राणि दर्शयन् — [c]) S समेत्य (for समरे) $D_{3\ 6}$ T $G_{1-4}$ $M_{1\ 3-5}$ शत्रुः; $M_2$ शत्रुर् (for शत्रु) $D_{3\ 6}$ दुर्धर्षम् (for दुर्धर्षम्) $K_5$ $Dn_1$ दुर्धर्षं समरे शत्रुम्

28 For the sequence in $K_1$, of v 1 9 $D_1$ om 28 — [a]) $K_{4\ 5}$ $Da_1$ $D_1$ तदा (for तथा) $B_3$ $Da_1$ च (for तु) $D_4$ पीड्यमानस्तु राधेये — [b]) $D_{7\ 8}$ राधेयशर; $G_5$ °यास्त्र (for °येनास्त्र) — [d]) $K_1$ $D_1$ सौभद्रेण (for °द्रो न) $K_4$ व्यषीदित°; $B_{1-3\ 5}$ $Da_1$ $Dn_2$ $D_{3\ 6}$ व्यसीदत; $D_2$ व्यशी°, S विषीदति

29 For the sequence in $K_1$, of v 1 9 — [b]) B $Da_1$ $D_2$ आनत (for सनत) $Ś_1$ सौभद्रो नतपर्वभि — [c]) $D_{3\ 6}$ भित्त्वा (for छित्त्वा) S वीराणाम् (for शू°) — [d]) $D_{7\ 8}$ S अर्दयत् (for आ°) — After 29[cd], N ($Ś_2$ missing) ins

292* धनुर्मण्डलनिर्मुक्तैः शरैराशीविषोपमैः ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ।
कर्णोऽपि चास्य चिक्षेप बाणान्संनतपर्वण ।
असंभ्रान्तश्च तान्सर्वानगृह्णात्फल्गुनात्मज ।
ततो मुहूर्तात्कर्णस्य बाणेनैकेन वीर्यवान् । [5]

[(L 3) $D_{3\ 4\ 6}$ एवास्य (for ऽपि चास्य) $Dn_2$ $D_{3\ 4\ 6}$ नाराचान् (for बाणान्स) $D_2$ पर्वभि — (L 4) $K_1$ असंभ्रांतांश्च $D_{4\ 5}$ गृह्णीयात् (for अगृह्णात्) Some MSS फाल्गुनात्मज ]

On the other hand, S ins after 29[cd]

293* तस्मै चिक्षेप निशितं शरं परमसंहितम् ।

सौभद्रमभ्ययात्तूर्णं दृढमुद्यम्य कार्मुकम् ॥ ३०
तत उच्चुक्रुशुः पार्थास्तेषां चानुचरा जनाः ।
वादित्राणि च संजघ्नुः सौभद्रं चापि तुष्टुवुः ॥ ३१

इति श्रीमहाभारते द्रोणपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## ४०

संजय उवाच ।
सोऽभिगर्जन्धनुष्पाणिर्ज्यां विकर्षन्पुनः पुनः ।
तयोर्महात्मनोस्तूर्णं रथान्तरमवापतत् ॥ १
सोऽविध्यद्दशभिर्बाणैरभिमन्युं दुरासदम् ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ २
पितृपैतामहं कर्म कुर्वाणमतिमानुषम् ।
दृष्ट्वार्दितं शरैः कार्ष्णिं त्वदीया हृषिताभवन् ॥ ३
तस्याभिमन्युरायम्य स्मयन्नेकेन पत्रिणा ।
शिरः प्रच्यावयामास स रथात्प्रापतद्भुवि ॥ ४
कर्णिकारमिवोद्धूतं वातेन मथितं नगात् ।
भ्रातरं निहतं दृष्ट्वा राजन्कर्णो व्यथां ययौ ॥ ५
विमुखीकृत्य कर्णं तु सौभद्रः कङ्कपत्रिभिः ।
अन्यानपि महेष्वासांस्तूर्णमेवाभिदुद्रुवे ॥ ६
ततस्तद्विततं जालं हस्त्यश्वरथपत्तिमत् ।

—$^{e}$) N (Ś2 missing) वीरश्च (for चास्य). —$^{f}$) G4 शत्रून् (for भूमौ) B8 4 अपातयत् (for न्य°)

30 For the sequence in K1, cf v 1 9 —$^{ab}$) Dn2 कर्णो S transp कर्ण and दृष्ट्वा Dn2 दृष्ट्वा तु तदनन्तर; D4 दृष्ट्वा कर्णानुजं सुहृत् Cd cites अनन्तर (as in text) —$^{c}$) D8 कर्ण (for तूर्णं) —$^{d}$) S आयस्य (for उद्यम्य)

31 For the sequence in K1, cf v 1 9 —$^{a}$) Ś1 ते चुक्रुशु, K5 तु चु (for उच्च) S सर्वे (for पार्थास्) —$^{b}$) Dn1 अनुचरा (for चा°) D4 तेषां चारु चरानुजा; S पार्था सानुचरास्तथा (G1 M °दा) —$^{c}$) T G1–4 [अ]थ; G3 5 M [अ]भि (for च) —$^{d}$) Dn1 G1 M1 2 अभि; D4 अपि (for चापि)

Colophon Ś2 missing — *Sub parvan* Ś1 K1–8 B1–4 Da1 Dn1 D1 4 5 7 8 अभिमन्युवध — *Day of Droṇa's Generalship* K1 8 तृतीययुद्धदिवसे; K2 तृतीयदिवसे — *Adhy name* K3 कर्णदुःशासनपराजय; Dn2 D6 अभिमन्युयुद्धं; D2 3 दुःशासनकर्णपराजय; D4 चक्रव्यूह — *Adhy no* (figures, words or both) B1 3 Dn1 S 39 (as in text), D5 36 — *Śloka no* Da1 Dn1 37

## 40

☞ This adhy is missing in Ś2 (cf v 1 7 34 ... the sequence in K1, cf. v 1 7 39 9

1 $^{a}$) Ś1 B5 सोतिगर्जन्; Dn2 D3 4 6 सोपि राजन्, S सोभ्यगच्छद् —$^{d}$) B2 Dn1 D4 5 [अ]पातयत्, D6 [अ]वारयत्; Cv [अ]वापतत् (as in text)

2 D4 om 2$^{c}$–4$^{a}$ —$^{c}$) B5 D6 सध्वजच्छत्रयन्तार —$^{d}$) K1 साश्ववाह, G2 कार्ष्णिमाशु (for साश्वमाशु)

3 D4 om 3 (cf v 1 2) —$^{b}$) S [अ]पराजितं (for [अ]तिमानुषम्) —$^{c}$) K4 D7 8 S [अ]र्पित (for [अ]र्दित). —$^{d}$) K1–3 D1 7 8 हर्षिता (for हृषिता)

4 D4 om 4$^{a}$ (cf v 1 2) —$^{a}$) D8 [आ]नम्य (for [आ]यम्य) —$^{b}$) K5 स्मयन्नेव पतत्रिणा; S स्मयन्नि (G1 M1–4 °न्ने)व महारथ —$^{cd}$) Ś1 B Da1 Dn D3–6 तद् (for स) K1–4 D1 सकुंडलशिर काया त्पातयामास भूतले

5 $^{a}$) B [आ]धूत (for [उ]द्धूत) —$^{b}$) K1–4 [उ]न्मथित; K5 B2 D2 S पतितं, B1, 3–5 [आ]पतित, Dn2 D3 4 मृदित; D5 पातित (for मथित) D7 8 द्रुमं; S भुवि (for नगात्) — After 5$^{ab}$, S ins

294* कर्णानुज च संप्रेक्ष्य तावका व्यथिताभवन् ।

—$^{d}$) D2 5 राधेयस्तु (for राजन्कर्णो) S कर्णश्चासीत्प राङ्मुख — After 5, K2 ins a passage given in App I (No 6)

6 Before 6, K2 ins संजय उवाच D4 om 6$^{b}$–7$^{b}$ —$^{cd}$) S अन्यांश्च परमेष्वासांस्तूर्णं कर्णमुपाद्रवत्

ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम् ।
अभ्यवर्षत संक्रुद्धः पुत्रस्य हितकृत्तव ॥ २२
तस्य चानुचरांस्तीक्ष्णैर्विव्याध परमेषुभिः ।
अवज्ञापूर्वकं वीरः सौभद्रस्य रणाजिरे ॥ २३
अभिमन्युस्तु राधेयं त्रिसप्तत्या शिलीमुखैः ।
अविध्यत्त्वरितो राजन्द्रोणं प्रेप्सुर्महामनाः ॥ २४
तं तदा नाशकत्कश्चिद्द्रोणाद्वारयितुं रणे ।
आरुजन्तं रथश्रेष्ठान्वज्रहस्तमिवासुरान् ॥ २५
ततः कर्णो जयप्रेप्सुर्मानी सर्वधनुर्भृताम् ।
सौभद्रं शतशोऽविध्यदुत्तमास्त्राणि दर्शयन् ॥ २६
सोऽस्त्रैरस्त्रविदां श्रेष्ठो रामशिष्यः प्रतापवान् ।
समरे शत्रुदुर्धर्षमभिमन्युमपीडयत् ॥ २७
स तथा पीड्यमानस्तु राधेयेनास्त्रवृष्टिभिः ।
समरेऽमरसंकाशः सौभद्रो न व्यषीदत ॥ २८
ततः शिलाशितैस्तीक्ष्णैर्भल्लैः संनतपर्वभिः ।
छित्त्वा धनूंषि शूराणामार्जुनिः कर्णमार्दयत् ।
स ध्वजं कार्मुकं चास्य छित्त्वा भूमौ न्यपातयत् ॥ २९
ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः ।

---

शरैरग्निशिखाकारैराशीविषसमप्रभैः ।

22 For the sequence in K1, cf v l 9 — a) Ś1 K1 3–5 Dn D1–5 शितैर्बाणैर्; D6–8 सितैर्बाणैर् (for शरैस्तीक्ष्णैर्) K2 विव्याध निशितैर्बाणैर् — b) S महारथ (M4 °थ°) (for दुरासदम्) — B3 reads 22cd on marg — c) Dn1 अभ्यवर्सत, D2 °वर्षत; S °वर्षन्सु (for °त) K5 Dn1 संग्रामे; G4 5 °सक्रुद्ध — d) K1 स तस्य (for पुत्रस्य) K5 Dn2 S प्रिय (for हित-)

23 For the sequence in K1, cf v l 9 — a) Ś1 D3 तत्र (for तस्य) — b) S विष्टम्य (for विव्याध) — c) B Do1 Dn2 D3 4 6 शूर; S शूरं (for वीर°). — d) S सौभद्र प्रत्ययु(G1 M °वि)ध्यत

24 For the sequence in K1, cf v l. 9 — a) Dn2 D3 4 6 च (for तु) — b) D3 सप्तत्या त्रि (for त्रिसप्तत्या) S शिलाशितै° (for शिलीमुखै) — c) Ś1 D5 त्वरित, Dn2 D3 4 6 कुपितो (for त्वरितो) — d) K1 2 B3 5 D5 S द्रोण (for द्रोणं) Dn1 G1 M महारथं, D4 G3 °रथा, T G2 4 5 °रथ. (for °मना°)

25 For the sequence in K1, cf v l 9 — a) D7 8 न (for तं) B4 D1 2 5 6 S तथा (for तदा) Ś1 राजन् (for कश्चिद्) — b) G1 M1 2 द्रोण (for द्रोणाद्) B Do1 Dn2 D3 4 6 रथी (B4 बली) (for रणे). — c) B4 रारुजंत Ś1 D3 4 6–8 रथश्रेष्ठ (for °श्रेष्ठान्) — d) G2 5 वज्रहस्त (for °स्तम्) N (Ś1 missing) वज्रहस्तात्मजात्मजं (D2 °न्महात्मन)

26 For the sequence in K1, cf v l 9 — a) Dn2 जय (for जय) — b) K1 तदा (for मानी) K5 B2 4 Dn D3 4 6 धनुष्मतां (for °भृताम्). S राजन्सैन्ये पराजिते — d) S परमास्त्राणि (for उत्त°)

27 For the sequence in K1, cf v l 9 — b) Dn2 D3 4 6 राधेयस्तु (for रामशिष्य) D6 परमास्त्राणि दर्शयन् — c) S समेत्य (for समरे) D3 6 T G1–4 M1 3–5 शत्रु; M2 शत्रुर् (for शत्रु) D3 6 उद्धर्षम् (for दुर्धर्षम्). K5 Dn1 दुर्धर्षं समरे शत्रुम्

28 For the sequence in K1, cf v l 9 D6 om 28 — a) K4 5 Do1 D1 तदा (for तथा) B3 Do1 च (for तु) D4 पीड्यमानस्तु राधेये — b) D7 8 राधेयशर; G5 °यास्त्र (for °येनास्त्र) — d) K1 D1 सौभद्रेण (for °द्रो न) K4 व्यषीदित°; B1–3 5 Do1 Dn2 D3 6 व्यसीदत, D2 व्यशी°, S विषीदति

29 For the sequence in K1, cf v l 9 — b) B Do1 D2 आनत- (for सनत) Ś1 सौभद्रो नतपर्वभि° — c) D3 6 भित्त्वा (for छित्त्वा) S वीराणाम् (for शू°) — d) D7 8 S अर्दयत् (for मा°) — After 29cd, N (Ś1 missing) ins

292* धनुर्मण्डलनिर्मुक्तैः शरैराशीविषोपमैः ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ।
कर्णोऽपि चास्य चिक्षेप बाणान्संनतपर्वणः ।
असंभ्रान्तश्च तान्सर्वानगृह्णात्फल्गुनात्मजः ।
ततो मुहूर्तात्कर्णस्य बाणेनैकेन वीर्यवान् । [5]

[ (L 3) D3 4 6 पुनास्य (for ऽपि चास्य) Dn2 D3 4 6 नाराचान् (for बाणान्स) D2 पर्वभि° — (L 4) K1 असंभ्रांतांश्च D4 5 गृह्णीयात् (for अगृह्णात्) Some MSS फाल्गुनात्मज ]

On the other hand, S ins after 29cd

293* तस्मै चिक्षेप निशितं शरं परमसंहितम् ।

सौभद्रमभ्ययात्तूर्णं दृढमुद्यम्य कार्मुकम् ॥ ३०
तत उच्चुक्रुशुः पार्थास्तेषां चानुचरा जनाः ।
वादित्राणि च संजघ्नुः सौभद्रं चापि तुष्टुवुः ॥ ३१

इति श्रीमहाभारते द्रोणपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## ४०

संजय उवाच ।
सोऽभिगर्जन्धनुष्पाणिर्ज्यां विकर्षन्पुनः पुनः ।
तयोर्महात्मनोस्तूर्णं रथान्तरमवापतत् ॥ १
सोऽविध्यद्दशभिर्बाणैरभिमन्युं दुरासदम् ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ २
पितृपैतामहं कर्म कुर्वाणमतिमानुषम् ।
दृष्ट्वार्दितं शरैः कार्ष्णिं त्वदीया हृषिताभवन् ॥ ३
तस्याभिमन्युरायम्य स्मयन्नेकेन पत्रिणा ।
शिरः प्रच्यावयामास स रथात्प्रापतद्भुवि ॥ ४
कर्णिकारमिवोद्धूतं वातेन मथितं नगात् ।
भ्रातरं निहतं दृष्ट्वा राजन्कर्णो व्यथां ययौ ॥ ५
विमुखीकृत्य कर्णं तु सौभद्रः कङ्कपत्रिभिः ।
अन्यानपि महेष्वासांस्तूर्णमेवाभिदुद्रुवे ॥ ६
ततस्तद्विततं जालं हस्त्यश्वरथपत्तिमत् ।

---

— ᵉ) N (Ś1 missing) वीरस्य (for चास्य) — ᶠ) G4 धात्रूत् (for भूमौ) B6 4 अपातयत् (for न्य°)

30 For the sequence in K1, cf v 1 9 — ᵃᵇ) Dn2 कर्णो S transp कर्ण and दृष्ट्वा Dn2 दृष्ट्वा तु तदनन्तरं, D4 दृष्ट्वा कर्णनरराजः सुहृत् Cd cites अनन्तर (as in text) — ᶜ) D8 कर्ण (for तूर्णं) — ᵈ) S आयम्य (for उद्यम्य)

31 For the sequence in K1, cf v 1 9 — ᵃ) Ś1 ते चुक्रुशुः, K6 तु चु (for उच्चु°) S सर्वे (for पार्थास्) — ᵇ) Dn1 अनुचरा (for चा°) D4 तेषां चारु चरानुगाः ; S पार्था सानुचरास्तथा (G1 M °दा) — ᶜ) T G1-4 [अ]थ ; G1 5 M [अ]भि- (for च) — ᵈ) Dn1 G1 M1 2 आभि ; D4 अपि (for चापि)

Colophon Ś1 missing — *Sub parvan* Ś1 K1-5 B1-4 Dc1 Dn1 D1 4 5 7 8 अभिमन्युवध — *Day of Droṇa's Generalship* K1, 8 तृतीययुद्धदिवसे ; K3 तृतीयदिवसे — *Adhy name* K6 कर्णदुःशासनपराजय, Dn2 D6 अभिमन्युयुद्धं ; D2 5 दुःशासनकर्णपराजय ; D4 चक्रव्यूह — *Adhy no* (figures, words or both) B1, 2 Dn1 S 39 (as in text), D5 36 — *Śloka no* Dc1 Dn1 37

## 40

☞ This adhy is missing in Ś1 (cf v 1. 7 34 20) For the sequence in K1, cf. v 1 7 39 9.

1 ᵃ) Ś1 B5 सोतिगर्जन् ; Dn2 D3 4 5 सोपि राजन्, S सोऽभ्यगच्छद् — ᵈ) B1 Dn1 D4 5 [अ]पातयत्, D6 [अ]वारयत् ; Cv [अ]वापतत् (as in text)

2 D4 om 2ᶜ-4ᵃ — ᶜ) B5 D6 सध्वजच्छत्रयन्तार — ᵈ) K1 साश्ववाह ; G2 कार्ष्णिमाशु (for साश्वमाशु)

3 D4 om 3 (cf v 1 2) — ᵇ) S [अ]पराजित (for [अ]तिमानुषम्) — ᶜ) K4 D7 8 S [अ]र्दित (for [अ]र्दितं). — ᵈ) K1-3 D1 7 8 हर्षिता (for हृषिता)

4 D4 om 4ᵃ (cf v 1 2) — ᵃ) D5 [आ]नम्य (for [आ]यम्य) — ᵇ) K6 स्मयन्नेव पतत्रिणा, S स्मयन्नि(G1 M1-4 न्ने)व महारथ — ᶜᵈ) Ś1 B Dc1 Dn D2-6 तद् (for स) K1-4 D1 सकुण्डलशिरः कायात् पातयामास भूतले

5 ᵃ) B [आ]धूत (for [उ]द्धूत) — ᵇ) K1-4 [उ]न्मथित, K6 B2 D2 S पतित, B1 3-5 [आ]पतित, Dn2 D6 4 मृदित, D5 पातित (for मथित) D7 8 द्रुमं ; S भुवि (for नगात्) — After 5ᵃᵇ, S ins

294* कर्णानुजं च संप्रेक्ष्य तावका व्यथिताभवन् ।

— ᵈ) D2 5 राधेयस्तु (for राजन्कर्णो) S कर्णश्चासीत्पराङ्मुख — After 5, K2 ins a passage given in App I (No 6)

6 Before 6, K2 ins संजय उवाच D4 om 6ᵇ-7ᵃ. — ᶜᵈ) S अन्यांश्च परमेष्वासांस्तूर्णं कर्णमुपाद्रवत्

झषः क्रुद्ध इवाभिन्ददभिमन्युर्महायशाः ॥ ७
कर्णस्तु बहुभिर्बाणैरर्द्यमानोऽभिमन्युना ।
अपायाज्जवनैरश्वैस्ततोऽनीकमभिद्यत ॥ ८
शलभैरिव चाकाशे धाराभिरिव चावृते ।
अभिमन्योः शरै राजन्न प्राज्ञायत किंचन ॥ ९
तावकानां तु योधानां वध्यतां निशितैः शरैः ।
अन्यत्र सैन्धवाद्राजन्न स कश्चिदतिष्ठत ॥ १०
सौभद्रस्तु ततः शङ्खं प्रध्माप्य पुरुषर्षभः ।
शीघ्रमभ्यपतत्सेनां भारतीं भरतर्षभ ॥ ११
स कक्षेऽग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् ।
मध्ये भारतसैन्यानामार्जुनिः पर्यवर्तत ॥ १२
रथनागाश्वमनुजानर्दयन्निशितैः शरैः ।
स प्रविश्याकरोद्भूमिं कबन्धगणसंकुलाम् ॥ १३
सौभद्रचापप्रभवैर्निकृत्ताः परमेषुभिः ।
स्वानेवाभिमुखान्घ्नन्तः प्राद्रवञ्जीवितार्थिनः ॥ १४
ते घोरा रौद्रकर्माणो विपाठाः पृथवः शिताः ।
निघ्नन्तो रथनागाश्वाञ्जग्मुराशु वसुंधराम् ॥ १५
सायुधाः साङ्गुलित्राणाः सखड्गाः साङ्गदा रणे ।

7 D4 om $7^{ab}$ (cf. v l 6) — a) D2 5 तु (for तद्) K5 Dn1 D2 5 विविध, T G2–5 विहित (for विततं) Ś1 K Dn D1–3 5–8 सैन्य (for जाल) Do1 ततस्त्वद्धितसंजातं. — cd) N (Ś2 missing) क्रुद्धोऽभिमन्युरभिनत्तिग्म(Dn2 D3, 6 °त्तीव्र)तेजा महायशाः (Ś1 K1, 3 D3 °रथ). Ca d cite तिग्मतेजाः

8 d) B4 Dn2 D7 8 T G2 [अ]भज्यत; D3 [अ]विध्यत (for [अ]भिद्यत) — After 8, T G M3 4 ins

295* तिष्ठ कर्ण महेष्वास कृप दुर्योधनेति च ।
द्रोणस्य क्रोशतो राजंस्तदनीकमभज्यत ।

9 a) S [आ]काशं (for °काशे) — b) G2 [अ]भि (for [इ]व). T G2–5 सवृतं; G1 M पर्वत (for चावृते) — c) S छन्न (for राजन्) — Ś1 K1 3 4 D1 om (hapl) $9^{d}$–$10^{c}$ — d) K2 5 Dn1 D5 S प्रज्ञायत (for प्राज्ञा°)

10 Ś1 K1, 3 4 D1 om $10^{abc}$ (cf. v l 9) D6 om. $10^{abc}$ — a) K2 Dn D2 4 5 7 8 च (for तु) D3 परेषां तु; G1 3–5 M तु यौधानां (for तु योधानां). — b) D2, 5 M1 2 विध्यतां (for व°). — c) T G3–5 M3–5 नान्यत्र (for अन्यत्र) — d) Dn2 D3 [अ]शिष्यत (for [अ]तिष्ठत) Ś1 कश्चिन्न स तात व्यतिष्ठत (sic), K4 ना स्म कश्चन तिष्ठते, K5 न स्म किंचिदधिष्ठते; D4 6 न कश्चिदवशिष्यते; T G3–5 M3–5 काश्चित्तत्राव(T °त्राप्य; G3 4 °त्राप्य)तिष्ठति

11 b) D5 प्रदध्मौ (for प्रध्माप्य) Ś1 B1 Dn2 D2–6 पुरुषर्षभ, K5 भरतर्षभ (for पुरुषर्षभ). S प्रध्माय रणमूर्धनि. — d) S पितृनदन (for भरतर्षभ).

12 K2 (marg) Do1 S repeat 12 after $21^{ab}$ — a) Ś1 D1 स कक्ष्येऽग्निर्; K2 Do1 S (all second time) कक्षमग्निर् Ś1 K1 2 [उ]त्कृष्टो (Ś1 °ष्ट), K3 4 D1 [उ]त्क्रुष्टो (for [उ]त्सृष्टो) — b) G2–4 (all second time) [अ]रिवाहिनीं (for तरसा रिपून्) — c) D1 3 भरतसैन्यानाम् — K4 om $12^{c}$–$13^{d}$ — d) K2 (marg) Do1 S (all second time) प्रत्यदृश्यत

13 K4 om. 13 (cf v l 12) — a) Dn2 D3 4, 6 रथाश्वनागांश्च समरे; S रथाश्वनागमनुजान्. — b) Dn1 मर्दयन्; Dn2 D3 4 5–8 G3 4 निर्दहन्; T G2 निर्दयन्; G5 निर्भिंदन् (for [अ]र्दयन्) Ś1 K1–3 D1 निर्दहन्निव पावक — c) K5 B3–5 G3 4 सम्प्रविश्य (for स प्र°) — d) Dn2 D3 4 6 कबन्धशत (for °गण).

14 a) Ś1 (sup lin as in text) निर्भिन्नैर्, Dn1 -निनदैर् (for प्रभवैर्) — b) Dn2 D3 5 6 निकृत्ता; D2 निक्षता (for निकृत्ता) T G3 4 तव सैनिका (for परमेषुभि) — c) Dn2 D6 T G2–5 [अ]भिमुखा (for °खान्). Dn1 D4 जघ्नु (for घ्नन्त) — d) K1–4 D1 जीवितेप्सव (for °तार्थिन) Dn1 प्राद्रवंस्ततस्तत

15 a) D3 6 घोर (for घोरा) Ś1 K Dn1 D2 5 7 8 ते रौद्रा घोरकर्माणो — b) D3 वियाता (for विपाठा). B Do1 Dn2 बहव (for पृथव) Ś1 शरा, K4 5 Dn1 D7 8 सिता (for शिता) — c) Ś1 रथि; G1 M1 2 वर- (for रथ) — d) Dn2 समाजग्मुर् (for जग्मुराशु)

16 a) Dn2 सतनुत्राणा, D3 4 6 सतल° (for साङ्गुलि°) — b) B सगदा; D4 सशंखा (for सखड्गा) D3 3, 5, 8 S सगदा (for साङ्गदा) — c) Ś1 K Dn1 D1, 2, 5 7 8 अदृश्यत भुजाश्छिन्ना.

दृश्यन्ते बाहवश्छिन्ना हेमाभरणभूषिताः ॥ १६
शराश्चापानि खड्गाश्च शरीराणि शिरांसि च ।
सकुण्डलानि स्रग्वीणि भूमावासन्सहस्रशः ॥ १७
अपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा रथैः ।
शक्तिचापायुधैश्चापि पतितैश्च महाध्वजैः ॥ १८
निहतैः क्षत्रियैरश्वैर्वारणैश्च विशां पते ।
अगम्यकल्पा पृथिवी क्षणेनासीत्सुदारुणा ॥ १९
वध्यतां राजपुत्राणां क्रन्दतामितरेतरम् ।
प्रादुरासीन्महाशब्दो भीरूणां भयवर्धनः ।
स शब्दो भरतश्रेष्ठ दिशः सर्वा व्यनादयत् ॥ २०
सौभद्रश्चाद्रवत्सेनां निघ्नन्नश्वरथद्विपान् ।
व्यचरत्स दिशः सर्वाः प्रदिशश्चाहितान्रुजन् ॥ २१
तं तदा नानुपश्याम सैन्येन रजसावृतम् ।
आददानं गजाश्वानां नृणां चायूंषि भारत ॥ २२
क्षणेन भूयोऽपश्याम सूर्यं मध्यंदिने यथा ।

---

17 $^{a}$) T ऋष्यश्; $G_{2-4}$ M ऋष्टयश्; $G_5$ यष्टयश् (for शराश्) $Dn_2$ $D_{4-6}$ चापासि (for चापानि) $K_5$ खड्गानि, $D_{2\,7\,8}$ खड्गांश्च (for खड्गाश्च) — $^{b}$) $D_4$ वा (for च) — $^{d}$) $Ś_1$ भूमावापु°, $K_{1\,3\,4}$ भूमिमापु°; $K_2$ $Dn_2$ $D_{3\,4\,6-8}$ भूमौ पेतु° (for भूमावासन्)

18 $^{a}$) $K_1$ $Dn_2$ अयस्का($Dn_2$ °क)रैर्; $K_{3\,4}$ अप स्कारैर्; $K_5$ $Dn_1$ $D_{2\,5}$ सुपस्कैरैर्; $D_{6-8}$ उपस्करैर्, S अवस्करैर्; Ca उपस्कारैर्; Cd अपस्करैर् (as in text) — $^{b}$) $B_4$ दंडैश्च (for दण्डक) $Dn_2$ [आ]सीद्भूरति बन्धुरैः; Cv as in text — $^{c}$) S भिन्नैर् (for चक्रैर्) — $^{d}$) B [आ]युधै° (for रथै°) $Ś_1$ K Dn $D_{1-8}$ भग्नै($Ś_1$ $K_{1-4}$ $D_1$ भिन्नै; $K_5$ चक्रै)श्च परमायुधैः, $D_{c1}$ भल्लैश्च बहुधायुधैः; Bom ed बहुधा पतितैर्युगैः — $^{e}$) $D_8$ चैव; S चान्यै (for चापि) B $D_{c1}$ शक्ति चापासिभिश्चैव; $Dn_2$ $D_{3\,4\,6}$ शक्तिभिश्चासिभिश्चैव — $^{f}$) $G_1$ M पातितैश् (for प°) $D_2$ स, $D_6$ सु (for च) — After 18, N ($Ś_2$ missing) ins

296* चर्मचापधरैश्चापि व्यवकीर्णैं समन्ततः ।

[ $K_2$ पाश (for चाप) $K_5$ $Dn_1$ $D_{2\,5\,7\,8}$ वरैश्; $B_{2\,4}$ शरैश् (for धरैश्). Bom ed चैव (for चापि) ]

19 $^{a}$) $D_{2\,5}$ निर्भिन्नै (for निहतै) S शूरै (for अश्वैर्) — $^{b}$) S कुंजरैश् (for वारणैश्) — $^{c}$) $K_2$ अगम्यरूपा; $D_4$ °वर्मा (for °कल्पा) — $^{d}$) S वीक्षिता (for क्षणेन) $Dn_2$ $D_{3\,4\,6}$ समाकुला (for सुदारुणा) $Dn_1$ क्षणेन समपद्यत

20 $^{a}$) $D_4$ नृपपुत्राणां (for राज°). — $^{b}$) $Dn_2$ $D_{3\,4\,6}$ क्रोशताम् (for क्रन्दताम्) S नदतां च तदा रणे — $^{c}$) $Ś_1$ महाक्रंदो; $K_{4\,5}$ $Dn_2$ $D_{5\,6}$ S (except $G_{3-5}$) महाञ्शब्दो (for महाशब्दो) — $^{d}$) S क्रदतामितरेतर (= 20$^{b}$) — $^{e}$) $K_{1\,3\,4}$ शब्दो भरतश्रेष्ठस्य; S स शब्द स नरव्याघ्र — $^{f}$) $K_2$ $D_5$ व्यनादयन्; $Dn_2$ $D_{2\,6}$ व्यदारयन् (for व्यनादयत्) S सहसाभिव्यनादयत्

21 $^{a}$) $Ś_1$ $K_{1\,3}$ $D_{3\,5}$ स्त्वाद्रवत्, $D_{1\,3}$ तावर्क्षी (for चाद्रवत्) S क्षिप्रमभ्यपतत्सैन्य — $^{b}$) $Ś_1$ K $D_{1\,7\,8}$ निघ्नन्वै सुमहाबल ($K_5$ °लै), $B_{1-4}$ घ्नश्वाश्वरथद्विपान्, Dn $D_{2-4\,6}$ विनिघ्नन्वै महाबल°; $D_5$ विनिघ्नस्त्वरयन्परान् — After 21$^{ab}$, $K_3$ (marg) $D_{c1}$ S repeat 12 — $B_4$ om 21$^{cd}$ — $^{c}$) $Ś_1$ व्यद्रवत्स, $K_1$ व्यचरत; $K_5$ विचरन्स; $B_{1-3\,5}$ $D_{c1}$ विचरत; $D_8$ व्यचरन्स (for °रत्स). S स दिशो विचर($G_5$ °दिश)न्सर्वा (T $G_{2-5}$ °र्वान्) — $^{d}$) $Dn_2$ द्रवन्; $D_{1\,3}$ हनन्; $G_5$ व्रजन् (for रुजन्) $B_{1-3\,5}$ $D_{c1}$ $D_8$ प्रदिशश्चापि भारत

22 $^{a}$) $K_{1-3\,5}$ $G_1$ $M_{3-5}$ नान्वपश्याम, $D_{c1}$ नानु पश्येम; $Dn_1$ $D_{1\,5}$ $M_{1\,2}$ नान्वपश्याम° (for नानुप श्याम) $Dn_2$ त तदानीमपश्याम; $D_2$ नाददान च पश्याम — $^{b}$) $D_2$ सैन्ये च; T $G_{2-5}$ स्वसैन्ये (for सैन्येन) $K_5$ $D_{3\,5\,6}$ S रजसावृते (for °वृतम्) — $^{c}$) $Ś_1$ आद धान (for आददान) — $^{d}$) $D_3$ प्राण (for नृणां) $D_4$ चायूंषि; T $G_{2-4}$ आयूंषि (for चायूंषि)

23 $^{a}$) $K_{1\,3}$ $B_2$ भूयोपश्याम, Dn $D_{2\,4-8}$ भूय पश्याम (Dn $D_{7\,8}$ °मि), T $G_{2-5}$ चाभिपश्याम; $M_{1\,2}$ चान्वपश्याम (for भूयोऽपश्याम) $G_1$ $M_{3-5}$ स क्षणेनान्वपश्याम — $^{b}$) $Ś_1$ सूर्यो (for सूर्यं) $Dn_1$ $D_4$ मध्यंदिने; $D_8$ मध्ये दिने (for मध्यंदिने) — $Ś_1$ $K_{1-4}$ $D_{1,7\,8}$ om. 23$^{c}$–24$^{b}$ — $^{c}$) $G_4$ अभिमन्युर् (for °मन्यु) — $^{d}$) $K_5$ $Dn_1$ $D_{3\,4\,6}$ द्विपद्बल; $D_{3\,5}$ महाबल (for द्विषद्गणान्). $Dn_2$ विनिघ्नन्वै महाबल°

24 $Ś_1$ $K_{1-4}$ $D_{1\,7\,8}$ om 24$^{ab}$ (cf v l 23) — $^{a}$) $G_{1\,2\,4\,5}$ M संख्ये ($G_4$ °घे) (for सख्ये) — $^{d}$) S सेनामध्ये (for सैन्यमध्ये) $Ś_1$ $B_{1\,4}$ $D_{7\,8}$ व्यराजत;

अभिमन्युं महाराज प्रतपन्तं द्विषद्गणान् ॥ २३
स वासवसमः संख्ये वासवस्यात्मजात्मजः ।
अभिमन्युर्महाराज सैन्यमध्ये व्यरोचत ॥ २४

इति श्रीमहाभारते द्रोणपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

## ४१

धृतराष्ट्र उवाच ।
बालमत्यन्तसुखिनमवार्यबलदर्पितम् ।
युद्धेषु कुशलं वीरं कुलपुत्रं तनुत्यजम् ॥ १
गाहमानमनीकानि सदश्वैस्तं त्रिहायनैः ।
अपि यौधिष्ठिरात्सैन्यात्कश्चिदन्वपतद्रथी ॥ २
संजय उवाच ।
युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ ।
धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः ।
धृष्टकेतुश्च संरब्धो मत्स्याश्चान्वपतन्रणे ॥ ३
अभ्यद्रवन्परीप्सन्तो व्यूढानीकाः प्रहारिणः ।
तान्दृष्ट्वा द्रवतः शूरांस्त्वदीया विमुखाभवन् ॥ ४
ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम् ।
जामाता तव तेजस्वी विष्टम्भयिषुराद्रवत् ॥ ५
सैन्धवस्य महाराज पुत्रो राजा जयद्रथः ।

---

K1-4 Dc1 D1 व्यवस्थित ( Dc1 °त ) ( for व्यरोचत ) — After 24, S ins

297* यथा पुरा वह्निसुत. सुरसैन्येषु वीर्यवान् ।

Colophon Ś2 missing — *Sub-parvan* Ś1 K B D1 2-8 अभिमन्युवध ; D3 4 अभिमन्युयुद्ध — *Day of Droṇa's Generalship* K1 2 तृतीययुद्धदिवसे — *Adhy name* K4 सेनाविमर्द , D2 सेनाप्रमर्दन ; D5 सेनाप्रतर्दन — *Adhy no* ( figures, words or both ) B1 2 Dn1 S 40 ( as in text ), D2 37, D8 41 — *Śloka no* Dn1 26

41

☞ Ś2 resumes from त्यन्त सु ( in 7 41 1 ).

1 a) Ś1 अवाप्य, K2 भुजवीर्यं (hypermetric), K4 D1 अहार्य , B Dc1 स्वबाहु , Dn2 D4 स्ववीर्यं ; D2 अवीर्यं ; D6 सुवीर्यं ( for अवार्यं ) S महरथमभीतवत् — c) Ś2 K1-3 D1 2 7. 8 युद्धे सु° ( for युद्धेषु ) G1 M युद्धेष्वकुशलं

2 b) Ś1 K3 4 D1 सैस ; B Dc1 D5 च ( for त ). S किशोराश्वैस ( for सदश्वैस्त ) — c) Ś1 K ( except K5 ) D1 असाद् ; Dn1 D2 S अस्ति ; Dn2 D3 अन्यो, D4 अभि ( for अपि ) — d) Ś K D ( except Dc1 ) बली ( for रथी ) S एकोप्यन्व( G3 4 °को नान्व ; G5 °कोप्यद्य , M1 2 °को न्यन्व , M3 °को न्यन्य )पतद्रथी

3 d) D3 om द्रुपदश्च. K1 सकेकया ; K2 महारथ ; K5 B1-3 5 Dn D2 3 5-8 सकैकय , B4 सकेशव ; Dc1 D4 सकैकया ( for सकेकय ). S द्रुपद. केकयास्तथा — e) Ś K ( except K5 ) D7 8 सक्रुद्धो ( for संरब्धो ) — f) K5 D3 4 मत्स्यश्च ; D8 मत्स्यांश्च K1 [अ]नुप तन् ; K3 B2 4 5 Dn2 [अ]स्यपतन् ( B3 5 °तद् ) ; B1 Dn1 D3-6 [अ]न्वपतद् , G5 न्यपतन् ( for [अ]न्वपतन् ) M3-5 रथै ( for रणे ) D2 मत्स्यश्चैवान्वपद्यत — After 3, N ins

298* सेनैव तु यथा याता पितरो मातुलैः सह ।

[ Ś2 D4 6 8 यथा ( for पथा ) K2 B Dc1 Dn2 यांत ; D4. 6 यात ( for याता ) ]

4 a) S अन्वधावन् ( for अभ्यद्रवन् ) — b) Ś1 व्यूढानीकान् — d) G4 5 ( *sup lin* as in text ) [अ]भिमुखा ( *for* वि° ) D3 4 ययु ( *for* [अ]भवन् )

5 a) D2 5 तु, D3 6 तां, M3-5 तान् ( for तद् ). Dn2 D4 विद्रुत ; D3 6 विद्रुतां ; M3-5 विमु खान् ( for विमुख ) — b) D8 6 सेनां ( for सूनोर् ) B2 Dn2 D2-4 6-8 महाबलं ( D5 6 °ल ) ( for महद्ब लम् ) — d) K3 B4 5 Dc1 सस्तंभयिषुर् ; B1-3 विस्तंभ° ; D2 विष्टभयिषुम् ( for विष्टम्भयिषुर् ) Ś1 K3 4 5 Dn1 D1 2 7 8 आव्रजन् ; Dn2 D3 6 आगमत्

स पुत्रगृद्धिनः पार्थान्सहसैन्यानवारयत् ॥ ६

उग्रधन्वा महेष्वासो दिव्यमस्त्रमुदीरयन् ।
वार्धक्षत्रिरुपासेधत्प्रवणादिव कुञ्जरान् ॥ ७

धृतराष्ट्र उवाच ।

अतिभारमहं मन्ये सैन्धवे संजयाहितम् ।
यदेकः पाण्डवान्क्रुद्धान्पुत्रगृद्धीनवारयत् ॥ ८
अत्यद्भुतमिदं मन्ये बलं शौर्यं च सैन्धवे ।
तदस्य ब्रूहि मे वीर्यं कर्म चाग्र्यं महात्मनः ॥ ९
किं दत्तं हुतमिष्टं वा सुतप्तमथ वा तपः ।
सिन्धुराजेन येनैकः क्रुद्धान्पार्थानवारयत् ॥ १०

संजय उवाच ।

द्रौपदीहरणे यत्तद्भीमसेनेन निर्जितः ।
मानात्स तप्तवान्राजा वरार्थी सुमहत्तपः ॥ ११
इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः संनिवर्त्य सः ।
क्षुत्पिपासातपसहः कृशो धमनिसंततः ।
देवमाराधयच्छर्वं गृणन्ब्रह्म सनातनम् ॥ १२   C 7 1 B 7 4 K 7 4

---

(for आद्रवत्) K1 विष्टस्त्वपिपुरागजन्, K4 विष्टमव पुरागजन्; D4 वि*ष्टमयि*रागमद्.

6 a) S तु यो राजा (for महाराज) — b) Ś1 राजपुत्रो; D5 6 पुत्रो राजन् (for पुत्रो राजा) — c) Dn1 पुत्रगर्द्धिन — d) D5 6 G1 M1 2 4 5 न्यवारयत् (for अथा)

7 a) B1 वार्धक्षेमिर्; B3 °क्षेत्रिर्; M3 °क्ष*र् (for °क्षत्रिर्) Ś K Dn D1 3 4 6-8 महातेजा°, B1 2 Dc1 G1 M3 Cd अपासेधत्, D3 5 महाराज, T G2-5 M5 अवासेधत्, M1 2 अवाधेत (for उपासेधत्) — d) Ś D7 प्रपाणादिव; K1 3 4 D1 प्रयाणा; K5 प्रयानामिव, B1 2 (orig as in text) D8 Cs प्रपानादिव; Dn मया(Dn1 °पा)ता; D3 4, 6 मृगाणामिव; T G2-5 M3-5 प्रभिन्नानिव; M1 2 स प्रभिन्नानि; Cap Cd प्रवणादिव (as in text) B1-4 Dc1 Dn2 D3 6 कुञ्जर°; B5 D1 7 8 कुञ्जरे D3 5 सैन्यमध्ये व्यरोचत; G1 प्रभिन्नानि पजरान् (submetric)

8 D4 6 om (hapl) 8b-9a, D5 reads the same on marg (*see m*) — b) Ś K D (except Dc1, D4 6 om) संजयार्पितं — c) T G3 4 यदेतत् (for °क) Dn1 पुत्र (for क्रुद्धान्) — d) Ś K B Dc1 Dn2 D2 3 5 पुत्रप्रेप्सून्; Dn1 प्रेप्सून्क्रुद्धान्; D7 8 सह सैन्यान्; T G5 पुत्रगृद्धीन्

9 D4 6 om 9a (cf v l 8) D5 reads 9a on marg (*see m*) — a) K5 B D (D4 6 om) अह (for इद) G5 अद्भुततरं मन्ये — c) B Dc1 S तस्य प्रब्रूहि; Dn2 तस्य ब्रूहि च; D4 तद*ब्रूहि (for तदस्य ब्रूहि) S रूप (for वीर्यं) — d) Dn1 चास्य; D2 S घोरं; D4, 7 वाग्य (for चाग्र्य)

10 a) Ś1 K2 किं हुतमिष्ट (for हुतमिष्टं वा) — b) Ś1 किं तप्तम्; B5 सुदीप्तम्, T G2-5 स्वधी(G5 °धा)तम्; G2 M स्वाधीनम् (G2 M1 °तम्) (for सुतप्तम्) Dn2 D5 पुन° (for तप) — After 10ab, S ins

299* दमो वा ब्रह्मचर्यं वा सूत यथास्य सत्तम ।
देव कतममाराध्य विष्णुमीशानमग्निजम् ।

[(L 1) G4 तपो (for दमो) G1 M क्षमा वा सत्तम सम (for the post half) — (L 2) G5 देव G5 अब्जज, M3 अग्रज (for अग्निज) ]

— D4 om (hapl) 10c-11d — c) Ś1 K5 Dn1 D2 3 7 8 सिंधुराजो हि (for °जेन) S सिंधुराट्तनये सकान्. — d) D2 T G2 क्रुद्ध Dc1 अवारयन् Bom ed पांडवान्समवारयत् — After 10, S ins

300* नैव कृतं महत्कर्म भीष्मेणाज्ञासिष तथा ।
सिन्धुराट्तनयस्त्वेको यथा पार्थानवारयत् ।

[(L 1) G1 M अह (for महत्) T G2 M3-5 पुरा (for तथा) ]

11 D4 om 11 (cf v l 10) — a) D2 यस्तो, D3 6-8 यत्तु (for यत्तद्) — b) D5 सर्जित°, D7 वर्जित° (for नि°) — c) Dn2 अत स; D3 अत सु; D5 आर्तं सु; D7 8 S मानात्स (for मानात्स) Dc1 D7 S राजन् (for राजा) — d) M3-5 फलार्थी (for वरार्थी) Ś1 सुमहत्तम°

12 b) K4 om. प्रियेभ्य° Ś K (except K5) Dn1 D1 2 7 8 सनिवार्य स°, B1 D1 सनि(D4 न्य)वर्तत — c) Dn1 reads from सह° up to दयाम् (in 13b) on marg — c) D4 om माराधयच्छर्वं G1 M1 2 आराधयेत् D3 6-8 G1 सर्वं; Cd शर्वं (as in text) — f) K4 D7 गृह्णन्, D3 सर्वं; G5 गुणाद्; Cd गृणन् (as in text).

भक्तानुकम्पी भगवांस्तस्य चक्रे ततो दयाम् ।
क्षमान्तेऽप्यथ चैवाह हरः सिन्धुपतेः सुतम् ।
वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि ॥ १३
एवमुक्तस्तु शर्वेण सिन्धुराजो जयद्रथः ।
उवाच प्रणतो रुद्रं प्राञ्जलिर्नियतात्मवान् ॥ १४
पाण्डवेयानहं संख्ये भीमवीर्यपराक्रमान् ।
एको रणे धारयेयं समस्तानिति भारत ॥ १५
एवमुक्तस्तु देवेशो जयद्रथमथाब्रवीत् ।
ददामि ते वरं सौम्य विना पार्थं धनंजयम् ॥ १६
धारयिष्यसि संग्रामे चतुरः पाण्डुनन्दनान् ।
एवमस्त्विति देवेशमुक्त्वाबुध्यत पार्थिवः ॥ १७
स तेन वरदानेन दिव्येनास्त्रबलेन च ।
एकः संधारयामास पाण्डवानामनीकिनीम् ॥ १८
तस्य ज्यातलघोषेण क्षत्रियान्भयमाविशत् ।
परांस्तु तव सैन्यस्य हर्षः परमकोऽभवत् ॥ १९
दृष्ट्वा तु क्षत्रिया भारं सैन्धवे सर्वमर्पितम् ।
उत्क्रुश्याभ्यद्रवन्राजन्येन यौधिष्ठिरं बलम् ॥ २०

इति श्रीमहाभारते द्रोणपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

13 Dn1 reads $13^{ab}$ on marg — $^{a}$) K1 D7 भक्त्यानुकपी — $^{b}$) S तस्मिन् (for तस्य) Dn2 D8 8 ततोऽस्य, D4 त * * *; G1 M1 2 M5 (sup lin) महादया: M3 4 महोदया (M4 °यां) (for ततो दयाम्) D2 तस्याथ विदधे दयां — For S subst for $13^{cdef}$, cf v l 15 — $^{c}$) Ś1 चास्य, Ś2 K4 D1 तस्य, K1 8 [ऽ]स्याथ; D5 स्त्वथ (for ऽप्यथ) D6 वै प्राह (for चैवाह) — $^{f}$) B यमिच्छसि; Do1 यद्री° (for किमि°)

14 For S subst for 14, cf v l 15 — $^{a}$) K1-8 उक्त्वा (for उक्तस्) — $^{cd}$) Ś1 Dn1 transp प्रणतो and प्राञ्जलिर् Ś1 नियतात्मवाक्

15 K4 transp $15^{ab}$ and $15^{cd}$ — $^{b}$) Dn2 D3-6 भीमवेग (for °वीर्य) — D1 om $15^{cd}$ — $^{c}$) Do1 (marg) D2 5 7 8 वारयेय (for धा°) B धारयेय रथेनैक°; Do1 (orig) वारयन्नथघोषेण; Dn2 D3 4 6 व (D5 धा) रयेय (D6 °येह) रणे ह्येक — For $13^{c}$–$15^{c}$, S subst

301* तस्य चाल्पेन कालेन नियमेन सुतोषित: ।
प्रीतो महेश्वरस्तस्मै वर चैव ददौ तदा ।
स तु वव्रे वर तत्र पाण्डवेयानह रणे ।
धारयेय रथेनैक

[(L 2) M1 2 तस्यै (for तस्मै) T G2-5 चेम (for चैव) ]

— $^{d}$) D3 समग्रान्; M3 समस्ताद् (for समस्तान्). K6 मे मति° (for भारत)

16 For subst. for 16, cf v l 17. K5 ins after $17^{ab}$ D7 8 after $16^{ab}$.

302* यमाहुरजितं सख्ये शङ्खचक्रगदाधरम् ।
विष्णुसहस्रमूर्धान स कृष्ण पाति फाल्गुनम् ।

— $^{c}$) Ś2 K (except K5) ददानि (for °मि) D7 8 तस्माद् (for सौम्य)

17 $^{a}$) B Do1 Dn2 D3-6 धारयिष्यसि — After $17^{ab}$, K5 ins 302* D3 4 om $17^{cd}$ — $^{d}$) D7, 8 T G8 [अ]युध्यत; Cd [अ]बु° (as in text) D7 8 सैन्धव°; T G3 पांडवान् (for पार्थिव) — T ins after 17 G1 2 4 5 M subst for 16–17 G3 subst for $16^{c}$–$17^{b}$

303* तेनोक्तस्तमृते पार्थं शर्वस्तस्मै वर ददौ ।
एकाहमिति राजेन्द्र तत्रैवादर्शनं गत ।

[(L 1) T जयस् (for शर्वस्) — (L 2) T G8 ययौ (for गत°) ]

18 $^{b}$) D7 8 दैवेन (for दि°) D8 फलेन (for बलेन) S परमास्त्रबलेन च — $^{c}$) K6 B1 5 Do1 Dn2 D4-6 S एक° मवा (Do1 Dn2 स वा) रयामास

19 $^{b}$) D2 T G2 4 5 क्षत्रिया भयमाविशन् — $^{c}$) D3 4 6 परेषां; D8 परांश्च (for परांस्तु) Ś1 K1 2 4 Do1 तव तु (Do1 तु) (by transp) D1 सैन्यानि, M3-5 सैन्यानां (for सैन्यस्य) — $^{d}$) Ś1 D4 G4 प्रहर्ष (G4 सहर्ष°) परमो भवत्

20 $^{a}$) Dn2 D3, 5 च (for तु). — $^{b}$) D7 8 सत्यम्; S महद् (for सर्वम्). — $^{c}$) K1, 2 Dn1 D2 5 उत्कृष्य; K4 D1 उत्कृष्य; Dn2 उत्कम्प्य (for उत्क्रुश्य). D3 4 6 दुद्रुवु (for [अ]भ्यद्रवन्). — $^{d}$) G5 अन्ये (for येन).

# ४२

संजय उवाच ।
यन्मा पृच्छसि राजेन्द्र सिन्धुराजस्य विक्रमम् ।
शृणु तत्सर्वमाख्यास्ये यथा पाण्डूनयोधयत् ॥ १
तमूहुः सारथेर्वश्याः सैन्धवाः साधुवाहिनः ।
विकुर्वाणा बृहन्तोऽश्वाः श्वसनोपमरंहसः ॥ २
गन्धर्वनगराकारं विधिवत्कल्पितं रथम् ।
तस्याभ्यशोभयत्केतुर्वाराहो राजतो महान् ॥ ३
श्वेतच्छत्रपताकाभिश्चामरव्यजनेन च ।
स बभौ राजलिङ्गैस्तैस्तारापतिरिवाम्बरे ॥ ४
मुक्तावज्रमणिस्वर्णैर्भूषितं तदयस्मयम् ।
वरूथं विबभौ तस्य ज्योतिर्भिः खमिवावृतम् ॥ ५
स विस्फार्य महच्चापं किरन्निषुगणान्बहून् ।
तत्खण्डं पूरयामास यद्व्यदारयदार्जुनिः ॥ ६
स सात्यकिं त्रिभिर्बाणैरष्टभिश्च वृकोदरम् ।
धृष्टद्युम्नं तथा षष्ट्या विराटं दशभिः शरैः ॥ ७
द्रुपदं पञ्चभिस्तीक्ष्णैर्दशभिश्च शिखण्डिनम् ।
केकयान्पञ्चविंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ८
युधिष्ठिरं च सप्तत्या ततः शेषानपानुदत् ।

---

Colophon *Sub parvan* Ś1 K1-3 B Do1 Dn1 D1 3 4 6-8 अभिमन्युवध ( D6 युद्ध ) — *Day of Drona's Generalship* K1 3 तृतीययुद्धदिवसे; K2 तृतीयदिवसे — *Adhy name* K4 D2 5 जयद्रथवरप्रदानं; D4 चक्रव्यूह — *Adhy no* ( figures, words or both ) B1 3 Dn1 S 41 ( as in text ), D2 38

## 42

1 a) Ś1 K1 3 5 B Dc1 Dn D1-6 8 T G2-5 यन्मां S सौहार्दात् ( for राजेन्द्र ) — b) Ś K ( except K5 ) D1 चेष्टितं ( for विक्रमम् ) — c) T G2-4 शृणु तत्सहसा राजन्; G1 M शृणु तस्य यथा राजन्; G5 शृणु तत्वं यथा सर्वं — d) S कुद्धान्पार्थानवारयत्

2 a) D7 8 उत्तमा ( for तमूहु ) B3 वाजिनो ( for सारथेर् ) D8 वाक्यास्, G4 मत्या ( s10 ) ( for वश्या ) — b) T सैंधव — c) Dn2 D3 4 6 क्रममाणा; Ca d विकुर्वाणा ( as in text ) Dn2 D8 बृहतोश्वा ( Dn2 °श्वान् ) — d) Ś1 K ( except K5 ) D1 मनपवनरंहस; Dn1 हेषतो वातर, D2. 4 6 वहंतो वातर

3 c) Ś1 Dn2 [अ]भ्यशोभयत्; K2 [अ]भिशो°; K3 T G2-5 स्वशो°; Do1 [अ]स्यशो°; Dn1 D2 5 श्वशो°; D1 [अ]भ्यासोभवत्; D3 6 ह्यशोभयत्, D4 [अ]थशोभते; D7 8 न्यस्तोभवत्, G1 M [अ]न्वशोभयत् ( for [अ]भ्यशोभयत् ) K5 D2 केतु — d) Ś K1 3 D ( except Do1 ) वराहो; K4 lacuna.

4 a) B1 ध्वजस्तम्भ. G1 M1 2 पताकेन ( for °का भिश् ) — b) K5 Dn1 व्यजनैरपि ( for °नेन च ) — c) D5 om स D4 om ( hapl ) from राजलिङ्गै up to विबभौ ( in 5c ) T G3 4 M3-5 युद्ध, G1 3 5 M1 2 युधि ( for राज ) — d) T G1-4 M चारुश्च ( T G2 °रुश्च; G1 M °रु च ) प्रत्यरोचत; G5 चारुभि प्रत्यदृश्यत

5 D4 om up to विबभौ ( of v l 4 ) — a) K4 D1 मुक्तामणिव( K4 °र्ध )ज्रस्वर्णैर्, S मुक्तावज्रै ( G2 °क्तवज्र ) स ( G4 च ) मणिभिर् — b) Ś1 D2 5 तम यस्मयं, K4 यद्दय°; D3 तदुय°, G3 तद*° ( for तदय° ) — c) G1 M स्यदन ( for वरूथं ) D1 तात ( for तस्य ) — d) D4 repeats ज्योतिर्भिर् D7 8 द्योतिभि° S खमिवाचित

6 a) G1 5 M विष्फार्य B1. 3 महाचाप — c) K5 तत्पद; D4 तं शास्त्र ( for तत्खण्डं ) — d) K3-5 यथद्दारयद्; Do1 यद्दा°; D1 यं व्यदा°; D6 यद्विदा°; D8 यव्यादा° ( for यद्व्यदा ) S यदार्जुनिरदारयत्.

7 a) Dn2 D3 4 6 सात्यकिं च; S स सात्यक. — b) K3 5 B Do1 D3 6-8 G1 3 5 M अष्टाभिश् — c) S ( except G1 ) पुन ( for तथा )

8 a) D6 दशभिस् ( for पञ्च° ) — b) B4 D1 सप्तभिश्; D6 पंच° ( for दश° ) — c) K4 5 B1-3 5 D कैके( B2 D1. 7 °क )यान् D2 5 पचसप्तत्या

9 a) B Do1 D7 8 तु ( for च ) D4 विंशत्या ( for सप्त° ). — b) Dn1 शेषान्सर्वान्; S विध्वा शिष्टान् ( for तत शेषान् ). Dn2 D3 5. 6 अपानुदत्; D7. 8 अपा

तव चैवास्य शत्रोश्च तन्ममाचक्ष्व पृच्छतः ॥ ८
विस्मयो मे महान्पार्थ तव दृष्ट्वा शरानिमान् ।
व्यर्थान्निपततः संख्ये दुर्योधनरथं प्रति ॥ ९
वज्राशनिसमा घोराः परकायावभेदिनः ।
शराः कुर्वन्ति ते नार्थं पार्थ काद्य विडम्बना ॥ १०

अर्जुन उवाच ।

द्रोणेनैषा मतिः कृष्ण धार्तराष्ट्रे निवेशिता ।
अन्ते विहितमस्त्राणामेतत्कवचधारणम् ॥ ११
अस्मिन्नन्तर्हितं कृष्ण त्रैलोक्यमपि वर्मणि ।
एको द्रोणो हि वेदैतदहं तस्माच्च सत्तमात् ॥ १२
न शक्यमेतत्कवचं बाणैर्भेत्तुं कथंचन ।
अपि वज्रेण गोविन्द स्वयं मघवता युधि ॥ १३
जानंस्त्वमपि वै कृष्ण मां विमोहयसे कथम् ।
यद्वृत्तं त्रिषु लोकेषु यच्च केशव वर्तते ॥ १४
तथा भविष्यद्यच्चैव तत्सर्वं विदितं तव ।
न त्वेवं वेद वै कश्चिद्यथा त्वं मधुसूदन ॥ १५
एष दुर्योधनः कृष्ण द्रोणेन विहितामिमाम् ।
तिष्ठत्यभीतवत्संख्ये बिभ्रत्कवचधारणाम् ॥ १६

---

8 Ś2 missing (cf v l 1) —$^{a}$) B Dc1 D3 5 6 न वा (B5 D5 च) कश्चिद्, D4 न चेद्विधिर्, D7 8 °द्विद्विर्, S विधेर्वशाद् (for न चेद्विधेर्) Cd विधेर् (as in text) K1 प्राप्त (for काल) —$^{b}$) D3. 6 अथ, D4 7 8 यदि (for अद्य) D4 पचम°, Cd पश्चिम° (as in text) —$^{c}$) D3 चैवाशु (for °स्य) —$^{d}$) Ś1 तत्त्वमाख्याहि, K (except K2) Dn1 D4 तत्त्वमाचक्ष्व (for तन्ममाचक्ष्व) K1 D7 पृष्टत (for पृच्छत)

9 Ś2 missing (cf v l 1) —$^{a}$) D4 reads महान् twice —$^{c}$) K5 वृथान् (sic) (for व्यर्थान्) K2 B Dc1 Dn2 D1-3 6 निपतितान्, Dn1 निष्पतता, D4 निष्पतत (for निपतत) T G3 4 सग्रामे पततो व्यर्थान्, G1 2 5 M व्यर्थान्पतत संग्रामे

10 Ś2 missing (cf v l 1) —$^{a}$) Ś1 (sup lin as in text) K1-4 D1 -समाकारान् (for समा घोरा) —$^{b}$) B4 परकायावदारणा, Dn1 °काया च भेदिन, D2-4. 6 M5 °कायानु(D4 °यावि, M5 °याभि)भेदिन —$^{c}$) Ś1 (sup lin as in text) K1 2 शूरा (for शरा) Ś1 K1-4 पार्थानां, D4 S ते पार्थ (for ते नार्थं) —$^{d}$) D2 अत्र (for पार्थ) Ś1 K1-3 D1 चाद्य, K5 तेद्य, Dn1 ते का, D3 नाद्य (for काद्य) Ś1 D1 विडंबन, K1 3 विडंबनां, D6 विडम्बिता (for विडम्बना) S पार्थिवेंद्र (G1 °वेभ्यो, G2 3 M °वेद्य) विड(G1 M °डं)-बना (G3 °नं)

11 Ś2 missing (cf. v l 1) —$^{a}$) T G2-5 नियत, Cd [ए]षा मति° (as in text) —$^{b}$) D6 निवेदिता, T G2-5 निदर्शितं, G1 M1 2 विदार्शिता, M3-5 निदर्शिता (for निवेशिता) —$^{c}$) K2 D1 अतर्; D6-8 अतो (for अन्ते) B Dc1 Dn2 D5 अभेद्या हि समास्त्राणाम्, D2 एषा नो विहिता°, D3 अभेद्याहितबाणानाम्, D4 अतो विहतमस्त्राणि —$^{d}$) M1 2 धारणा (for धारणम्) N (Ś2 missing) एषा कवचधारणा (K2 °णात्)

12 Ś2 missing (cf v l 1) —$^{a}$) B4 सर्वं, G2. 5 कर्म, M4 5 कृत्स्न (for कृष्ण) —$^{b}$) D2 G5 कर्मणि (for वर्मणि). —$^{c}$) Ś1 विद्ध्यैतद्, K1-4 वेत्त्येतद्, Dn2 D3 6 वै वेद (for वेदैतद्) —$^{d}$) D4 6 7 8 अ स्माच् (for तस्माच्) D2 चाहमनतर (hypermetric) (for च सत्तमात्)

13 Ś2 missing (cf v l 1) —$^{a}$) D2 अशक्यम् (for न शक्यम्) D4 तन्न शक्नोमि कवचं —$^{b}$) Ś1 K1 3. 4 छेत्तुं (for भेत्तुं) B हि माधव (for कथंचन) —$^{c}$) Ś1 K1 4 D1 शक्रेण, K3 चक्रेण (for वज्रेण) —$^{d}$) B5 यदि, T G2-5 अपि (for युधि)

14 Ś2 missing (cf v l 1) —$^{a}$) Ś1 K1 3 4 अपि च (for त्वमपि) Dn2 om (hapl) from कृष्ण up to वै (in 15$^{c}$) K5 कृष्णेमा, S चेत्कृष्ण (for वै कृष्ण) B5 जानस्त्व मम गोविंद —$^{b}$) S वै (for वि) —$^{d}$) K (except K5) विद्यते (for वर्तते) S वर्तते यच्च केशव

15 Ś2 missing (cf v l 1) Dn2 om up to वै (cf v l 14) K4 om 15$^{a}$–16$^{b}$ —$^{a}$) D4 तथा हि (hypermetric), G1 M भूतं (for तथा) M3-5 यच्चै तत् (for यच्चैव) K1 तथा भविष्यच्चैव तच्, D2 तथा भव्यं च यत्सर्वं —$^{b}$) K1 चैतत्सर्वं (hypermetric), D2 तच्चैवं, D4 तव सर्वं (hypermetric) (for तत्सर्वं) —$^{c}$) K2 D1 त्विदं, Dn1 त्वय, M3-5 त्वेतद् (for त्वेवं) D4 वेत्ति वै, T G2-5 वदते, G1 M वेद ते (for वेद वै) —$^{d}$) Ś1 B2 4 Dc1 D4 5 [अ]हं, D7 8 वै (for त्व)

16 Ś2 missing (cf. v l. 1) K4 om 16$^{ab}$ (cf.

यत्त्वत्र विहितं कार्यं नैष तद्वेत्ति माधव ।
क्लीबदेष विभर्त्येतां युक्तां कवचधारणाम् ॥ १७
पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन ।
पराजयिष्ये कौरव्यं कवचेनापि रक्षितम् ॥ १८
इदमङ्गिरसे प्रादाद्देवेशो वर्म भास्वरम् ।
पुनर्ददौ सुरपतिर्मह्यं वर्म ससंग्रहम् ॥ १९
दैवं यद्यस्य वर्मैतद्ब्रह्मणा वा स्वयं कृतम् ।
नैतद्गोप्स्यति दुर्बुद्धिमद्य बाणहतं मया ॥ २०

संजय उवाच ।

एवमुक्त्वार्जुनो बाणानभिमन्त्र्य व्यकर्षयत् ।
विकृष्यमाणांस्तेनैवं धनुर्मध्यगताञ्शरान् ।
तानस्यास्त्रेण चिच्छेद द्रौणिः सर्वास्त्रघातिना ॥ २१
तान्निकृत्तानिषून्दृष्ट्वा दूरतो ब्रह्मवादिना ।
न्यवेदयत्केशवाय विस्मितः श्वेतवाहनः ॥ २२
नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन ।
अस्त्रं मामेव हन्याद्धि पश्य त्वद्य बलं मम ॥ २३ C 7 B 7 K 7

---

v l 15) —ᶜ) G1 M संधे, G2 सखे (for संख्ये)

17 Ś2 missing (of v l 1) Ś1 K (except K5) D1 om (hapl) 17 —ᵃ) B2 यच्चक्रे, S (except M3–5) यत्तत्र (for यत्त्वत्र) B2 (marg, orig as in text) नार्यं (for कार्यं) —ᶜ) G1 एव, Cd अय (for एष) B1–3 S (except G1) बिभर्त्येना, D8 तीमां (for र्त्येता)

18 Ś2 missing (of v l 1) —ᵃ) D8 7 बाह्वोश्च (for बाह्वोश्च) D4 बलं वीर्यं, T G2–5 बलं मेद्य (for च मे वीर्यं) Dn1 पश्य त्व मेधुना वीर्यं —ᵈ) D2 6 [क्ष]भि (for [क्ष]पि) M3–5 कवचेन च सवृत

19 Ś2 missing (of v l 1) —ᵃ) T G2–5 अ प्यगिरा, G1 M1 2 चाप्यगिरा (for अङ्गिरसे) —ᵇ) Ś1 B2 भासुर (for भास्वरम्) T G M1.2 सुरेशायास्त्र मुत्तम, M3–5 सुरेशो वर्म चोत्तम — After 19ᵃᵇ, Dc1 (marg) Dn2 ins

550* तस्माद्बृहस्पति प्राप तत प्राप पुरंदर ।

— D7 reads 19ᶜᵈ on marg —ᶜ) Ś1 K1.3 4 D1 पूर्वं (for पुनर्) G5 देवै (for ददौ) K4 सुरपतिं (for °पतिर्) —ᵈ) K1.3 4 D1 दत्तं (for मह्यं) D3 अस्त्र (for वर्म) Ś1 स साप्रसं, K1 3 4 D1 हि साप्रसं, K5 B1 D3 6–8 T G2–5 सुसंग्रहं, D2 सुसंस्कृतं, Cd ससंग्रहम् (as in text) G1 M1 2 महामस्त्रपरिग्रहं

20 Ś2 missing (of v l 1) —ᵃ) Ś1 K (except K5) देव (sic), D5–8 दिव्य (for दैवं) D4 यथास्य, D6 यदस्य (for यद्यस्य) Ś1 ह्यर्म्येतद् (sic), K1.3 बर्द्धं तद्; K4 संघ तद् (for वर्मैतद्) —ᵇ) Ś1 ब्रह्मणाभा, K1 3 4 D1 ब्राह्मणेन, Dc1 D2 4 5 7 8 ब्रह्मणा च (for ब्रह्मणा वा) Ś1 K (except K5) स्वलंकृतं, Dn1 स्वयमुवा (for स्वयं कृतम्) —ᶜ) B2 3 Dc1 D2 नैनं, B4 5 नैत, D3.6 न तद्, T G1 M1.2 नैव (for नैतद्) Ś1 T G2–5 दुर्बुद्धिर् (for द्धिम्) —ᵈ) Ś1 K (except K2) Dn1 D4 7 8 अति, B2 (marg, orig as in text) अभि, Dn2 इति, S वर्म (G5 वर्मं) (for अद्य) D4 यथा (for मया) D2 मद्बाणस्याशित क्षणात्, D3 6 मम बाणस्य शिक्षया

21 Ś2 missing (of v l 1) D2 om the ref —ᵇ) Ś1 K1 3 4 D1 [ए]व वर्मसु, K2 5 Dn S व्य(G5 वि, M3–5 प्र)कर्षत, D4 विकर्षयत्, D7 च कर्षयत्, D8 च कर्षत (for व्यकर्षयत्) — After 21ᵃᵇ, Ś1 K2 5 D2 4 7 8 ins

551* मानवास्त्रेण मानार्हं सूक्ष्मावरणभेदिना ।

[Ś1 lacuna D2 मनसार्हेण मानार्हं, D4 मानीवास्त्रेण सयोज्य (for the prior half) K2 5 ती(K5 स्र)क्ष्णा वरणभेदिना, D4 फाल्गुन परवीरहा (for the post half)]

—ᶜ) Ś1 K1 3 4 निकृष्यमाणास् (for विकृष्य°) K3 4 B5 Dc1 Dn2 D1–3 5 7 तेनैव; S एवैतान् (for तेनैव) B4 निकृष्यबाणास्तनकं —ᵈ) D8 वरान् (for शरान्) —ᵉ) D2 तानपि; G4 न तस्य (for तानस्य) D4 विच्छेद (for चि) —ᶠ) D1 G5 द्रोणि (for द्रौणि) Dn1 द्रौणि सर्वास्त्रवानिति

22 Ś2 missing (of v l 1) —ᵃ) K1 D3 6 निकृंतान् (for निकृत्तान्) Dn1 शरान् (for इषून्) —ᶜ) B4 अवेदयत् (for न्यवे) —ᵈ) Ś1 K1.3 4 विस्मयात् (for विस्मित)

23 Ś2 missing (of v l. 1) —ᵇ) G3 निष्प्रयोक्तुं (for द्वि प्र) K (except K5) कदाचन; D6 कथंचन (for जनार्दन) —ᶜ) K4 ममैव (for मामेव) Dn1 च, D4 वै (for द्धि) —ᵈ) K4 5 B1 Dc1 पश्यंस्त्वद्य, B3 (marg, orig as in text) 4 5 Dn2 D3 6 हन्या द्यापि, T G2–5 पश्याद्यास्य, G1 M1 2 पश्यस्यन्यद्, M3–5 पश्यसद्य (for पश्य त्वद्य) Ś1 मया (for मम)

ततो दुर्योधनः कृष्णौ नवभिर्नतपर्वभिः ।
अविध्यत रणे राजञ्शरैराशीविषोपमैः ।
भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ ॥ २४
शरवर्षेण महता ततोऽहृष्यन्त तावकाः ।
चक्रुर्वादित्रनिनदान्सिंहनादरवांस्तथा ॥ २५
ततः क्रुद्धो रणे पार्थः सृक्कणी परिसंलिहन् ।
नापश्यत ततोऽस्याङ्गं यन्न स्याद्वर्मरक्षितम् ॥ २६
ततोऽस्य निशितैर्बाणैः सुमुक्तैरन्तकोपमैः ।
हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी ॥ २७
धनुरस्याच्छिनच्चित्रं हस्तावापं च वीर्यवान् ।
रथं च शकलीकर्तुं सव्यसाची प्रचक्रमे ॥ २८
दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्यां विरथीकृतम् ।
अविध्यद्धस्ततलयोरुभयोरर्जुनस्तदा ॥ २९
तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनः ।
समापेतुः परीप्सन्तो धनंजयशरार्दितम् ॥ ३०
ते रथैर्बहुसाहस्रैः कल्पितैः कुञ्जरैर्हयैः ।
पदात्योघैश्च संरब्धैः परिवव्रुर्धनंजयम् ॥ ३१
अथ नार्जुनगोविन्दौ रथो वापि व्यदृश्यत ।

---

D2 पश्य त्वं तद्बलं मम

24 Ś2 missing (cf. v. l. 1) —a) B4 Dn1 D1. 2 कृष्णं (for कृष्णौ) —b) Ś1 K1–4 B2. 3 (last two marg. as in text) Dc1 D1 नवभिर्नवभिस्तत (K1–4 D1 °स्तदा), K5 Dn2 D3. 4. 6–8 °र्नवभि शरै (D4. 7. 8 °र्नि-शितै·) —c) D5. 7. 8 अवध्यत (for अवि°) K1. 3. 4 D1 शरै (for रणे) T G2–5 शरैरविध्यत रणे —d) K1. 3. 4 D1 रणे ह्याशी-, T G3. 4 स्वरयाशी-; G1. 2. 5 M स्वरश्चाशी- (for शरैराशी-) —e) D2 लाघवेन, D4. 5. 7. 8 पुनरेव (for भूय एव) D3. 6 [अ]भ्यवर्षतौ (for °वर्षच्च) —f) S (except G5) स रणे (for समरे)

25 Ś2 missing (cf. v. l. 1) —b) Dc1 कौरवा, D2 मामका· (for तावका) —d) K4 B3 D1 G2 M3. 4. 5 (sup. lin., orig. as in text) तदा (for तथा)

26 Ś2 resumes —b) Ś1 सृक्विनी, Ś2 D4. 8 T G2 सृक्किणी, K2. 4. 5 Dc1 Dn2 D2. 5–7 G3–5 सृक्किणी, K3 सृक्किर्णी, B1 D3 सृक्कणा, G1 M स्रक्कणी (for सृक्कणी) B1. 5 Dc1 Dn S -लेलिहन् (for -संलिहन्) —c) K2 B Dc1 Dn2 D1. 5. 6 नापश्यच्च (for °श्यत) Ś2 K3. 4 D5 तदस्य (for ततोऽस्य) —d) Ś K1. 3. 4 वर्माभि, D4 स्याद्धर्मे (for स्याद्वर्म)

27 a) Ś1 [s]स्या नि, Ś2 K (except K5) [s]र्जुन (for ऽस्य नि-) —b) D3 सुमुखैश्चान्तकोपमै, S ज्वलनार्कानिलो° (M3–5 °कांतको°) —c) K3 वाहांश् (for हयांश्) —d) K5 D3. 5–8 उभौ वै, Dn1 S तथोभौ (for उभौ च) Ś1 K1 प्राष्टि-, K3 D1 G2 पार्ष्टि-, T G1. 3–5 M प्राष्ठि (for पार्ष्णि)

28 a) K2 B5 D5 तूर्णं, K4 द्विन्नं, D4 छन्नं, S क्षिप्रं (for चित्रं). —b) Dn2 D3. 4. 6 हस्तावापं, Cd °वाप (as in text) —c) G1 M1. 2 तु (for च)

29 ab) S (except M3–5) तु (for च) Ś1 transp. बाणाभ्या and तीक्ष्णाभ्या G2 पार्थेन (for तीक्ष्णाभ्या) —c) Ś2 अवध्येद्, K3 B2 D1. 2. 5. 7 आविध्यद् (for अवि°) —d) M3–5 अर्जुन परवीरहा —After 29, D2. 4. 5 ins.

552* प्रयत्नकारी कौन्तेयो नखमांसान्तरेषुभि· ।
स वेदनाभिराविग्न पलायनपरायण ।

[ (L. 1) D5 नखेष्वशांतरेषुभि· (for the post. half) —(L. 2) D2 -परोभवत् (for -परायण) ]

30 a) K5 T कृच्छ्राद्, B2 D2 कृत्स्नाम् (for कृच्छ्राम्) Ś2 K2. 3 तं तु कृच्छ्रापद प्राप्तं —b) D5 प्राप्तं (for दृष्ट्वा) B2 Dc1 G2 -धन्विनं (for °न) —B1 reads 30cd on marg. —c) T G3. 4 समुत्पेतु (for समापेतु)

31 a) Ś1 Dn1 D5. 7. 8 तै, Ś2 Dc1 D1 तं (for ते) —c) B2 पदात्याश्वैश्, Dn1 D3 प(Dn1 पा)दात्यौघैश् Dn1 सरथै (for संरब्धै) S पदात्योघा(G1. 2. 5 M4 °त्यौघा, M1. 2 °त्योघा)श्च सरब्धा (G1 M1. 2 °ब्धै·)

32 a) Dn2 D4 वार्जुन (for ना°) Ś2 K (except K5) नार्जुनोथ न गोविंदो, D1 नार्जुनोप्यनगोविंदो (sic), D2 अथार्जुनश्च गोविंदो —b) Dn2 D2. 6 न रथो वा, G1 M1. 2 रथौ वापि, G5 रथावापि (for रथो वापि) Ś K (except K5) D1 न दृश्यते, B3 D7 न (D7 च) दृश्यत, Dn1 D3 व्यदृश्यत, D3. 6 [अ]प्यदृश्यत (for व्यदृश्यत) D3 न रथश्चाप्यदृश्यत, M3. 5 न रथो वापि दृश्यते —c) D4 om. महता —d) K4 यानौघैश्, S शरोघैश् (for जनौघैश्) Ś2 K3. 4 D1 T G3–5 संवृता; K1. 2 D3. 5 संवृत·; Dc1 D4 संवृतं (for संवृतौ)

अस्त्रवर्षेण महता जनौघैश्चापि संवृतौ ॥ ३२
ततोऽर्जुनोऽस्त्रवीर्येण निजघ्ने तां वरूथिनीम् ।
तत्र व्यङ्गीकृताः पेतुः शतशोऽथ रथद्विपाः ॥ ३३
ते हता हन्यमानाश्च न्यगृह्णंस्तं रथोत्तमम् ।
स रथस्तम्भितस्तस्थौ क्रोशमात्रं समन्ततः ॥ ३४
ततोऽर्जुनं वृष्णिवीरस्त्वरितो वाक्यमब्रवीत् ।
धनुर्विस्फारयात्यर्थमहं ध्मास्यामि चाम्बुजम् ॥ ३५
ततो विस्फार्य बलवद्गाण्डीवं जघ्निवान्रिपून् ।
महता शरवर्षेण तलशब्देन चार्जुनः ॥ ३६
पाञ्चजन्यं च बलवद्ध्मौ तारेण केशवः ।
रजसा ध्वस्तपक्ष्मान्तः प्रस्विन्नवदनो भृशम् ॥ ३७
तस्य शङ्खस्य नादेन धनुषो निस्वनेन च ।
निःसत्त्वाश्च ससत्त्वाश्च क्षितौ पेतुस्तदा जनाः ॥ ३८
तैर्विमुक्तो रथो रेजे वाय्वीरित इवाम्बुदः ।
जयद्रथस्य गोप्तारस्ततः क्षुब्धाः सहानुगाः ॥ ३९
ते दृष्ट्वा सहसा पार्थं गोप्तारः सैन्धवस्य तु ।
चक्रुर्नादान्बहुविधान्कम्पयन्तो वसुंधराम् ॥ ४०
बाणशब्दरवांश्चोग्रान्विमिश्राञ्शङ्खनिस्वनैः ।
प्रादुश्चक्रुर्महात्मानः सिंहनादरवानपि ॥ ४१
तं श्रुत्वा निनदं घोरं तावकानां समुत्थितम् । C D K

---

33 Dc1 om 33 —$^{a}$) Ś2 K1.3.4 B1.3.5 T G2–5 -वर्षेण (for -वीर्येण) —$^{b}$) B1 विजघ्नेता, D2 न्यहनत्तां, S व्यथमत्तां (for निजघ्ने तां) D4.5.7.8 च वाहिनीं (for वरूथिनीम्) K4 घनौघैश्चापि सहत· —$^{c}$) M3–5 ततो (for तत्र) S व्यगा (for व्यङ्गी) D5 क्षेपु (for पेतु·) —$^{d}$) Dn1 स (for ऽथ) K3 D2.5 सहस्रश (for रथ द्विपा) M3 शरौघैश्चापि सवृतौ

34 $^{b}$) Ś1 K4 व्यगृह्णस्ते, K1 न्यगृह्णांत, B2 (orig) नागृह्णस्ते; B2 (marg) Dc1 नाजहुस्ते, D2 व्यगृह्णत, D3.6 G1 M1.2 न्यगृह्णस्ते, D3 °ह्णंत (for °ह्णस्त) —$^{c}$) Ś1 सरस (for स रथस्) D7.8 तत्र (for तस्थौ) —$^{d}$) K3 B Dc1 Dn2 D3.5 क्रोशमात्रे

35 $^{a}$) Dn1 वृष्णिवर· (for वीरस्) —$^{b}$) Dn1 प्रास्विन्नो, D7.8 त्वरित (for °तो) —$^{c}$) T G1.2 M विष्फारय (for विस्फा) —$^{d}$) D3 M3 धास्यामि, T प्रध्मामि, G3.4 प्राध्मामि (for ध्मास्यामि)

36 $^{a}$) S (except G5) विष्फार्य K5 Dn1 बलवान्, B3 (marg, orig as in text) सुमहद् (for बलवद्) —$^{b}$) K5 गाढिव, D4 गांजीव (for गाण्डीव) D3 व्यहनद्, S न्यहनद् (for जघ्निवान्) Dn2 नृप, D3 हनु D2 (sup lin) दृढ, D4.5.7.8 भृश (for रिपून्) —$^{cd}$) M3–5 transp शरवर्षेण and तलशब्देन B2 ताल वर्षेण (for तलशब्देन) D3 पाडव (for चार्जुन)

37 $^{a}$) T G3.4 पाचजन्यस्य (for °जन्यं च) K5 B2.4.5 Dn D1.7.8 बलवान्; D5 जलजं (for बलवद्) Cv as in text. —$^{b}$) D2 वेगेन (for तारेण) Cv as in text —$^{c}$) Dc1 Dn1 D3 पक्ष्मांता; S पक्ष्माक्ष (for पक्ष्मान्त). —$^{d}$) Dc1 Dn2 D3.8 -वदना (for -वदनो) — After 37, S ins

553* तेनाच्युतोष्ठपुटपूरितमारुतेन
शङ्खान्तरोदरविवृद्धविनि सृतेन ।
नादेन सासुरवियत्सुरलोकपाल-
मुद्विग्नमीश्वरजगत्स्फुटतीव सर्वम् ।

[(L 1) G5 lacuna for तेनाच्युतोष्ठपुटपूरितमारु G1 M1–4.5 (sup lin, orig as above) पुटमारुतपूरितेन, G2 -पुटपूरित **** —(L 3) G1 M सावनिवियत् (for सासुर°) G1 M1.2 सुरपाललोकम् (for लोकपालम्) ]

38 $^{a}$) D5 M3–5 तस्य शंखप्रणा(D5 °निना)देन —$^{b}$) Ś K1–3 B (except B2) Dc1 Dn2 D1.3.4.7.8 S (except G4) नि·स्वनेन —$^{c}$) K1 नि सत्त्वश्च ससत्त्वश्च, D2 विसंज्ञाश्च क्षितौ पेतुर् —$^{d}$) Ś1 transp क्षितौ and तदा D2 भयत्रस्तास् (for क्षितौ पेतुस्) K5 नरा (for जना)

39 $^{a}$) D2.5 राजन् (for रेजे) —$^{b}$) T G2–5 [अ]नल· (for [अ]म्बुद·) —$^{d}$) B2 तस्थु (for तत·) Ś2 K1.3.4 क्षुब्धा, B4 D5.7.8 G3 क्रुद्धा (for क्षुब्धा) Ś1 समंतत (for सहानुगा)

40 $^{b}$) Dn1 G5 च, D6 ते (for तु) —$^{c}$) K2 साधी (sic), K5 Dn1 नादं (for नादान्) K3.5 B (except B2) Dc1 Dn D1.2.6 S महेष्वासा (for बहु विधान्) — After 40, D2 reads 43$^{cd}$ for the first time, repeating it in its proper place

41 D4 om (hapl) 41$^{c}$–43$^{b}$ —$^{a}$) K4 D1 बाहु-, Dc1 रणे (for बाण-) M4.5 -पत्र (for -शब्द) —$^{b}$) K5 मिश्रिताम् (for विमिश्राम्) Ś K (except K4)

प्रदध्मतुस्तदा शङ्खौ वासुदेवधनंजयौ ॥ ४२
तेन शब्देन महता पूरितेयं वसुंधरा ।
सशैला सार्णवद्वीपा सपाताला विशां पते ॥ ४३
स शब्दो भरतश्रेष्ठ व्याप्य सर्वा दिशो दश ।
प्रतिसस्वान तत्रैव कुरुपाण्डवयोर्बले ॥ ४४
तावका रथिनस्तत्र दृष्ट्वा कृष्णधनंजयौ ।
संरम्भं परमं प्राप्तास्त्वरमाणा महारथाः ॥ ४५
अथ कृष्णौ महाभागौ तावका दृश्य दंशितौ ।
अभ्यद्रवन्त संक्रुद्धास्तदद्भुतमिवाभवत् ॥ ४६

इति श्रीमहाभारते द्रोणपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

# ७९

संजय उवाच ।
तावकास्तु समीक्ष्यैव वृष्ण्यन्धककुरूत्तमौ ।
प्रागत्वरञ्जिघांसन्तस्तथैव विजयः परान् ॥ १
सुवर्णचित्रैर्वैयाघ्रैः स्वनवद्भिर्महारथैः ।

B1.4 Dc1 Dn D1.3 5–8 G1–4 M शंख( Dc1 शर )नि स्वनै (for शङ्खनिस्वनैः) —$^{d}$) Dn1 तथा (for अपि)

42 D4 om. 42 (cf. v l 41) —$^{a}$) D3 6 G3 4 तत् (for तं) —$^{b}$) D5 उपस्थितं (for समुत्थितम्) —$^{c}$) Ś1 K5 Dn1 D1 7 8 तत , B2 तथा (for तदा) B4 Dn2 D2 3 6 S शंखवरौ (for तदा शङ्खौ)

43 D4 om $43^{ab}$ (cf. v l. 41) S repeats $43^{ab}$ after $45^{ab}$ —$^{b}$) T G3–5 (all first time) पूरितेव (for °तेय) S (all second time) सर्वसैन्येषु पार्थि( G1 पाड )वा — D3 reads $43^{cd}$ for the first time after 40 —$^{c}$) Ś2 K1.3 सवन-, D8 सा वन- (for सार्णव-) D3 (first time) सशैलां सार्णवद्वीपा —$^{d}$) D2 (first time) सपातालां — After 43, Dn1 reads $46^{ab}$ for the first time, repeating it in its proper place.

44 $^{b}$) Dn1 सर्वे (for सर्वा) D7 दिश (for दश) —$^{c}$) Cd प्रतिसस्वान् (sic) (for °सस्वान)

45 $^{a}$) D5 सर्वे (for तत्र) — After $45^{ab}$, S repeats $43^{ab}$ —$^{d}$) Dn1 विशां पते (for महारथा)

46 Dn1 reads $46^{ab}$ for the first time after 43 —$^{b}$) B1 5 Dc1 प्रेक्ष्य, B3 4 Dn2 D2 3 6 8 वीक्ष्य, Cd दृश्य (as in text) S दर्शि( G3 5 °शि )ता (for दंशितौ) D4 7 तावक छा( D7 °काञ्छा )द्य दर्शितौ, D5 तावकाञ्छाद्य सर्वश . —$^{c}$) D4 5 7 8 अभ्यद्रवेतां (for °वन्त) Ś1 K1–3 B1–3 D1 3–8 सक्रुद्धा, Ś2 सक्रुद्ध (for संक्रुद्धास्) D3 अत्यद्भुताभ्यधावत, S अभ्यद्रवन्युधा श्रेष्ठास्

Colophon. —*Sub-parvan* N (except K4 D4 5) जयद्रथवध —*Day of Drona's Generalship* K1.3 चतुर्थदिवसे —*Adhy name* D4 7 अर्जुनदुर्योधनयुद्धं, D5 दुर्योधनार्जुनयोर्युद्धं, Bom. ed दुर्योधनपराजय —*Adhy no* (figures, words, or both) B1 100, B3 101, B5 108, Dn1 102, D2 104, D3 T G1–4 M1 2 99, G5 97, M3–5 98 —*Śloka no* Dn1 45, G5 48

## 79

1 $^{a}$) D3 तावकास्तु (for °कास्तु) Ś1 K1–4 च, K5 B2 4 Dn D1 2 4 5 7 8 हि (for तु) K2 5 B4 5 Dn D7 8 समीक्ष्यैव, T G1–4 M [अ]भि( M3–5 °ति )सप्रेक्ष्य (for समीक्ष्यैव) Ś1 तावका प्रसमीक्ष्यैव, G5 °का समभिप्रेक्ष्य —$^{b}$) B1–3 Dc1 वृष्णिसिंह-, Dn1 D3 G1 M वृष्णिवीर (for वृष्ण्यन्धक) M3–5 -कुरूद्वहौ (for °त्तमौ) D5 वृष्ण्यधकुरुसत्तमौ — B3 reads $1^{cd}$ on marg —$^{c}$) T G2–5 अत्वरस्तौ, G1 M1 2 प्रात्व रस्तौ, M3–5 प्रात्वरम् (for प्राग°) Dn1 प्रागग्रण्व जिघासंतस् —$^{d}$) Ś1 K (except K5) तत्रैव (for तथैव) Ś K (except K5) D1 विजय, B1.2 (marg) 3 5 च ययु , B2 (orig) [अ]भिययु , D6 च जय (for विजय). Ś1 पुन , Ś2 K1.2 4 D1 रणे; D4 परा (for परान्), G1 M1–4, 5 (*sup lin* as in text) तथैव विजयाय ते

दीपयन्तो दिशः सर्वा ज्वलद्भिरिव पावकैः ॥ २
रुक्मपृष्ठैश्च दुष्प्रेक्ष्यैः कार्मुकैः पृथिवीपते ।
कूजद्भिरतुलान्नादान्रोषितैरुरगैरिव ॥ ३
भूरिश्रवाः शलः कर्णो वृषसेनो जयद्रथः ।
कृपश्च मद्रराजश्च द्रौणिश्च रथिनां वरः ॥ ४
ते पिबन्त इवाकाशमश्वैरष्टौ महारथाः ।
व्यराजयन्दश दिशो वैयाघ्रैर्हेमचन्द्रकैः ॥ ५
ते दंशिताः सुसंरब्धा रथैर्मेघौघनिस्वनैः ।
समावृण्वन्दिशः सर्वाः पार्थं च विशिखैः शितैः ॥ ६
कौलूतका हयाश्चित्रा वहन्तस्तान्महारथान् ।
व्यशोभन्त तदा शीघ्रा दीपयन्तो दिशो दश ॥ ७
आजानेयैर्महावेगैर्नानादेशसमुत्थितैः ।
पार्वतीयैर्नदीजैश्च सैन्धवैश्च हयोत्तमैः ॥ ८
कुरुयोधवरा राजंस्तव पुत्रं परीप्सवः ।
धनंजयरथं शीघ्रं सर्वतः समुपाद्रवन् ॥ ९
ते प्रगृह्य महाशङ्खान्दध्मुः पुरुषसत्तमाः ।
पूरयन्तो दिवं राजन्पृथिवीं च ससागराम् ॥ १०
तथैव दध्मतुः शङ्खौ वासुदेवधनंजयौ ।
प्रवरौ सर्वभूतानां सर्वशङ्खवरौ भुवि ।
देवदत्तं च कौन्तेयः पाञ्चजन्यं च केशवः ॥ ११ C 7 B 7 K 7

---

2 $^{b}$) Ś1 महाबलै, D5 मृधे (for रथै) — Ś2 K1. 3 4 D1 om $2^{cd}$ — $^{d}$) D2 पन्नगै (for पावकै)

3 Dc1 om $3^{ab}$ — $^{a}$) Ś K (except K5) Dn D1–6 रुक्मपुंखैश्च (for पृष्ठैश्च) Ś T G2–5 च दुष्प्रेक्षै, B1 5 दुरानम्यै; B2 दृढानम्यै, B3 दुराधर्षै, D2 दुरासाद्यै (for च दुष्प्रेक्ष्यै) — $^{b}$) T G2–5 -तले (for पते) — $^{c}$) B5 कुर्वद्भिर्, D2 क्रोशद्भिर् (for कूजद्भिर्) B Dc1 विपुलान्, D3 6 तुमुलान् (for अतुलान्) — $^{d}$) Ś1 रोषद्भिर्, Ś2 Dc1 Dn2 कोपितैर्, B2 रोषतैर्, B4 रोधितैर्, G1 M1 2 रुषितैर् (for रोषितैर्)

4 $^{a}$) D2 शल्यो (for कर्णो) — $^{c}$) D2 कर्ण कृपश्च द्रौणिश्च — $^{d}$) D2 प्रययौ (for द्रौणिश्च)

5 $^{a}$) Ś2 D5 इवाकाशे (for °शम्) — $^{b}$) T G3–5 तत्र (for अष्टौ) S (except M3–5) महाजवै (for °रथा) — $^{c}$) S व्यनादयन् (for व्यराज) — $^{d}$) Dn1 -चित्रितै, D4 5 7 8 चित्रकै (for -चन्द्रकै)

6 $^{a}$) Dn1 तैर् (for ते) K2–4 D1 S (except T) दंसिता — $^{b}$) D5 सनिभै° (for निस्वनै°) — $^{c}$) Ś K B4 5 Dn D1 3–8 दश दिश (for दिश सर्वा) — $^{d}$) Ś1 पार्थस्य (for पार्थं च) T G2–3 सह (for शितै) Ś2 K B D M3–5 पार्थस्य (D2 M3–5 °र्थं च, D4 °र्थश्च) निशितै शरै

7 $^{a}$) Ś K3 कैलूतका; K1 कैलूतकान्, Dn2 कौलनिका, D3 6 कुलीनाश्च, D8 कौलूतकान्, T G3 एकीभूतान्, G1 M1. 2 एकीभूता, G2. 4 कौतूहलान्, G5 कुतूहलान् (for कौलूतका) K1 D2 T G3–5 हयांश्च K3 4 T G3–5 चित्रान् (for चित्रा) M3–5 कुतूहलमयाश्चित्रा — $^{b}$) T G M1 2 च (for तान्) K1 3 4 रथोत्तमान् (for महारथान्) M3–5 वहति स्म हयोत्तमा — $^{c}$) D4 5 7 8 महा- (for तदा) Dn1 चित्रा, D6 शीघ्र, S [आ]काशे (for शीघ्रा) — B1 reads $7^{d}$–$9^{c}$ on marg — $^{d}$) D2 द्योतयंतो (for दीप°) D7 दिशोदिश (for दिशो दश)

8 B1 reads 8 on marg — $^{a}$) Ś K1 3 आ (K1 अ) जानीयैर्, B1 3–5 Cd अजानेयैर्, G4 आजनेयैर् (for आजानेयैर्) — $^{b}$) Dn1 D3 S समुद्भवै, D4 7 -समुच्छ्रितै (for °स्थितै) — $^{d}$) B4 महाहयै (for हयोत्तमै°)

9 B1 reads $9^{abc}$ on marg — $^{a}$) G1 5 M यौधवरा (for -योध) D2 युक्तास् (for राजंस्) — $^{b}$) Dn1 G1 M पुत्र (for पुत्रं) T G2–5 अभीप्सव (for परी) D2 तव पुत्रहिते रता — $^{d}$) Ś2 B4 सर्वत° पर्य (B4 सम) वारयन्

10 D4 om $10^{a}$–$12^{b}$ — $^{a}$) Dn1 प्रदध्मु सु, T G M1 2 प्रगृह्य च (for ते प्रगृह्य) — $^{b}$) K5 Dn1 प्रदध्मु° (Dn1 प्रगृह्य) पुरुषर्षभा — $^{c}$) D2 दिशं (for दिव) Dn1 S पूरयंतो दिश (G5 °शं) खं च

11 D4 om 11 (of v l 10) Ś K1–3 om $11^{a}$–$12^{b}$ — $^{a}$) K4 तथैव पांचजन्योपि, Dn1 तौ दध्मतुस्तथा शंखौ — $^{c}$) B4 देवानां, S -योधानां (for भूताना) — $^{d}$) D8 धरौ (for -वरौ) K5 Dn1 D5 M3–5 युधि (for भुवि) D2 सर्वशस्त्रभृता वरौ — $^{f}$) M3–5 जनार्दन° (for च केशव)

12 Ś1 K1–3 D4 om $12^{ab}$ (of v l 11, 10) B3 reads 12–14 on marg — $^{b}$) D5 पांचजन्यसमीरित

12 12 शब्दस्तु देवदत्तस्य धनंजयसमीरितः ।
पृथिवीं चान्तरिक्षं च दिशश्चैव समावृणोत् ॥ १२
तथैव पाञ्चजन्योऽपि वासुदेवसमीरितः ।
सर्वशब्दानतिक्रम्य पूरयामास रोदसी ॥ १३
तस्मिंस्तथा वर्तमाने दारुणे नादसंकुले ।
भीरूणां त्रासजनने शूराणां हर्षवर्धने ॥ १४
प्रवादितासु भेरीषु झर्झरेष्वानकेषु च ।
मृदङ्गेषु च राजेन्द्र वाद्यमानेष्वनेकशः ॥ १५
महारथसमाख्याता दुर्योधनहितैषिणः ।
अमृष्यमाणास्तं शब्दं क्रुद्धाः परमधन्विनः ।
नानादेश्या महीपालाः स्वसैन्यपरिरक्षिणः ॥ १६
अमर्षिता महाशङ्खान्दध्मुर्वीरा महारथाः ।
कृते प्रतिकरिष्यन्तः केशवस्यार्जुनस्य च ॥ १७
बभूव तव तत्सैन्यं शङ्खशब्दसमीरितम् ।
उद्विग्नरथनागाश्वमस्वस्थमिव चाभिभो ॥ १८
तत्प्रयुक्तमिवाकाशं शूरैः शङ्खनिनादितम् ।
बभूव भृशमुद्विग्नं निर्घातैरिव नादितम् ॥ १९
स शब्दः सुमहान्राजन्दिशः सर्वा व्यनादयत् ।
त्रासयामास तत्सैन्यं युगान्त इव संभृतः ॥ २०
ततो दुर्योधनोऽष्टौ च राजानस्ते महारथाः ।

---

— K4 om (hapl.) $12^{c}$–$13^{b}$ — $^{c}$) B (except B4) चातरीक्षं D2 खं (for च) — $^{d}$) D4 5 7 8 सर्वा (for चैव) K6 Dn1 [आ]वृणोच्चदा (for समावृणोत्)

13 K4 om $13^{ab}$ (cf v l 12) B8 reads 13 on marg — $^{a}$) M1 वा (for ऽपि) M3–5 तथैव पांचजन्यस्य — $^{c}$) Ś K1 3 4 D1 सर्वान् (for सर्व-)

14 B8 reads 14 on marg — $^{a}$) Ś1 K4 B4 G2–5 तदा (for तथा) — $^{b}$) D2 रण-, D4 ध्वान, M3–5 प्राण- (for नाद-). — $^{d}$) Ś1 -वर्विनि, K1 वर्धनी (for -वर्धने)

15 $^{a}$) B1–3 Dc1 वादितासु च, D2 प्रणोदितासु (for प्रवादि°) — $^{b}$) Ś1 जर्झरेषु, K1. 3. 4 जर्जरेषु, K5 Dn1 G2 5 झल्लरी( Dn1 °की )षु, D4 7 8 मुरजेषु, G1 M झर्झरीषु (for झर्झरेषु) K6 Dn1 च भारत (for [आ]नकेषु च) — $^{c}$) D4 झल्लरेषु, D5 झर्झरेषु, D7 हल्लरीषु, D8 झल्लरीषु (for मृदङ्गेषु) D1 [अ]पि (for च) D2 ये शब्दा (for राजेन्द्र) — $^{d}$) T मृद्यमानेषु (sic) (for वाद्य°) Dn1 सर्वश (for [अ]नेकश°) D6 वाद्यमाने समंतत, D7 8 °मानास्वनेकश

16 $^{a}$) G3 महारथ (for °रथ-) Ś K1–4 B2 D1 समाज्ञाता (for °ख्याता) K6 B1 2 (marg) 3–5 Dc1 Dn D2 3. 6–8 महारथा समाज्ञाता (K5 B3 D7 8 °याता, B4 Dn2 D8 6 °हूता, D2 °ज्ञसो) — After $16^{ab}$, D2 reads $17^{cd}$ for the first time, repeating it in its proper place — $^{c}$) S (M6 *sup lin* as in text) कर्णादयो महेष्वासा — $^{f}$) B1 2 G2 5 M1 2 स्वत्सैन्य-, B4 Dc1 तत्सैन्य, Dn1 स्वै सैन्यै (for स्वसैन्य) Ś2 K Dn1 -रक्षिता (for °ण)

17 $^{a}$) D2 अमर्षेण (for °र्षिता) G1 M1 2 महा वीरा (for शङ्खान्) — $^{b}$) M1 2 शखान्दध्मुर् (for दध्मुर्वीरा) M3–5 दध्मु सर्वे ह्यनेकश — D2 reads $17^{cd}$ for the first time after $16^{ab}$ — $^{c}$) B2 (marg as in text) 4 परि- (for प्रति)

18 $^{a}$) Ś1 संवभूव च तत्सैन्य, Ś2 K1 3 4 सर्वं बभूव तत्सैन्य, D4 बभूव तत्सैन्य च (submetric) — $^{b}$) S शखशब्दे समीरिते — D4 om (hapl) $18^{c}$–$19^{d}$ — $^{c}$) B1–3 T G2–4 -नर (for रथ-) — $^{d}$) S अपि (G3 4 अभि) (for इव) K1 चाविभो, K3 D1 वाभिभो, K5 Dn1 भारत, B च प्रभो, Dc1 Dn2 D3 वा (Dc1 च) विभो, D2 6 चावभौ (for चाभिभो)

19 D4 om. 19 (cf. v l 18) — $^{a}$) B1 त (for तत्) Ś1 K1 3–5 B4 Dn D1 7 8 प्रयुद्धम्, Ś2 K3 B1 2 Dc1 D2 3 5 प्रविद्धम्, B3 5 D6 प्रवृद्धम् (for प्रयुक्तम्) Ś2 इवाकाशै, K4 °काशे, Dn1 D5 अनाकाश, Dn2 महाराज, G1 M अनाधृष्य (for इवाकाश) T G3–5 तत्प्रह्व( G3 °स्र )छजनाबाधं — $^{b}$) S भेरी (M5 शौरि-) (for शूरै) K B4 Dn2 D1. 3 M3–5 विनादित, D3 -निनादितै, D6 -विनादितै (for निनादितम्) — $^{c}$) B (except B4) Dc1 वभूव व्याकुलं सर्वं — $^{d}$) B2 D2 3 G3 4 निर्वातैर् (for निर्घातैर्) T G2–5 सवृतं (for नादितम्) D5 घातैरिव निनादित, D7 8 निर्घातरवनादित

20 $^{a}$) D2 4 तु (for सु) — $^{b}$) K1. 3 4 D2 6 G3 व्यनादयन्, K5 B Dn1 D1 5 T G5 M5 विनादयन्; Dc1 निनादयन्; D7 8 G3 4 विनादयत् (for व्यना°) — D4 om $20^{c}$–$21^{d}$ — $^{d}$) K3 B Dc1 D3 5 6 संवृत; K4 Dn2 D2 G1 सम्भृत, T G2–5 संवृत; M1 2 संहृत

जयद्रथस्य रक्षार्थं पाण्डवं पर्यवारयन् ॥ २१
ततो द्रौणिस्त्रिसप्तत्या वासुदेवमताडयत् ।
अर्जुनं च त्रिभिर्भल्लैर्ध्वजमश्वांश्च पञ्चभिः ॥ २२
तमर्जुनः पृषत्कानां शतैः षड्भिरताडयत् ।
अत्यर्थमिव संक्रुद्धः प्रतिविद्धे जनार्दने ॥ २३
कर्णं द्वादशभिर्विद्ध्वा वृषसेनं त्रिभिस्तथा ।
शल्यस्य सशरं चापं मुष्टौ चिच्छेद वीर्यवान् ॥ २४
गृहीत्वा धनुरन्यत्तु शल्यो विव्याध पाण्डवम् ।
भूरिश्रवास्त्रिभिर्बाणैर्हेमपुङ्खैः शिलाशितैः ॥ २५
कर्णो द्वात्रिंशता चैव वृषसेनश्च पञ्चभिः ।
जयद्रथस्त्रिसप्तत्या कृपश्च दशभिः शरैः ।
मद्रराजश्च दशभिर्विव्यधुः फल्गुनं रणे ॥ २६
ततः शराणां षष्ट्या तु द्रौणिः पार्थमवाकिरत् ।
वासुदेवं च सप्तत्या पुनः पार्थं च पञ्चभिः ॥ २७
प्रहसंस्तु नरव्याघ्रः श्वेताश्वः कृष्णसारथिः ।
प्रत्यविध्यत्स तान्सर्वान्दर्शयन्पाणिलाघवम् ॥ २८
कर्णं द्वादशभिर्विद्ध्वा वृषसेनं त्रिभिः शरैः ।
शल्यस्य समरे चापं मुष्टिदेशे न्यकृन्तत ॥ २९
सौमदत्तिं त्रिभिर्विद्ध्वा शल्यं च दशभिः शरैः ।
शितैरग्निशिखाकारैर्द्रौणिं विव्याध चाष्टभिः ॥ ३०
गौतमं पञ्चविंशत्या सैन्धवं च शतेन ह ।
पुनर्द्रौणिं च सप्तत्या शराणां सोऽभ्यताडयत् ॥ ३१ C. B K

(for सम्भृत) $M_{3-5}$ युगातघनवन्नृश

21 $D_4$ om. 21 (cf v l. 20) —$^a$) $D_{3\ 6}$ चैव, $G_5$ चाष्टौ (by transp) —$^d$) $B_4$ समवारयन् (for पर्यवा)

22 $D_5$ om. 22–23 —$^a$) $Ś_1$ [s]स्त्राणा, $G_5$ द्रोणिस् (for द्रौणिस्) — $Dn_1$ om. (hapl) $22^c$–$23^b$

23 $Dn_1$ om $23^{ab}$, $D_5$ om 23 (for both, cf v l 22) $D_3$ om $23^a$–$24^b$ —$^a$) Ś $K_3$ $G_2$ पृषत्काना —$^b$) $G_1$ शितै (for शतै°) —$^c$) $Dc_1$ $D_2$ अत्यंतम् (for अत्यर्थम्) $K_4$ संक्रुद्धे, T $G_{3-5}$ सहृष्ट, $G_1$ M ($M_5$ *sup lin*) संविभ, $G_2$ संसृष्ट, $M_5$ (orig) संरुष्ट (for संक्रुद्ध°) —$^d$) $G_1$ $M_{1\ 2}$ प्रविद्धे तु (for प्रतिविद्धे)

24 $D_3$ om. $24^{ab}$ (cf v l. 23) —$^a$) $K_3$ $B_{1\ 5}$ $Dn_2$ $D_{1-3\ 5\ 6}$ च ($D_6$ स) दशभिर् (for द्वादश) $D_2$ बाणैर्, $M_{3-5}$ भल्लैर् (for विद्ध्वा) —$^b$) $Ś_2$ त्रिभिस्तदा, $D_2$ विशेषत (for त्रिभिस्तथा)

25 $^a$) $B_2$ (orig) अत्यर्थं, $B_2$ (marg) $D_{4.\ 6-8}$ T $G_{3-5}$ अन्यं तु, $G_1$ $M_{1\ 2}$ अन्यच्च (for अन्यत्तु) —$^d$) $Dc_1$ $Dn_1$ $D_5$ शिलासितै°

26 $^a$) $D_{4\ 7\ 8}$ T $G_5$ $M_{1\ 2}$ द्वाविंशता (for द्वात्रिं) $Ś_1$ कर्णो वै द्वात्रिंशता च, $Ś_2$ K (except $K_5$) $D_1$ द्वात्रिं ($K_{1.\ 2}$ विं)शता तथा कर्णो —$^b$) $Dn_1$ $M_{3-5}$ तु (for च) $K_2$ $B_2$ (marg, orig as in text) $_4$ $Dn_2$ $D_{2\ 3\ 6}$ सप्तभि° (for पञ्चभि°) — $G_4$ om (hapl.) $26^c$–$27^d$ —$^c$) $B_{1-3}$ $Dc_1$ च, $G_1$ $M_{1.\ 2}$ तु (for त्रि) — $G_5$ om (hapl) $26^d$–$27^c$

27 $G_4$ om 27, $G_5$ om $27^{abc}$ (for both, cf v l 26) —$^a$) $D_2$ च (for तु) — $D_5$ om $27^b$–$28^a$ —$^b$) $D_1$ द्रोणि (for द्रौणि) $D_{4\ 6}$ अवाकिरन् (for °रत्) —$^c$) $K_4$ $B_4$ $Dn_2$ $D_{3\ 6}$ विंशत्या (for सप्तत्या) —$^d$) $B_2$ (marg, orig as in text) $D_{2\ 4}$ S (except $M_{3-5}$, $G_4$ om) सप्तभि° (for पञ्चभि)

28 $D_5$ om. $28^a$ (cf. v l 27) —$^a$) $Ś_2$ $K_{1\ 3}$ च (for तु) —$^c$) S प्रत्यविध्यत (for °ध्यत्स) $B_3$ वीरान् (for सर्वान्) —$^d$) $Ś_1$ हस्त- (for पाणि)

29 $^a$) $D_2$ च दशभिर् (for द्वाद°) — $D_5$ $G_1$ $M_{1.\ 2}$ om. (hapl) $29^b$–$30^a$ —$^b$) $D_1$ तथा (for शरै°) — $K_5$ $Dn_2$ om. (hapl) $29^c$–$30^b$ —$^c$) $B_4$ $Dc_1$ $D_{1\ 3\ 6\ 7}$ सशर (for समरे)

30 $K_5$ $Dn_2$ om $30^{ab}$, $D_5$ $G_1$ $M_{1\ 2}$ om $30^a$ (for all, cf v l 29) —$^a$) $Dn_1$ $D_4$ $G_{4\ 5}$ सोमदत्तिं (for सौम) —$^b$) Ś $K_{1-3}$ $D_{1.\ 4\ 7\ 8}$ $M_{3.\ 4}$ शलं, $D_5$ शळं (for शल्यं) S नवभि° (for दशभि) —$^c$) $Dn_1$ सितैर्, $D_3$ $M_{3\ 5}$ शरैर् (for शितैर्) T G $M_{1\ 2}$ शरैराशीविषाकारैर् —$^d$) $G_{2\ 5}$ द्रोणिं (for द्रौणिं) T $G_2$ विव्याथ (for ध) $Ś_2$ (*sup lin* as in text) $D_{4\ 5}$ सप्तभि° (for चाष्टभि)

31 $D_4$ om (hapl.) $31^{bc}$ —$^b$) $Ś_2$ तु, $K_5$ $D_{6\ 7\ 8}$ हि, $B_4$ T G $M_{1.\ 2}$ च (for ह) $M_{3-5}$ सैंधवं नवभि° शरै° — After $31^{ab}$, $Dc_1$ reads $33^{ab}$ $Dn_2$

23
4 33 भूरिश्रवास्तु संक्रुद्धः प्रतोदं चिच्छिदे हरेः ।
4 33 अर्जुनं च त्रिसप्तत्या बाणानामाजघान ह ॥ ३२

ततः शरशतैस्तीक्ष्णैस्तानरीञ्श्वेतवाहनः ।
प्रत्यषेधद्द्रुतं क्रुद्धो महावातो घनानिव ॥ ३३

इति श्रीमहाभारते द्रोणपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

## ८०

धृतराष्ट्र उवाच ।
ध्वजान्बहुविधाकारान्भ्राजमानानतिश्रिया ।
पार्थानां मामकानां च तान्ममाचक्ष्व संजय ॥ १
संजय उवाच ।
ध्वजान्बहुविधाकाराञ्शृणु तेषां महात्मनाम् ।
रूपतो वर्णतश्चैव नामतश्च निबोध मे ॥ २
तेषां तु रथमुख्यानां रथेषु विविधा ध्वजाः ।
प्रत्यदृश्यन्त राजेन्द्र ज्वलिता इव पावकाः ॥ ३
काञ्चनाः काञ्चनापीडाः काञ्चनस्रगलंकृताः ।
काञ्चनानीव शृङ्गाणि काञ्चनस्य महागिरेः ॥ ४
ते ध्वजाः संवृतास्तेषां पताकाभिः समन्ततः ।
नानावर्णविरागाभिर्विबभुः सर्वतो वृताः ॥ ५
पताकाश्च ततस्तास्तु श्वसनेन समीरिताः ।
नृत्यमानाः व्यदृश्यन्त रङ्गमध्ये विलासिकाः ॥ ६

---

D2 om 31^c–32^d — ^c) S विंशत्या (for सप्तत्या)

32 Dn2 D2 om 32 (cf v l 31) — ^a) D5 7 8 च, G1 M1. 2 सु (for तु) — ^b) G5 प्रतोदं चिच्छेद भल्लकैः (hypermetric) — ^c) K5 तु (for च) — ^d) K4 D1 स जघान (for आज°)

33 Dc1 reads 33^ab after 31^ab — ^b) D2 नृपान् (for अरीन्) — ^c) K5 Dn1 प्रत्यविध्यद् (for °षेधद्) D3 6 भृशं (for द्रुत) D2 T G2–5 M5 (sup lin as in text) प्रत्यविध्यत्सुसंक्रुद्धो

Colophon — *Sub-parvan* N (except K2 4) T G3 5 जयद्रथवध — *Day of Drona's Generalship* K1 चतुर्थे, K2 3 चतुर्थदिवसे, T G3 5 चतुर्थेऽह्नि — *Adhy name* D7 संकुलयुद्धं — *Adhy no* (figures, words or both) B1 101, B3 102, B5 109, Dn1 103, D2 105, D8 T G1–4 M1. 2 100, D7 104, G5 98, M3–5 99 — *Śloka no* Dn1 33, G5 34

### 80

1 Ś K1–4 D6 om (hapl.) 1 Ś2 K1 3 om the ref Dc1 reads 1 after 3^ab — ^a) Dn1 ध्वजाश्च विविधाकारा — ^b) B1 (marg as in text) Dn1 D2 राजमानान् (for भ्राज°) B1 अभिश्रिया, Dn1 श्रमि, D2 बहु° (for अति°) — ^c) K5 B5 Dn1 D4 5 7 8 पार्थस्य (for पार्थानां) — ^d) B1–3 D4. 5 7 8 स्व, Dn1 D1 2 तन् (for तान्) D3–5 7 समाचक्ष्व (for ममा°)

2 K4 G5 om the ref. — ^a) G4 राजन् (for ध्वजान्) D5 ध्वजान्बहुविधाभ्राजन् — ^d) T G2–5 स्व (for च)

3 ^b) D2 विपुला (for विविधा) — After 3^ab, Dc1 reads 1, while D2 ins 554*

4 ^a) D2 काचनालकृता सर्वे — ^b) D2 विभूषिता (for अलकृता) — Ś K B Dc1 Dn D1 3–8 ins after 4 D2 after 3^ab

554* अनेकवर्णा विविधा ध्वजा परमशोभिन ।

[ D2 विपुला (for विविधा) Ś2 B Dc1 Dn D2–4 6 -शोभना, D8 शोभिता (for -शोभिन) ]

5 ^c) Ś2 D3 4 6 विभागाभिर्, B1 3–5 Dc1 विकाराभिर्, B2 (marg as in text) -पताकाभिर्, G1 M विचित्राभिर् (for -विरागाभिर्) — ^d) K2 Dn2 D2 3 5 6 शुशुभु, D3 विविशु (for विबभु) D1 मुखा, D5 नृप, G1 -दिश, M1 2 -दिश (for वृता) B Dc1 अशोभंत समुच्छ्रिता, T G2–5 शोभते स वृता नरा (G2 5 वृतातरा)

6 ^a) K5 B2–4 D2 3. 6 7 तु (for च) K. Dn1 च (for तु) — ^b) M3–5 पवनेन (for श्वसनेन) — ^c)

इन्द्रायुधसवर्णाभाः पताका भरतर्षभ ।
दोधूयमाना रथिनां शोभयन्ति महारथान् ॥ ७
सिंहलाङ्गूलमुग्रास्यं ध्वजं वानरलक्षणम् ।
धनंजयस्य संग्रामे प्रत्यपश्याम भैरवम् ॥ ८
स वानरवरो राजन्पताकाभिरलंकृतः ।
त्रासयामास तत्सैन्यं ध्वजो गाण्डीवधन्वनः ॥ ९
तथैव सिंहलाङ्गूलं द्रोणपुत्रस्य भारत ।
ध्वजाग्रं समपश्याम बालसूर्यसमप्रभम् ॥ १०
काञ्चनं पवनोद्धूतं शक्रध्वजसमप्रभम् ।
नन्दनं कौरवेन्द्राणां द्रौणेर्लक्षणमुच्छ्रितम् ॥ ११
हस्तिकक्ष्या पुनर्हैमी बभूवाधिरथेर्ध्वजे ।
आहवे खं महाराज ददृशे पूरयन्निव ॥ १२
पताकी काञ्चनस्रग्वी ध्वजः कर्णस्य संयुगे ।
नृत्यतीव रथोपस्थे श्वसनेन समीरितः ॥ १३
आचार्यस्य च पाण्डूनां ब्राह्मणस्य यशस्विनः ।
गोवृषो गौतमस्यासीत्कृपस्य सुपरिष्कृतः ॥ १४
स तेन भ्राजते राजन्गोवृषेण महारथः ।
त्रिपुरघ्नरथो यद्वद्गोवृषेण विराजते ॥ १५
मयूरो वृषसेनस्य काञ्चनो मणिरत्नवान् ।
व्याहरिष्यन्निवातिष्ठत्सेनाग्रमपि शोभयन् ॥ १६ C : B : K :

B ( except B4 ) Dc1 स दृश्यते, S प्रदृश्यंते ( for व्यदृश्यन्त ) — d ) D3 रणमध्ये ( for रङ्ग° ) S यथा स्त्रिय, Cd विलासिका ( as in text )

8 a ) S सिंहलांगूल उग्रास्यो — b ) Ś1 K ( except K5 ) D1 -लक्षितं ( for -लक्षणम् ) D7 8 वानर ध्वजलक्षणं, S ध्वजो वानरलक्षण — d ) Ś2 प्रतिपश्याम, K2 B4 Dn2 D1, 2 S प्रत्यदृश्यत ( G2 °श्यंत ), Dc1 D7 8 दृश्याम ( for पश्याम ) T G2–5 भारत, G1 M3–5 भैरव ( for भैरवम् )

9 a ) S ( except M3–5 ) -ध्वजो ( for -वरो ) — d ) D4 गांजीव ( for गाण्डीव ) K1 5 Dn D3–7 G2 5 -धन्विन ( for -धन्वन )

10 a ) G2 5 -लांगूलो ( for लं ) — c ) D2 S ध्वजाग्रे, D6 ध्वजाग्र्य ( for ग्रं ) D2 G1 M1 2 प्रत्य ( D2 सम )पश्यामो, T G2–5 M3–5 प्रत्यदृश्याम ( for समपश्याम ) — d ) Dn1 बालसूर्यमिवोदितं, D4 °सूर्य इव प्रभं

11 K4 D1 om ( hapl. ) $11^{ab}$ — a ) D6 पवनोद्धूतं — b ) K5 Dn1 निर्मं शुभं, B1, 2 ( orig ) 3 G2–5 सम द्युति, B5 Dc1 T G1 M -समद्युतिं ( T ति ) ( for प्रभम् ) — c ) G M1 2 कौरवेयाना ( for वेन्द्राणां ) — d ) K1 D2 G1, 5 M1, 2 द्रोणेर् ( for द्रौणेर् ) Ś K1–4 D1 वत्समं ( for उच्छ्रितम् ) K5 B Dc1 Dn D3–8 द्रौ ( D4 8 द्रो )णेर्लक्ष्म समुच्छ्रि( K5 °मन्वि, D3 मुस्थि )तं, G4 मध्यमर्षणमुच्छ्रित

12 a ) Ś1 K5 Dn1 D3, 4 6 8 Cd हस्तिकक्षा, D2 °कार्क्ष ; M1 भस्तिकक्ष्या ( for हस्ति ) D3 हैम ( for हैमी ), Cv हस्तकाक्ष्या पुनर्हैमी ; Cvp हस्तिकक्षौ — b ) Ś K1 3 Dn1 D1 4 5 8 बभूवाधि( Ś2 °ति )रथे, D2 भ्राजतेधिरथे, G1 M बभावाधिरथेर् ( for बभूवाधि° ) K5 B Dc1 Dn2 D3 6 G1 M3–5 ध्वज, M1 2 ध्वज ( for ध्वजे ) K2 4 बभूवाधिरयध्वजे, T G2–5 प्रसह्या तिरथे ध्वजे — c ) Ś2 K ( except K5 ) D1 ददृशे च ( Ś2 शेय ), D2 S स ( S ख ) चाहवे ( for आहवे खं ) D1 2 महाराजन् — d ) D3 दिश ( for इव ) Ś2 K ( except K5 ) D1 पूरयंतीव खं रणे

13 a ) K2 4 5 B Dc1 Dn D3–8 G5 पताका ( for की ) K2 B Dn D3–6 G1, 3 4 M1 2 काचनी ( for काञ्चन ) D2 पताकानां च य स्रग्वी — b ) K1 3 B4 5 D4 ध्वजे ( for ध्वज ) — d ) K1 T समीरिता, B1 3 ( marg as in text ) Dn2 D1–6 G1 3 M1 2 रिता ( for रित )

14 a ) B2 3 Dn1 D2–8 M3–5 तु ( for च ) — b ) K3 Dn2 D3 6 तपस्विन ( for यश ) — d ) K4 5 Dn1 D1 3 4 7 8 सुपरिस्कृ( D7 °स्तु )त, B4 T G3 4 च परि स्कृत, Cd सुपरिकृत ( sic ) ( for ष्कृत )

15 a ) D4 ततस्तक्रातरो राजन् — b ) B4 वृषसेन ( for गोवृषेण ) K4 महात्मना, D1 °त्मन, D6 विरा जता ( for महारथ ) — c ) B1–3 Dc1 D3 5 त्रिपुरारि ( for रघ्न ) Ś K1–3 D6 त्रिपुराणां रिपुर्यद्वद् — After $15^{abc}$, D7 reads $17^{b}$ for the first time, repeating it in its proper place D7 om $15^{d}$ — d ) K4 M2 विरा जिते, B1, 2 3 ( marg ) 4 Dc1 Dn1 D2–4 6 T G2–5 M3–5 °जता ( for °जते )

16 K3 om. ( hapl ) 16–17 D7 reads $16^{ab}$ after 17. — b ) D2 नृप ( for मणि ). — c ) B4 मन्या

42 3. 17 5 17 तेन तस्य रथो भाति मयूरेण महात्मनः ।
यथा स्कन्दस्य राजेन्द्र मयूरेण विराजता ॥ १७
मद्रराजस्य शल्यस्य ध्वजाग्रेऽग्निशिखामिव ।
सौवर्णी प्रतिपश्याम सीतामप्रतिमां शुभाम् ॥ १८
सा सीता भ्राजते तस्य रथमास्थाय मारिष ।
सर्वबीजविरूढेव यथा सीता श्रिया वृता ॥ १९
वराहः सिन्धुराजस्य राजतोऽभिविराजते ।
ध्वजाग्रेऽलोहिताकभो हेमजालपरिष्कृतः ॥ २०

शुशुभे केतुना तेन राजतेन जयद्रथः ।
यथा देवासुरे युद्धे पुरा पूषा स्म शोभते ॥ २१
सौमदत्तेः पुनर्यूपो यज्ञशीलस्य धीमतः ।
ध्वजः सूर्य इवाभाति सोमश्चात्र प्रदृश्यते ॥ २२
स यूपः काञ्चनो राजन्सौमदत्तेर्विराजते ।
राजसूये मखश्रेष्ठे यथा यूपः समुच्छ्रितः ॥ २३
शलस्य तु महाराज राजतो द्विरदो महान् ।
केतुः काञ्चनचित्राङ्गैर्मयूरैरुपशोभितः ॥ २४

---

हरन्, Cd व्याहरिष्यन् (as in text) S व्याहरन्निव चाति छत् —$^{d}$) K4 B4 Do1 Dn2 D1–3 6 उप, B1–3 5 S अभि- (for अपि)

17 K3 om 17 (cf v l 16) —$^{a}$) D2 तथा (for तेन) — D7 reads $17^{b}$ for the first time after $15^{abc}$ —$^{b}$) K4 5 D2 3 महात्मना (for °त्मन) — G2 om $17^{cd}$ —$^{c}$) D2 S (G2 om) यथा स्कंदरथो राजन् —$^{d}$) Ś2 K1 4 5 B3 Dn1 D5 G1 M1. 2 विराजते, D8 M3–5 व्यराजत (for विराजता) — After 17, D7 reads $16^{ab}$

18 $^{a}$) B4 om मद्रराजस्य K1 शैलस्य (for शल्यस्य) — D4 om (hapl) $18^{b}$–$19^{a}$ —$^{b}$) G5 शिखाग्रे (for ध्वजाग्रे) —$^{c}$) K5 Dn1 G1 3–5 M1 सौवर्णां, D2 5 7 T G2 सौवर्णं (for सौवर्णीं) Ś K1–3 D1 प्रतिपश्याम·, K5 B (except B4) Do1 Dn1 D3 समपश्याम (D3 °मि), D5 7 8 अभिपश्याम (D5 °म), T G M1–3 5 प्रत्यपश्याम (G1 M1. 2 °म), M4 प्रत्यदृश्याम (for प्रतिप°) —$^{d}$) K5 Dn1 इव (for शुभाम्) Ś K1–4 सी(K3 [sup lin]स्फी)तामग्निशिखामिव (Ś2 °स्विव), Cv सीरामप्रतिमं शुभं

19 D4 om. $19^{a}$ (cf v l 18) —$^{a}$) T G1–3 5 राजते (for भ्राजते) —$^{b}$) Ś K Dn1 D1 भारत, D7 मारिप (for मारिष) —$^{c}$) B5 lacuna for the portion from जविरूढेव up to वृता (in $19^{d}$) B2 (marg as in text) -विरूढेय, D5 -विरूढेन, T G3–5 -विरूढेन, G1 M1 2 -विरोहैव (for विरूढेव) —$^{d}$) D4 घृत (for वृता)

20 $^{a}$) K5 D4 7 8 G1 M1 2 वाराह —$^{b}$) D4 राजानो (for राजतो) Ś K1 4 [ऽ]पि, K5 B1 Dn1 D4 6 7 8 हि (for ऽभि) —$^{c}$) K5 राजते (for ध्वजाग्रे) D8 [ऽ]लोहिताकभौ, T G1. 3. 4 M °ताराभो, G2 5 °तांकाभो (for ऽलोहिताकभो) —$^{d}$) K1 4 5 Dn1 D1 3 4 6–8 -परिस्कृत (Dn1 °तं)

21 $^{a}$) D4 5 7 8 स तेन भ्रा(D5 रा)जते राजन् —$^{b}$) D5 भ्राजतेन, D8 स च तेन (for राजतेन) D4 5 7 8 महारथ (for जयद्रथ) —$^{c}$) D8 पुरा (for यथा) —$^{d}$) B5 om from पूषा up to राजसूये (in $23^{c}$) Ś2 व्यशोभत, K1 D3 सुशोभते, K2 स शोभन, Dn1 व्यशोभत (for स्म शोभते)

22 B5 om 22 (cf v l 21) —$^{a}$) K5 Dn1 D4 7 8 G5 सोमदत्ते B1 ध्वजो, T G3 4 पुरा (for पुनर्) —$^{b}$) K1 यज्ञशूलस्य, K5 °सेनस्य, G5 वज्रशीलस्य (for यज्ञ°) — D5 om $22^{cd}$ —$^{d}$) T G2–5 रथे, G1 M1 2 सौम्यश् (for सोमश्)

23 B5 om up to राजसूये (cf v l 21) —$^{b}$) D3 सोमदत्तेर्, D4 7 T G2–4 सोमदत्तेर् (for सौम°) Dn1 व्यराजत (for विराजते) —$^{c}$) K5 Dn1 यथा यज्ञे, S क्रतुश्रेष्ठे (for मख°) —$^{d}$) K5 Dn1 यूप श्रेष्ठ (for यथा यूप·) B3 (marg as in text) प्रदृश्यते (for समुच्छ्रित)

24 $^{a}$) Ś2 K1 2 4 5 B (except B2) Dn D4 7 8 S (except G3 4 M1. 2) शल्यस्य, D2 शकुनेस्, D3 स तस्य, D5 शळस्य (for शलस्य) Ś K1. 2 4 D3 च (for तु) —$^{b}$) D2 3 G2 5 राजते (for °तो) B3 (marg as in text) यथा (for महान्) —$^{c}$) B5 lacuna for the portion from न चित्राङ्गै up to यथा (in $25^{c}$) B3 -चित्रागो (for °ङ्गैर्) T G3–5 केतन काचन(G5 °नै)स्तत्र, G1 M केतना काचनास्त्रग्, G2 केतु काचनस्तत्र (submetric) —$^{d}$) D2 S मयूरैर् (for मयूरैर्) G1 M इव (M3–5 उप·) शोभिता· (for उपशोभित)

25 B5 lacuna up to यथा (in $25^{c}$), —$^{a}$) B1–3

स केतुः शोभयामास सैन्यं ते भरतर्षभ ।
यथा श्वेतो महानागो देवराजचमूं तथा ॥ २५
नागो मणिमयो राज्ञो ध्वजः कनकसंवृतः ।
किङ्किणीशतसंह्रादो भ्राजंश्चित्रे रथोत्तमे ॥ २६
व्यभ्राजत भृशं राजन्पुत्रस्तव विशां पते ।
ध्वजेन महता संख्ये कुरूणामृषभस्तदा ॥ २७
नवैते तव वाहिन्यामुच्छ्रिताः परमध्वजाः ।
व्यदीपयंस्ते पृतनां युगान्तादित्यसंनिभाः ॥ २८
दशमस्त्वर्जुनस्यासीदेक एव महाकपिः ।
अदीप्यतार्जुनो येन हिमवानिव वह्निना ॥ २९
ततश्चित्राणि शुभ्राणि सुमहान्ति महारथाः ।
कार्मुकाण्याददुस्तूर्णमर्जुनार्थे परंतपाः ॥ ३०
तथैव धनुरायच्छत्पार्थः शत्रुविनाशनः ।
गाण्डीवं दिव्यकर्मा तद्राजन्दुर्मन्त्रिते तव ॥ ३१
तवापराधाद्धि नरा निहता बहुधा युधि ।
नानादिग्भ्यः समाहूताः सहयाः सरथद्विपाः ॥ ३२
तेषामासीद्व्यतिक्षेपो गर्जतामितरेतरम् ।
दुर्योधनमुखानां च पाण्डूनामृषभस्य च ॥ ३३ C 7 B 7 K 7

Do1 M3 5 शोभयन्सैन्य (for शोभयामास) T G M1 2 स ध्वजोशोभयत्सैन्यं, M4 स केतुरशोभयत्सैन्यं (hyper metric) —b) Do1 S तावकं (for सैन्यं ते) —d) Ś1 यत, Ś2 K1-4 D1 नृप, K5 प्रति, B2 5 T G3 4 M3-5 तदा, Dn1 पुरा, D3 यथा (for तथा)

26 G4 om (hapl) 26-27 —a) Ś2 K (except K5) स वै (for नागो) Ś K (except K5) नागो (for राज्ञो) —b) D5 ध्वजे (for ध्वज) B (B2 marg as in text) कांचन, S (G4 om) केतन (for कनक) Ś2 K1 3. 4 D1 -भूषित- (for -संवृत) —c) Ś2 K4 -क्वण, K1. 2 -क्वाथ (for -शत) D2 G1-3 5 M निर्ह्रादो (for -संह्रादो) —d) B1 2 (marg as in text) Do1 T G3 5 राजंश् (for भ्राजंश्) K1 3 B2 4 5 Do1 Dn2 D1 3 4 6 चित्रो, B2 (marg) चित्र, T G1 2 M जैत्रे, G3 5 चैत्रे (for चित्रे) S (G4 om) महारथे (for रथोत्तमे) D2 भ्राजते स ध्वजोत्तम

27 G4 om. 27 (cf v l. 26) —a) B5 lacuna for the portion from स up to तव (in 28a) Ś1 D4 विभ्राजत; B1 5 Do1 D2 व्यरा (for व्यभ्रा) —b) D3 5 तव पुत्रो (by transp) —c) Ś2 K1 3 4 तेन, G1 2 M संखे, G3 शंखे (for संख्ये) —d) Ś1 K1 D4 5 7 8 तथा (for तदा) M3-5 यथा वासुकिभूषित

28 B5 lacuna for नवैते तव —a) Do1 न चैते (for नवैते) —b) K1 उच्छ्रित- परमध्वज —c) D4 व्यदीपयंस् (for पयंस्) B4 च (for ते) —d) K1 -सनिभ- D2 युगांतचितिसनिभा

29 b) Ś2 K1. 3 D6 महान् (for महा) —c) Dn1 प्रदीप्तो हि, D3 8 M3-5 आदीप्यत Ś1 [ऽ]नेन, Ś2 K3 4 D2 6 M3-5 तेन (for येन) T G M1 2 अ(G1 4 M- - आ)दीप्यदर्जुनस्तेन —d) S शंभुना (for वह्निना) D5 हिमवान्वह्निना यथा

30 a) Ś K (except K5) तत शुभ्राणि चित्राणि —b) D5 विविधानि (for सुमहान्ति) —c) Ś1 K1 3-5 Dn1 D3 M2 कार्मुकानि, B5 कथितानि, G5 कार्मुकस्य (for काणि) D2 [आ]ददुस् B5 lacuna for तूर्णं up to तपा (in 30d) —d) Ś1 K4 T G M1 2 4 अर्जुनार्थं Dn1 परतप

31 D4 om (hapl) 31-32 —a) B1 2 (marg, orig as in text) D2 आदाय (for [आ]यच्छत्) —b) K4 5 B4 Dn1 T G1 3-5 M1 2 विनाशन (for °शन) D2 [अ]र्जुन परपुरंजय, D7 8 स पार्थ शत्रुनाशन —c) D3 G1 M -कर्माण, D8 कर्मैतद् (for कर्मा तद्) T G2-5 धनुस्तद्राज्ञिव दिव्य —d) B5 राजन्दुर्मन्त्रितेन च

32 D4 om 32 (cf v l 31) —a) B Do1 हि नृपा, Dn2 D1-3 6 राजानो, T G M1 2 राजेंद्र, M3 हि तदा (for हि नरा) —b) S (except G1 M1 2) transp निहता and बहुधा B1 3-5 Do1 Dn1 D3 बहवो, B2 Dn2 D1-3 6 बहुशो (for बहुधा) B2 (marg, orig as in text) रणे, S (except M3-5) नरा (for युधि) —c) D2 S नानादेश, D3 6 °देश्या- (for °दिग्भ्य) B1 समाभूता, D7 8 °याता (for °हूता) —d) D2 राजान- (for सहया) K5 Dn1 सरथद्विपपत्तय; D3 5-8 सरथा सहयद्विपा

33 a) Ś1 प्रतिक्षेपो, Ś2 K1. 3 अति, K5 D5 व्यधि°, D2 ध्वनि- क्रूर-, D3 6 G1 M1. 2 व्यतिक्षोभो (for °क्षेपो) —b) M3-5 निघ्नताम् (for गर्जं°) D2 संरब्धानां परस्परं —c) D3 सुयोधन (for दुर्यो°)

34 a) M3 तत्रासुतरथ चक्रे —c) K1 यथैको; D1 यदैको, G3 य एको (for यदेको). D2 कुरुभिः (for

34 तत्राद्भुतं परं चक्रे कौन्तेयः कृष्णसारथिः ।
34 यदेको बहुभिः सार्धं समागच्छदभीतवत् ॥ ३४
अशोभत महाबाहुर्गाण्डीवं विक्षिपन्धनुः ।
जिगीषुस्तान्नरव्याघ्राञ्जिघांसुश्च जयद्रथम् ॥ ३५
तत्रार्जुनो महाराज शरैर्मुक्तैः सहस्रशः ।
अदृश्यानकरोद्योधांस्तावकाञ्शत्रुतापनः ॥ ३६
ततस्तेऽपि नरव्याघ्राः पार्थं सर्वे महारथाः ।
अदृश्यं समरे चक्रुः सायकौघैः समन्ततः ॥ ३७
संवृते नरसिंहैस्तैः कुरूणामृषभेऽर्जुने ।
महानासीत्समुद्धूतस्तस्य सैन्यस्य निस्वनः ॥ ३८

इति श्रीमहाभारते द्रोणपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

# ८१

धृतराष्ट्र उवाच ।
अर्जुने सैन्धवं प्राप्ते भारद्वाजेन संवृताः ।
पाञ्चालाः कुरुभिः सार्धं किमकुर्वत संजय ॥ १

संजय उवाच ।
अपराह्णे महाराज संग्रामे लोमहर्षणे ।
पाञ्चालानां कुरूणां च द्रोणे द्यूतमवर्तत ॥ २

---

बहुभि ) — d ) D4 अन्वगच्छद् ( for समाग° )

35 a ) Ś K1–3 D1. 4 8 सोशोभत, D2 अरोचत, D5 अशोभते, D7 सा शोभते ( for अशोभत ) D5 महाराज ( for °बाहुर् ) — b ) D4 गाजीवं ( for गाण्डीवं ) D2 विधूम इव पावक — c ) M3 जिहीर्षुस् ( for जिगीषुस् ) K2 तं ( for तान् ) K1–3 नरव्याघ्रा, B4 Dn2 D1 G5 °व्याघ्रो, D2 T G1–4 M रथश्रेष्ठान् ( for नरव्याघ्रान् ) — K1. 3 om ( hapl ) $35^{d}$–$37^{a}$, K2 om $35^{d}$–$37^{b}$ — d ) D4 स्व ( for च )

36 K1–3 om 36 ( cf v l 35 ) — a ) Ś1 तत्रार्जुनं, K4 5 S ततोर्जुनो ( for तत्रार्जुनो ) Ś K4 5 B5 Dn D1 3–8 नरव्याघ्र ( Ś1 D1. 4 °घ्रा , Dn1 °घ्रान् ), M3–5 महाबाहु ( for °राज ) — Ś K4 D1 om ( hapl ) $36^{b}$–$37^{a}$ — b ) G5 महात्मन ( for सहस्रश ) — c ) K5 Dn D3–8 तावकान् ( for अकरोद् ) D4 सर्वांस्, G1 M यौधास् ( for योधास् ) — d ) K5 Dn D3–8 प्रचक्रे ( for तावकान् ) D2 -कर्षण , M5 -कर्शन ( for -तापन )

37 K2 om. $37^{ab}$ ( cf v l 35 ) Ś K1. 3 4 D1 om $37^{a}$ ( cf v l 36, 35 ) — a ) D5 सर्वे ( for तेऽपि ) Dn1 नरव्याघ्रं, S महाभागा ( for नरव्याघ्रा ) — b ) S transp पार्थं and सर्वे D2 सव्यसाचिनमाहवे

38 a ) Ś1 D3. 6 नरसिंहे ( for °सिंहैस् ) Ś K B4 5 Dn D1 3–8 तु ( for तै ) — b ) D2 कुरूणामृषभोर्जुन — c ) K ( except K1 ) Dc1 Dn D1 2 4–8 T समुद्भूतस् ( for °द्धूतस् ) — d ) D6 S तव ( for तस्य ) Ś K ( except K4 ) B4 D ( except Dn1 D3 5 ) S ( except G5 ) नि स्वन ( M4 °नं ) ( for निस्वन )

Colophon om in Ś1 K4 D1 — *Sub-parvan* Ś1 K1–3 5 B Dc1 Dn D2–4 6–8 G2 जयद्रथवध — *Day of Droṇa's Generalship* K1 3 चतुर्थदिवसे, G2 5 चतुर्थेह्नि — *Adhy name* K5 D5 ध्वजविभागवर्णन, Dn1 ध्वजवर्णनं, D7 रथध्वजवर्णन , D3 ध्वजवर्णन — *Adhy no* ( figures, words or both ) B1 102 , B2 98 , B3 103 , B4 111 , Dn1 104 , D2 106 , D3 T G1–4 M1 2 101 , G5 99 , M3–5 100 — *Śloka no* Dn1 38

## 81

1 a ) S याते ( for प्राप्ते ) — b ) K1 सवृत , D5 °ते ( for °ता ) — c ) K1 पाचाल , D1 5 G1 M3 4 पचाला ( for पाञ्चाला ) — d ) Ś2 K1 B1 3 4 D ( except Dc1 D1 ) G1. 3 4 M अकुर्वंत ( for °र्वत )

2 a ) K1 D ( except Dn2 D4 8 ) अपराह्ने — b ) S रोम ( for लोम ) D2 संग्रामस्तुमुलोभवत् — After $2^{ab}$, D2 reads $4^{cd}$ D2 om ( hapl ) $2^{cd}$ — c ) K3 D1 6 पचालाना , D3 पांचालाना च ( hypermetric ) ( for पाञ्चालाना ) — G4 om ( hapl ) $2^{d}$–$4^{c}$ — d ) K2 3. 5 B Dc1 Dn द्रोणपूर्वम्, D4 प्राणा पूर्वम्; D4 7. 8 प्राणपूर्वम्;

पाञ्चाला हि जिघांसन्तो द्रोणं संहृष्टचेतसः ।
अभ्यवर्षन्त गर्जन्तः शरवर्षाणि मारिष ॥ ३
ततः सुतुमुलस्तेषां संग्रामोऽवर्तताद्भुतः ।
पाञ्चालानां कुरूणां च घोरो देवासुरोपमः ॥ ४
सर्वे द्रोणरथं प्राप्य पाञ्चालाः पाण्डवैः सह ।
तदनीकं विभित्सन्तो महास्त्राणि व्यदर्शयन् ॥ ५
द्रोणस्य रथपर्यन्तं रथिनो रथमास्थिताः ।
कम्पयन्तोऽभ्यवर्तन्त वेगमास्थाय मध्यमम् ॥ ६
तमभ्यगाद्बृहत्क्षत्रः केकयानां महारथः ।
प्रवपन्निशितान्बाणान्महेन्द्राशनिसंनिभान् ॥ ७

तं तु प्रत्युदियाच्छीघ्रं क्षेमधूर्तिर्महायशाः ।
विमुञ्चन्निशितान्बाणाञ्शतशोऽथ सहस्रशः ॥ ८
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
त्वरितोऽभ्यद्रवद्द्रोणं महेन्द्र इव शम्बरम् ॥ ९
तमापतन्तं सहसा व्यादितास्यमिवान्तकम् ।
वीरधन्वा महेष्वासस्त्वरमाणः समभ्ययात् ॥ १०
युधिष्ठिरं महाराज जिगीषुं समवस्थितम् ।
सहानीकं ततो द्रोणो न्यवारयत वीर्यवान् ॥ ११
नकुलं कुशलं युद्धे पराक्रान्तं पराक्रमी ।
अभ्यगच्छत्समायान्तं विकर्णस्ते सुतः प्रभो ॥ १२ C 7 B 7 K 7

---

S (G4 om) द्रोणे युद्धम् (for द्रोणे द्यूतम्) B4 अभूत्तदा (for अवर्तत)

3 G4 om 3 (cf v l 2) —a) K3 B2 3 D6 पचाला G1 M1 2 [अ]मि (for हि) —c) Ś2 K1 4 B Dc1 Dn D1, 3–5 7 8 T G2 3 5 अभ्यमुचत, K3 5 अत्यमुचंत (for अभ्यवर्षन्त) D2 संरब्धा (for गर्जन्त) D6 अभ्यगाच्छन्विमुंचत —d) Dn2 S (G4 om) भूरिश, D1 मारिषं (for मारिष)

4 G4 om $4^{abc}$ (cf v l 2) —a) Ś K1 B4 Dc1 Dn2 D1–4 6 तु (Ś2 K1 स) तुमुलस्, K3 तु तुमुलैस्, D7 8 स तुमलस् (for सुतुमुलस्) —b) T G2 [अ]द्भुतं (for °त) — D2 reads $4^{cd}$ after $2^{ab}$ —c) B (except B1) D3 6 पचालानां —d) Ś1 घोरो देवासुरो यथा, K5 Dn1 देवासुररणोपम

5 a) Ś1 प्राप्य; D2 4 5 7 8 प्राप्ता (for प्राप्य) —b) B3 4 D6 पंचाला —c) T G3 बिभत्संतो (for विभि) D2 तवानीकमभीप्संतो —d) K (except K5) विदर्शयन्, D1 व्यधर्षयन् (for व्यदर्शयन्) D6 महा शस्त्राणि दर्शयन्

6 Ś K (except K5) D1 om 6 —a) D7 8 -पर्यंते (for °न्तं) —b) K5 D2 4 6 8 रथिनो रथसंस्थिता —c) D2 6 7 [ऽ]भ्यवर्तंते

7 a) B1 3 बृहत्क्षेत्र —b) K5 B2 3 Dc1 D2 3, 5–8 कैकयानां, Dn1 D4 कैके (for केक) G5 महारथा (for रथ) —c) D2 प्रवर्षन्; T G3, 4 प्रवमन् (for प्रवपन्) T G4 निवतान् (sic) (for निशितान्) — Ś K (except K5) D1 3 om. (hapl.) $7^{d}$–$8^{c}$ —d) B3 -सुप्रभान्; Dn1 भीषणान्, D2 (sup lin as in text) G5 निस्वनान्, D4 समप्रभान् (hypermetric) (for -संनि भान्) K5 शतशोथ सहस्रश, D5 इंद्राशनिसमप्रभान्

8 Ś K (except K5) D1 3 om $8^{abc}$ (cf. v l. 7) —a) K5 M3–5 प्रत्युद्ययात्, Dc1 Dn2 D3 6 °ययौ, D2 प्रत्यर्दयत् (for प्रत्युदियात्) —b) D2 4 5 मूर्तिर् (for धूर्तिर्) S महारथ (for °यशा) —c) G1 विमुक्त्वा (for विमुञ्चन्)

9 a) G1 2 5 M1 2 तु (for च) —b) Ś K1 3 D1 बलोद्धत, K5 Dn1 D4 7 8 °चित, D2 -बलो महान्, D6 -बलो विभु, M3–5 -बलान्वित (for -बलो दित) —c) Ś2 K1 3 [ऽ]भ्यपतद् (for °द्रवद्) —d) D2 महेंद्रम् D4 सत्वरं (for शम्बरम्) S महेंद्रमिव शंबर

10 K2 om $10^{ab}$ —c) Dn1 वीरो धन्वी, D4 5 वीरधर्मा, D7 8 °वर्मा (for धन्वा) —d) B4 इवाभ्य यात्, G3 4 तमभ्ययात्, G5 समभ्यधात् (for °यात्)

11 B3 reads $11^{a}$–$14^{b}$ on marg —a) K2 B (B2 marg, orig as in text) Dc1 Dn2 D1, 3, 6 G5 महा राजं, M5 °बाहुर् (for राज) —b) K5 D4 6 जिगीषु (for जिगीषुं) D6 तमवस्थित S (except G3 4) जिगीषुं (G1 °हीर्षुं) समुपस्थितं —c) Ś2 K1, 2 D2 4 महानीक (D4 °कस्) (for सहानीकं) S स्मयन् (for ततो) —d) D7 8 व्यवर्तयत, M5 व्यवारयत (for न्यवार ) D2 S स ब(T G3 4 तद्ब)ली (for वीर्यवान्)

12 B3 reads 12 on marg —a) T G2 रभस, G1 M1 2 रभसे; G3 4 रभसा; G5 सहसा (for कुशलं) —c) D6 अगच्छत्स (for अभ्यगच्छत्स्) D2 7 समायातं (for यान्तं) — Ś2 om (hapl) $12^{d}$–$13^{a}$ —d) B1 सत् (for ते)

177 16 13 16 13 सहदेवं तथायान्तं दुर्मुखः शत्रुकर्शनः ।
शरैरनेकसाहस्रैः समवाकिरदाशुगैः ॥ १३
सात्यकिं तु नरव्याघ्रं व्याघ्रदत्तस्त्ववारयत् ।
शरैः सुनिशितैस्तीक्ष्णैः कम्पयन्वै मुहुर्मुहुः ॥ १४
द्रौपदेयान्नरव्याघ्रान्मुञ्चतः सायकोत्तमान् ।
संरब्धान्रथिनां श्रेष्ठान्सौमदत्तिरवारयत् ॥ १५
भीमसेनं तथा क्रुद्धं भीमरूपो भयानकम् ।
प्रत्यवारयदायान्तमार्ष्यशृङ्गिर्महारथः ॥ १६
तयोः समभवद्युद्धं नरराक्षसयोर्मृधे ।
यादृगेव पुरा वृत्तं रामरावणयोर्नृप ॥ १७

ततो युधिष्ठिरो द्रोणं नवत्या नतपर्वणाम् ।
आजघ्ने भरतश्रेष्ठ सर्वमर्मसु भारत ॥ १८
तं द्रोणः पञ्चविंशत्या निजघान स्तनान्तरे ।
रोषितो भरतश्रेष्ठ कौन्तेयेन यशस्विना ॥ १९
भूय एव तु विंशत्या सायकानां समाचिनोत् ।
साश्वसूतध्वजं द्रोणः पश्यतां सर्वधन्विनाम् ॥ २०
ताञ्शरान्द्रोणमुक्तांस्तु शरवर्षेण पाण्डवः ।
अवारयत धर्मात्मा दर्शयन्पाणिलाघवम् ॥ २१
ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य संयुगे ।
चिच्छेद सहसा धन्वी धनुस्तस्य महात्मनः ॥ २२

13 Ś2 om 13ᵃ (cf v l 12) B8 reads 13 on marg — ᵃ) D6 7 8 G1 M3-5 समायांत (for तथायान्त) — ᵇ) Ś K1-3 -सूदनं, K4 D8 -सूदन, B Dc1 M3-5 -तापन, Dn2 D1-3 6 -कर्पण (for -कर्शन) — ᵈ) D2 S (except M3-5) समवारयदाशुगैः

14 B8 reads 14ᵃᵇ on marg — ᵃ) Ś2 K (except K2) च (for तु) D. ʳ नरव्याघ्र (for °घ्रं) — D8 om (hapl) 14ᵇ-15ᵃ — ᵇ) D2 3 G5 व्याघ्रदत्तस् (for °दत्तस्) D2 S त्ववाकिरत् (for रयत्) — D4 om 14ᶜ-15ᵇ — ᶜ) Ś1 K1 3. 4 D7 तु (for सु-) Dn1 चैव, S (except G4 M3-5) उग्रै (for तीक्ष्णै) — ᵈ) K1 कामयन्वै, B3 Dc1 कंकपत्रैर्, D6 7 उरस्सयन्वै (for कम्प°)

15 D4 om 15ᵃᵇ, D8 om 15ᵃ (for both, cf v l 14) — ᵃ) D2 नरव्याघ्र (for °व्याघ्रान्) — ᵇ) D2 पचभि (for मुञ्चतः) Dn1 सायकान्बहून् (for °कोत्तमान्) — ᶜ) K1 सशब्दान्, B1 2 Dc1 D2 सरब्धो (for °ब्धान्) K4 B (except B4) D3 S (except M3-5) रथिन· (for °नां) B (except B4) Dc1 D2 S (except M3-5) श्रेष्ठ· (for श्रेष्ठान्) — ᵈ) D1 2. 4 7 G1 5 M1 2 सोमदत्तिर् (for सौम°) D2 सौमदतिस्त्ववाकिरत्

16 ᵃ) Ś2 K1 तत· क्रुद्धं, K2 3 Dn D3. 6 7 तदा क्रुद्धं, D2 G1 M1 2 तथायातं, T G2-5 अथायातं, M3-5 तमायात (for तथा क्रुद्धं) — ᵇ) K1 D3 भीमरूपं, B Dc1 D2 5 S घोररूपं (T G M1. 2 °पो) (for भीमरूपो) K5 Dn D1 6-8 G2-5 भयानक·, D8 °नका·, G1 M1. 2 °वह (for °नकम्) — ᶜ) B1 पर्यवारयद्, B4 भ्यस्य· (for प्रत्य°) G1 M1. 2 आयत्तम् (for आयान्तम्) — ᵈ) Ś2 S Cv आर्ष्य(Cv °र्श )शृङ्गिर् (for आर्ष्य°) K1 महायशा, K3 B1-3 5 Dc1 M Cv °बल, D2 °भुज (for °रथ)

17 ᵃ) M2 समफलद् (for °भवद्) — ᵇ) D2 युधि (for मृधे) — ᶜ) S (except M3-5) यादृशं वै (for यादृगेव) — ᵈ) K5 B4 5 Dn1 D4 5 7 8 G2 मृधे, Dc1 G1 M इव (for नृप)

18 ᵃ) Ś2 K3 ततो युधिष्ठिर द्रोणो — ᵇ) Ś K (except K5) D1 M3 4 पर्वभि, D4 पर्वणा (for -पर्वणाम्) — ᶜ) K4 -श्रेष्ठं, K5 B Dn2 D7 8 T G1-3 -श्रेष्ठ (for -श्रेष्ठ) — Ś K1-3 D1 om (hapl) 18ᵈ-19ᶜ K4 om 18ᵈ — ᵈ) D5 वर्मसु (for -मर्मसु) M2 भारत, M3-5 स त्वरन् (for भारत)

19 Ś K1-3 D1 om 19ᵃᵇᶜ (cf v l 18) — ᵈ) S महात्मना (for यशस्विना) Ś2 K1 2 4 कौंतेय शत्रुकर्षण

20 ᵃ) M3-5 हि (for तु) — ᵇ) D5 7 8 समावृणोत् (for °चिनोत्) — For 20ᵃᵇ, T G M1 2 subst

555* अदृश्य समरे चक्रे राजानं सायकोत्तमैः ।

21 ᵃ) T G3 4 स (for तु) — ᶜ) Ś K1 अधारयत, D8 6 अवारयच्च; S न्यवारयत (for अवा°) — ᵈ) D7 पाणिलोबल (sic), S हस्तलाघव (for पाणि°)

22 ᶜ) Ś K1-4 D (except Dc1 D2) समरे; K4 सशर (for सहसा) D2 क्रुद्धो (for धन्वी)

23 ᵃ) Ś1 K3. 4 D1 तयैनं (for म°) — ᵇ) Dc1

सांपराये सुहृत्कृत्ये तस्य कालोऽयमागतः ॥ ४१
सर्वेष्वपि च योधेषु चिन्तयञ्शिनिपुंगव ।
त्वत्तः सुहृत्तमं कंचिन्नाभिजानामि सात्यके ॥ ४२
यो हि प्रीतमना नित्यं यश्च नित्यमनुव्रतः ।
स कार्ये सांपराये तु नियोज्य इति मे मतिः ॥ ४३
यथा च केशवो नित्यं पाण्डवानां परायणम् ।
तथा त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रमः ॥ ४४
सोऽहं भारं समाधास्ये त्वयि तं वोढुमर्हसि ।
अभिप्रायं च मे नित्यं न वृथा कर्तुमर्हसि ॥ ४५
स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे ।
कुरु कृच्छ्रे सहायार्थमर्जुनस्य नरर्षभ ॥ ४६
त्वं हि सत्यव्रतः शूरो मित्राणामभयंकरः ।
लोके विख्यायसे वीर कर्मभिः सत्यवागिति ॥ ४७
यो हि शैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुम् ।
पृथिवीं वा द्विजातिभ्यो यो दद्यात्सममेव तत् ॥ ४८
श्रुताश्च बहवोऽस्माभी राजानो ये दिवं गताः ।
दत्त्वेमां पृथिवीं कृत्स्नां ब्राह्मणेभ्यो यथाविधि ॥ ४९
एवं त्वामपि धर्मात्मन्प्रयाचेऽहं कृताञ्जलिः ।
पृथिवीदानतुल्यं स्याद्धिकं वा फलं विभो ॥ ५०
एक एव सदा कृष्णो मित्राणामभयंकरः । C 7 B 7 K 7

K1 8 जयद्रथवध — *Day of Drona's Generalship* K1-8 चतुर्थदिवसे ]

41 Ś2 missing (of. v 1 33) Before 41, MSS ins युधिष्ठिर उवाच — $^a$) T G1 2 5 M योय (for य स) Dc1 T G2 5 सृष्ट (for दृष्ट) — $^b$) K4 D4 7 सैनेय (for शैनेय) Dn1 सात्वत, D4 शाश्वतं (for °त) — $^c$) K5 आत्ययिके, Cd सापराये (as in text) Ś1 K (except K5) सुहृत्कार्ये, D8.6 महत्कृत्यं, D4 समुत्कृत्ये, M3-5 सुहृत्कृच्छ्रे (for सुहृत्कृत्ये)

42 Ś2 missing (of v 1 33) — $^a$) G1.5 M यौधेषु (for यो) — $^b$) A few MSS शिनिपुंगव — $^c$) S सुहृत्तरं (for त्तमं) K4 5 Dn1 D4 8 7/8 G1 4 5 M1 2 किंचिन् (for कं) — $^d$) D7 नात्र (for नाभि) T G2-4 M3-5 सात्वत (for सात्यके)

43 Ś2 missing (of v 1 33) — $^a$) T G2-4 M3-5 प्रिय (for यो हि) K4 प्रीतिमना, T G2-4 प्रिय (for प्रीत) — D5 om (hapl) $43^b$–$44^a$ K4 repeats $43^{bcd}$ and M8 $43^{bc}$ after $44^a$ — $^b$) G2 स्व (for यश्च) — $^c$) B4 कार्ये स (by transp), G1 M1.2 स कृत्ये B4 च, S (M8 both times) वा (for तु) Cv कार्ये च सापराये वा — $^d$) Cv cites नियोज्य (as in text) M8 4 मत (for मतिः)

44 For the repetition in K4 M8, of v 1 43 Ś2 missing (of v 1 33) D5 om $44^a$ (cf. v. 1. 43) — $^a$) S (except G1 M1 2) हि (for च) — K1 om. (hapl) $44^b$–$45^c$ — $^b$) D5 G5 परायण, Cd णम् (as in text) — $^c$) B3 असि (for अपि) — After 44, D7 repeats 7 84 30

45 Ś2 missing (of v 1 33) K1 om $45^{abc}$ (cf v 1 44) — $^a$) K2-4 D1 T G2-5 त्वयि (for सोऽहं) — $^b$) K3 4 D1 सोह (for त्वयि) Ś1 त्व (for त) Ś1 Dn1 D4 5 सोढुम् (for वोढुम्) T G2-5 तत्त्व वोढु मिहार्हसि — B3 reads $45^{cd}$ on marg

46 Ś2 missing (of v 1 33) — $^c$) Ś1 कृच्छ्र (for कृच्छ्रे) K1 सहायार्थे (for °र्थम्) — $^d$) S महामृधे (for नरर्षभ)

47 Ś2 missing (of v 1 33) — $^c$) T G2-4 लोके विख्यायते शूर — $^d$) G1 M3-5 विक्रम (M8 °म), M1 2 -वागिव (for -वागिति)

48 Ś2 missing (of v 1 33) — $^a$) B2 योयं (for यो हि) K4 D4 5 7 सैनेय (for शैनेय) G1 M1 2 मित्रार्थ (for र्थे) — $^b$) S transp त्यजेत् and तनुं — $^c$) K2 4 B1 Dn D1 2 T G2-5 च (for वा) — $^d$) K2 B Dc1 स समो (Dc1 तत्समो) भवेत् (for सममेव तत्)

49 Ś2 missing (of v 1 33) — $^a$) D7 8 वीर (for ऽस्मामी) — $^c$) Ś1 सर्वां (for कृत्स्नां) — After 49, S ins

578* दीयमाना हि बहुभिर्दास्यते च मुहुर्मही ।
ननु कश्चिद्रणे प्राणान्मित्रार्थे त्यक्तवानिह ।

[(L 1) G1 M च (for हि) G1 पुनर् (for मुहुर्). — (L 2) G3-5 M न तु (for ननु) ]

50 Ś2 missing (of. v. 1. 33) — $^b$) D2 प्रयाहि

58

रणे संत्यजति प्राणान्द्वितीयस्त्वं च सात्यके ॥ ५१
विक्रान्तस्य च वीरस्य युद्धे प्रार्थयतो यशः ।
शूर एव सहायः स्यान्नेतरः प्राकृतो जनः ॥ ५२
ईदृशे तु परामर्दे वर्तमानस्य माधव ।
त्वदन्यो हि रणे गोप्ता विजयस्य न विद्यते ॥ ५३
श्लाघन्नेव हि कर्माणि शतशस्तव पाण्डवः ।
मम संजनयन्हर्षं पुनः पुनरकीर्तयत् ॥ ५४
लघ्वस्त्रश्चित्रयोधी च तथा लघुपराक्रमः ।
प्राज्ञः सर्वास्त्रविच्छूरो मुह्यते न च संयुगे ॥ ५५
महास्कन्धो महोरस्को महाबाहुर्महाधनुः ।
महाबलो महावीर्यः स महात्मा महारथः ॥ ५६
शिष्यो मम सखा चैव प्रियोऽस्याहं प्रियश्च मे ।
युयुधानः सहायो मे प्रमथिष्यति कौरवान् ॥ ५७
अस्मदर्थे च राजेन्द्र संनह्येद्यदि केशवः ।
रामो वाप्यनिरुद्धो वा प्रद्युम्नो वा महारथः ॥ ५८
गदो वा सारणो वापि साम्बो वा सह वृष्णिभिः ।
सहायार्थं महाराज संग्रामोत्तममूर्धनि ॥ ५९
तथाप्यहं नरव्याघ्रं शैनेयं सत्यविक्रमम् ।
साहाय्ये विनियोक्ष्यामि नास्ति मेऽन्यो हि तत्समः ६०
इति द्वैतवने तात मामुवाच धनंजयः ।

---

पांडवं प्रति — $^c$) Dn1 वा (for स्याद्) S (except M3–5) पृथिवीदानतस्तुल्यम् — $^d$) D7 च (for वा) Dn1 फलं स्यादधिकं विभो

51 Ś2 missing (cf v 1 33) D4 om 51$^c$–53$^b$ — $^c$) K1 स त्यजति; S त्यजति च (for संत्यजति) — $^d$) M3–5 सत्यक (for सात्यके)

52 Ś2 missing (cf. v 1 33). D4 om. 52 (cf v l. 51) — $^a$) D8 सविक्रांतस्य युद्धेषु, S शूरस्य युध्यमानस्य — $^b$) K4 युद्धं, B Do1 D3 4 T G M1 2 युद्धात् (for युद्धे) D8 प्रार्थयंतो महद्यश — $^c$) D3 S सहायार्थे (for °य स्यान्) — $^d$) B2 D5 नर° (for जन)

53 Ś2 missing (cf. v l. 33) D4 om 53$^{ab}$ (cf v 1 51) — $^a$) T G2–5 हि (for तु) K1 परानदे, D3 °मर्शे, D6 °मर्षे, Cd °मर्दे (as in text) — $^b$) D3 D7 8 T G3 4 वर्तमाने च (D7 8 तु) (for °मानस्य) D2 सात्यके; D5 मारिष (for माधव) — $^c$) D3 [ऽ]भिजनो (for हि रणे)

54 Ś2 missing (cf. v 1 33) — $^a$) K5 D7 8 श्लाघते स, D6 श्लाघयते (for श्लाघन्नेव) D6 M1. 2 च (for हि). D3 8 T G M3–5 श्लाघयन्नेव (D2 श्लाघ्यते तव) कर्माणि. — $^b$) B2 Do1 D2 सततं तव (D2 स हि) तव) कर्माणि, — $^c$) K5 सर्वं; T G4 पांडव°; S विजयस्तव माधव — $^d$) Dn2 अगायत (for अकीर्तयत्) हर्षान् (for हर्षं)

55 Ś2 missing (cf. v 1 33) — $^a$) Dn D2 3 5 6 लघुहस्तश्चित्रयोधी — $^c$) G5 सर्वार्थवित् (for °स्त्रवित्) D2 प्रथितो ह्यस्त्रविच्छूरो — $^d$) Ś1 नैव, D5 स न (for न च). B Do1 S न च मुह्यति संयुगे (G1 M1. 2 °गरे)

56 Ś2 missing (cf. v 1 33) — $^a$) S (except G1 M1 2) महोरस्को महास्कधो — $^b$) K2 3 D3. 6 T G महाद्युः, D5 M3–5 °रथ (for °धनु) — $^d$) S (except M3–5) transp स and महात्मा.

57 Ś2 missing (cf. v 1 33) — $^b$) D3–5 च (for ऽसि) — $^c$) T G2–5 सात्यकेन सहायेन, M3–5 युयुधानसहायोऽहं — $^d$) S प्रमथिष्यामि (for °ष्यति) T G2–5 [अ]हं कुरून् (for कौरवान्)

58 Ś2 missing (cf v 1 33) — $^a$) K4 D2 अस्मदर्थे (for °र्थं) — $^c$) G5 [अ]नुरुद्धो (for [अ]नि°) — $^d$) G1 M1. 2 [ऽ]थ (for वा) Ś1 महामना (for °रथ)

59 Ś2 missing (cf. v 1 33) — $^a$) B2 5 शारणो (for सा°) — $^b$) D2 3 6 शाबो (for साम्बो) G1 M1. 2 transp सह and वृष्णिभि — B4 om 59$^{cd}$ — $^c$) B1–3 5 साहाय्यार्थं (for सहायार्थं)

60 Ś2 missing (cf v 1 33) — $^a$) K5 एक, T G2–5 एनं (for अहं) Ś1 K1 3 4 B2 D3 नरव्याघ्र (for °घ्रं) — $^b$) D4. 7 8 सैनेय (for शै°) — $^c$) K1 Dn1 D3–5 G3–5 सहाय्ये (for सा°) — $^d$) M3–5 न हि (for नास्ति) B2 (marg, orig as in text) M3–5 [ऽ]स्ति (for हि)

61 Ś2 missing (cf. v 1 33) — $^a$) D5 राजन् (for तात) — $^c$) K1. 4 5 परोक्ष्यं, K3 B Do1 Dn D1. 3 परोक्षे, D6 परेपस्, T G3 परोक्षास् (for परोक्षं) D3 बहुगुणास्, D4 त्वद्गुणस् (for त्वद्गुणास्) Ś1 K तोप्यन्, D2 तात, G1 M1. 2 तुल्यान् (for तथ्यान्),

परोक्षं त्वद्गुणांस्तथ्यान्कथयन्नार्यसंसदि ॥ ६१
तस्य त्वमेवं संकल्पं न वृथा कर्तुमर्हसि ।
धनंजयस्य वार्ष्णेय मम भीमस्य चोभयोः ॥ ६२
यच्चापि तीर्थानि चरन्नगच्छं द्वारकां प्रति ।
तत्राहमपि ते भक्तिमर्जुनं प्रति दृष्टवान् ॥ ६३
न तत्सौहृदमन्येषु मया शैनेय लक्षितम् ।
यथा त्वमस्मान्भजसे वर्तमानानुपप्लवे ॥ ६४
सोऽभिजात्या च भक्त्या च सख्यस्याचार्यकस्य च ।
सौहृदस्य च वीर्यस्य कुलीनत्वस्य माधव ॥ ६५
सत्यस्य च महाबाहो अनुकम्पार्थमेव च ।
अनुरूपं महेष्वास कर्म त्वं कर्तुमर्हसि ॥ ६६
सुयोधनो हि सहसा गतो द्रोणेन दंशितः ।
पूर्वमेव तु यातास्ते कौरवाणां महारथाः ॥ ६७
सुमहान्निनदश्चैव श्रूयते विजयं प्रति ।
स शैनेय जवेनात्र गन्तुमर्हसि माधव ॥ ६८
भीमसेनो वयं चैव संयत्ताः सहसैनिकाः ।
द्रोणमावारयिष्यामो यदि त्वां प्रति यास्यति ॥ ६९
पश्य शैनेय सैन्यानि द्रवमाणानि संयुगे ।
महान्तं च रणे शब्दं दीर्यमाणां च भारतीम् ॥ ७०
महामारुतवेगेन समुद्रमिव पर्वसु । C 7 4 B 7 1 K 7 1

---

— d) Ś1 K1. 3 4 आत्म (for आर्यं) S कथयामास संसदि

62 Ś2 missing (cf v 1 33) — a) B1. 3 तस्मात् (for तस्य) Ś1 K1 3 4 Do1 D4–8 [ए]नं, B1 [ए]तत् (for [ए]वं) — cd) M3–5 transp वार्ष्णेय and भीमस्य

63 Ś2 missing (cf. v 1. 33) — a) Ś1 सचापि, Ś1 (sup lin) न चापि, K (except K5) D1 यदापि, D4 ये चापि, D7 8 यथापि (for यच्चापि) T G2–5 तीर्थं वि (for तीर्थानि) D2 तदा तीर्थान्यनुचरन् — b) Ś1 K1 4 Do1 T G2 M5 (sup lin) अगच्छन्, D2 G1 M3–5 °च्छद्, D4 आगमं, D6 अगमन् (for अगच्छं) — c) D4 तथा (for तत्र) T G2 ताम् (for [अ]हम्) — d) M3 4 चापि (for प्रति) M5 अर्जुनस्यापि दृष्टवान्

64 Ś2 missing (cf v 1. 33) — a) D4, 5 7 8 ते (for तत्) K5 अन्यत्र (for अन्येषु) S तच्चे सौहार्द मस्मासु — b) D5 G1 M1–4 तथा, T G2–5 M5 यथा (for मया) K4 D4 7 सैनेय (for शै°) — c) K5 T G2–4 M5 तथा (for यथा) G5 भजते (for से) — d) T G1–4 M3–5 उपद्रवे, Cd प्लवे (as in text) G5 सवर्तमनुपद्रवे, M1. 2 वर्तमानोनुपद्रवे

65 Ś2 missing (cf v 1 33) — a) D2 सौहृदेन (for सोऽभिजात्या) S सौहार्दस्य च भक्तस्य (M3–5 °केश्च) — b) Ś1 K1. 3 सख्ये हि, K5 सत्यस्य; B1 सख्युश्च, G5 सुखस्य (for सख्यस्य) Ś1 चित् (for च) D4 सख्येस्यार्यकरस्य च — c) D7 8 हृदयस्य (for सौहृदस्य) B1. 4 वीरस्य (for वीर्यस्य) D2 मैत्रभावस्य वीर्यस्य, S संभावनाया पार्थस्य — d) D6 मारिष (for माधव) D2 कौलीनस्य च माधव

66 Ś2 missing (cf v 1 33) — a) K5 Dn1 शौर्यस्य, D2 श्रुतस्य, S (except G3 4) सत्त्वस्य (for सत्यस्य) — b) D2 अनुक्रोशस्य चाविभो — d) Dn2 कर्तुमिह, D2 S कर्तुं त्वम् (by transp) Ś1 कर्तुं कर्म त्वमर्हसि

67 Ś2 missing (cf v 1. 33) — a) M3 4 [ऽ]पि (for हि) D2 दुर्योधनो ह्यागतो वै — b) Dn1 D6 7 8 यत्तो; D2 अद्य, D4 G1 3–5 M यातो (for गतो) K3. 4 S दसित, D7 8 दर्शित, Cd दंशित (as in text). — c) K3 4 B4 Dn D1. 2 6 7 [अ]नु, S (except G1 M1 2) च (for तु)

68 Ś2 missing (cf. v 1 33) — b) S (except M3–5) हि रण (G5 णे), Cd विजय (as in text) — c) D4 सैन्येव, D7 8 सैनेय (for शैनेय) K3 5 B Do1 Dn D1. 2 4 5 7 8 [आ]शु (for [अ]त्र) — d) Ś1 K D (except Do1) मानद (for माधव)

69 Ś2 missing (cf v 1 33) — a) M3–5 चात्र (for चैव) — b) K4 संपन्ना, S समस्ता (for संयत्ता) K4 -सैन्यका, D2 -सैनिकै (for -सैनिका) — d) G1 M1 2 त्वं, M3–5 त्वा (for त्वां) B1–3 5 D5 M3–5 योत्स्यति, B4 D2 T G2–5 योत्स्यते; Do1 रोत्स्यति, G1 M1 2 यास्यसे (for ति)

70 Ś2 missing (cf. v 1 33) — a) K1 4 D4–7 G5 सैनेय (for शै) — c) S (except G1 M1 2) महाश्च तुमुल शब्दो — d) B4 वाहिनीं (for भारतीम्) T G2–5 दीर्यमाणा च भारती; M3–5 °णेव मेदिनी

71 Ś2 missing (cf. v 1 33) — a) T G2–5 महावातसमुद्भूत — b) S (except G1 M1. 2) समुद्र

धार्तराष्ट्रबलं तात विक्षिप्तं सव्यसाचिना ॥ ७१
रथैर्विपरिधावद्भिर्मनुष्यैश्च हयैश्च ह ।
सैन्यं रजःसमुद्भूतमेतत्संपरिवर्तते ॥ ७२
संवृतः सिन्धुसौवीरैर्नखरप्रासयोधिभिः ।
अत्यन्तापचितैः शूरैः फल्गुनः परवीरहा ॥ ७३
नैतद्बलमसंवार्य शक्यो हन्तुं जयद्रथः ।
एते हि सैन्धवस्यार्थे सर्वे संत्यक्तजीविताः ॥ ७४
शरशक्तिध्वजवनं हयनागसमाकुलम् ।
पश्यैतद्धार्तराष्ट्राणामनीकं सुदुरासदम् ॥ ७५
शृणु दुन्दुभिनिर्घोषं शङ्खशब्दांश्च पुष्कलान् ।
सिंहनादरवांश्चैव रथनेमिस्वनांस्तथा ॥ ७६
नागानां शृणु शब्दं च पत्तीनां च सहस्रशः ।
सादिनां द्रवतां चैव शृणु कम्पयतां महीम् ॥ ७७
पुरस्तात्सैन्धवानीकं द्रोणानीकस्य पृष्ठतः ।
बहुत्वाद्धि नरव्याघ्र देवेन्द्रमपि पीडयेत् ॥ ७८
अपर्यन्ते बले मग्नो जह्यादपि च जीवितम् ।
तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः ।
सर्वथाहमनुप्राप्तः सुकृच्छ्रं बत जीवितम् ॥ ७९
श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः ।
लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्तात भारतीम् ॥ ८०
सूर्योदये महाबाहुर्दिवसश्चातिवर्तते ।
तन्न जानामि वार्ष्णेय यदि जीवति वा न वा ।

---

(for °द्रम्) — c) B1–3 धृतराष्ट्र-, D1.4.3 धार्तराष्ट्र (for °राष्ट्र-) D1 तद्बद्, M3–5 तत्र (for तात) — d) T विक्षत, G2.4 वीक्षित, G3.5 वीक्षत (for विक्षिप्तं)

72 Ś2 missing (cf. v l 33) — a) D3 T G2–4 च (for वि-) — b) K5 Dn1 तथा, B (except B5) D4 सह (for च ह) S मनुष्यगजवाजिभि — c) K2–5 B1.3.5 Dc1 Dn D1.5.7 S (except G1.5) समुद्भूतम् — d) Ś1 एतद्विपरिवर्तते, B4 D6 एतत्सर्वं परिवर्तते (hypermetric), S °त्संप्रति दृश्यते

73 Ś2 missing (cf. v l 33) — a) K1 वीरेण (for सौवीरैर्) — b) G5 नखरप्रायसादिभि — c) Ś1 वीरै (for शूरै) K2 B Dc1 Dn D1.3.5.6 अत्यंतोपचितै शूरै, D2 समततोन्वित शूरै, D7.8 S अत्यतापचित (G1 M °चजित, G5 °पजितै) शूरै — d) N (except Ś1 K1–3; Ś2 missing) फाल्गुन (for फ°)

74 Ś2 missing (cf v l 33) — a) Ś1 K1 B1.2.4 Dn D2.4.6 असवार्यं, T G2–5 °हार्यं (for °वार्यं) — b) M1.2 शक्य (for शक्यो) K1 हत्तुं, K2 B1.5 Dn D3.6 S जेतुं (for हन्तु) — d) D5 सर्वे त्यक्ष्यंति जीवित

75 Ś2 missing (cf v l 33) — a) K2.5 B D (except Dn1) ध्वजवर (D. °रथ) (for °वन) — b) K5 Dn1 नर (for हय) K5 Dn1 D4.7.8 M3–5 -रथाकुलं (for -समाकुलम्) — d) T G2–5 च (for सु)

76 Ś2 missing (cf v l 33) — b) B4.6 पुस्करान् (for पुष्कलान्) — c) D4 G3 शख (for सिंह) — d) B (except B2) Dc1 स्वनं (for -स्वनास्)

77 Ś2 missing (cf v l 33) D6 reads 77abc on marg — a) D1 T G1–3 M1.2 शब्दाश् (for शब्द) — b) Ś1 समंतत (for सहस्रश) — c) M4 सादीना (for सादिनां) S (except G1 M1.2) शब्द (for चैव)

78 Ś2 missing (cf v l 33) — a) T G3 पुरस्तत्, G5 पुनस्तत् (for पुरस्तात्) — b) K (except K5) Dn D1.3.6 द्रोणानीक च (for °नीकस्य) — c) D3 गच्छ त्वं, S बहुत्व (for बहुत्वाद्) — d) D2 दूषये, S दूषयेत् (for पीड)

79 Ś2 missing (cf v l 33) — a) B3 Dc1 D3.5.6 M3.4 अपर्यंत (for °र्यन्ते) B4.5 रणे (for बले) — b) S प्रजह्यादपि जीवितं — Ś1 K1–4 D1 om (hapl) 79cdef — d) D3 जीवति (for जीवेत) — e) S समनु- (for [अ]हमनु-) — f) Dn1 D2.7 सुकृत्स्नं, T M3–5 Cv सकृच्छ्रं (for सुकृच्छ्र) Dn2 त्वयि, D2 तस्य, D3.6 तत्र, D5 तव, Cv बत (as in text) Dn2 जीवति, Cv जीवितम् (as in text)

80 Ś2 missing (cf v l 33) — a) T G2–5 अभ्रश्यामो (for श्यामो युवा) D8 महाकेशो (for गुडा°) — c) K1 D4.6 लब्धास्त्रश् (for लघ्वस्त्रश्) — d) Ś1 चैव, K5 चापि, S तत्र (for तात) K5 D5.7.8 वाहिनीं (for भारतीम्)

81 Ś2 missing (cf v l 33) M3–5 om (hapl) 81a–82b, B1 reads the same on marg — c) D6 om.

कुरूणां चापि तत्सैन्यं सागरप्रतिमं महत् ॥ ८१
एक एव च बीभत्सुः प्रविष्टस्तात भारतीम् ।
अविषह्यां महाबाहुः सुरैरपि महामृधे ॥ ८२
न च मे वर्तते बुद्धिरद्य युद्धे कथंचन ।
द्रोणोऽपि रभसो युद्धे मम पीडयते बलम् ।
प्रत्यक्षं ते महाबाहो यथासौ चरति द्विजः ॥ ८३
युगपच्च समेतानां कार्याणां त्वं विचक्षणः ।
महार्थं लघुसंयुक्तं कर्तुमर्हसि माधव ॥ ८४
तस्य मे सर्वकार्येषु कार्यमेतन्मतं सदा ।
अर्जुनस्य परित्राणं कर्तव्यमिति संयुगे ॥ ८५
नाहं शोचामि दाशार्हं गोप्तारं जगतः प्रभुम् ।
स हि शक्तो रणे तात त्रील्लोकानपि संगतान् ॥ ८६
विजेतुं पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ।
किं पुनर्धार्तराष्ट्रस्य बलमेतत्सुदुर्बलम् ॥ ८७
अर्जुनस्त्वेव वार्ष्णेय पीडितो बहुभिर्युधि ।
प्रजह्यात्समरे प्राणांस्तस्माद्विन्दामि कश्मलम् ॥ ८८
तस्य त्वं पदवीं गच्छ गच्छेयुस्त्वादृशा यथा ।
तादृशस्येदृशे काले मादृशेनाभिचोदितः ॥ ८९　C 7 4221 B 7 110 K 7 110

from तस्य up to प्रतिम (in 81$^{f}$) K2 तच्च, D5 तेन (for तस्य) M1 2 जानाति (for मि) —$^{e}$) D4 7 8 वापि तत्, S (M3–5 om) सुमहत् (for चापि तत्) —$^{f}$) D2 भुवि, S (M3–5 om) शुभं (for महत्)

82 Ś2 missing (cf. v l 33) M3–5 om 82$^{ab}$ (cf v l. 81) B1 reads 82$^{ab}$ on marg —$^{a}$) K5 तु, Dn1 हि (for च) —$^{b}$) D3 6 T G2–5 तत्र (for तात) D5 वाहिनीं (for भारतीम्) —$^{c}$) D2 G1 M महाभागै, T G2–5 °वेगै (for बाहु) —$^{d}$) D2 शूरैर् (for सुरैर्) D4 एव (for अपि) K2 5 B5 Dn1 D3 6 महाहवे; T G3 °चमू (for मृधे)

83 Ś2 missing (cf v 1 33) —$^{a}$) K2 D1–3 6 हि (for च) D7 8 शुद्धिर् (for बुद्धिर्) —$^{b}$) S युद्धेत्यत्र ध (G1 युद्धादन्यत्र-, M1–4 यथा नान्यो ध, M5 अन्यत्राद्य ध) नंजयात् —$^{c}$) S हि (for ऽपि) K5 रभया (sic), D3 6 तरसा, T G2–5 सहसा, G1 M2 रभसे, Cd रभसो (as in text) G1 M1 2 नित्य (for युद्धे) —$^{d}$) K1 D4 सम (for मम) D5 कर्तयते (for पीड) —$^{e}$) G4 महामायो (for °बाहो) —$^{f}$) S (except M1 2) स (for [अ]सौ) Ś1 B Dc1 Dn2 D5 चरते, M2 भरते (for चरति) —After 83, D7 8 read 86$^{ab}$

84 Ś2 missing (cf v 1 33) —$^{a}$) B Dc1 D2 समवेतानां, T G2–4 समुपे (G4 °पै) तानां (for च समे) —$^{b}$) T G2–4 M3–5 च, G1 M1 2 हि (for त्व) T G2–5 विचारणा, G1 विचक्षणा, M1. 2 विचारणा (for विचक्षण) —$^{c}$) D2 समार्थं, D3 रहार्थं (sic), M3–5 महार्थं (for महार्थं) D5 तेष्वुसयुक्तं (sic), D7 लघु संयुक्त (for सयुक्त) —$^{d}$) B2 मानद, G1 M1 2 साधव (for माधव) T G2–5 M3–5 ईहसे कश्चिद् (M3–5 कर्तुम) च्युत; M1 2 कर्तुमर्हति साधव

85 Ś2 missing (cf v 1 33) —$^{a}$) D2 पश्य (for तस्य) D2 सर्वकार्येभ्य, D4 कार्यसर्वेषु (for सर्वकार्येषु) —$^{b}$) Ś1 कर्तुम् (for कार्यम्) D7 महा (sic) (for मत) Ś1 K1. 3 4 D1. 2 मम, K3 महत्, B2 तदा (for सदा) —$^{d}$) D3 6 इह (for इति)

86 Ś2 missing (of v 1 33) D7 8 read 86$^{ab}$ after 83 —$^{b}$) Ś1 K1 2 B3 (marg as in text) Dn2 D3 4 6 पार्थं (for प्रभुम्) —$^{c}$) B4 transp हि and शक्तो B1 2 4 5 Dc1 रणे त्रातु (B1 यात), T G2–5 M3–5 महाबाहुस् (for रणे तात) —$^{d}$) D3 6 त्रिलोकान् (for त्रील्लोकान्) D2 G1 M1 2 त्रील्लोकान्वै (D2 °कांश्च) समागतान्, T G2–4 त्रींश्च लोकान्समा°, G5 M3–5 त्रीन्वै (G5 त्रींस्तु) लोकान्समा°

87 Ś2 missing (of. v 1 33) —$^{a}$) K4 व्यजेतु (for वि°) K2 3 B Dc1 Dn D1 2 5 7 8 M3–5 -व्याघ्र (for -व्याघ्र) —$^{d}$) Ś1 B1 D° 7 G5 सुदुर्लभ, Dn2 सुदु सर्ह (for सुदुर्बलम्)

88 Ś2 missing (of v 1 33) —$^{a}$) K3 B4 Dn2 D1–3 6 एष, Dn1 चापि (for एव) —$^{b}$) G5 om बहुभिर्युधि D6 यथा (for युधि) Dn1 बहुभिर्युधि पीडित —$^{c}$) D3 6 चाहवे (for समरे) —$^{d}$) Ś1 M3–5 तेन, D6 तदा (for तस्माद्) K1 कल्मष, Cd कश्मलम् (as in text)

89 Ś2 missing (cf v 1 33) —$^{b}$) G1. 4 तादृशा, M1. 2 तादृशो (for त्वादृशा) T G2–5 रथा (for यथा) Ś1 K (except K5) रुद्रस्य सदृशो (K1 शो) यथा —$^{c}$) M3 4 मादृशस्य (for ताद°) Ś1 कार्ये (for काले) D7 8 त्वा (D8 ता) दृशश्चेदृशे काले —$^{d}$) K1 [अ]भिचोदिता, Dn1-D1. 6–8 [अ]भिनोदित, D4 प्रचोदित (for [अ]भि)

रणे वृष्णिप्रवीराणां द्वावेवातिरथौ स्मृतौ ।
प्रद्युम्नश्च महाबाहुस्त्वं च सात्वत विश्रुतः ॥ ९०
अस्त्रे नारायणसमः संकर्षणसमो बले ।
वीरतायां नरव्याघ्र धनंजयसमो ह्यसि ॥ ९१
भीष्मद्रोणावतिक्रम्य सर्वयुद्धविशारदम् ।
त्वामद्य पुरुषव्याघ्रं लोके सन्तः प्रचक्षते ॥ ९२
नासाध्यं विद्यते लोके सात्यकेरिति माधव ।
तत्त्वां यदभिवक्ष्यामि तत्कुरुष्व महाबल ॥ ९३
संभावना हि लोकस्य तव पार्थस्य चोभयोः ।
नान्यथा तां महाबाहो संप्रकर्तुमिहार्हसि ॥ ९४
परित्यज्य प्रियान्प्राणान्रणे विचर वीरवत् ।
न हि शैनेय दाशार्हा रणे रक्षन्ति जीवितम् ॥ ९५
अयुद्धमनवस्थानं संग्रामे च पलायनम् ।
भीरूणामसतां मार्गो नैष दाशार्हसेवितः ॥ ९६

---

$B_{1-3}$ $D_2$ S माद्दशैरभिचो( $G_1$ $M_{1.2}$ °शैरपि चो )दित ( T $G_{2-5}$ $M_5$ °ता ) — After 89, $M_{3-5}$ ins

579* त्वादृशास्तादृश गच्छेस्तादृशं गच्छ सत्यक ।

[ $M_4$ त्वादृशस् $M_3$ कश्मल ( for सत्यक ) ]

— $M_{3-5}$ cont T G $M_{1.2}$ ins after 89

580* सुहृदो वै सुहृत्कृत्ये परमास्थाय विक्रमम् ।
सुहृद पदमन्विच्छन्न व्यथेत कथंचन ।

[ ( L 1 ) $G_5$ परमार्थाय ( for °मास्थाय ) — ( L 2 ) $G_4$ व्यथते स ( for न व्यथेत ) ]

90 $Ś_2$ missing (cf. v l 33) — $^{a}$) S ननु सत्यक वृष्णीना — $^{d}$) T $G_{2-4}$ $M_{3-5}$ सत्यक, $G_5$ सात्यक ( for सात्वत )

91 $Ś_2$ missing (cf v l 33) — $^{a}$) $Ś_1$ K ( except $K_5$ ) अस्त्रे रुद्रस्य च समो — $^{b}$) $Ś_1$ K ( except $K_5$ ) नारायण- ( for संकर्षण ) $G_2$ अस्त्रे संकर्षणोपम° — $^{c}$) $B_4$ भारताना, $D_2$ धीरत्वे च ( for वीरतायां )

92 $Ś_2$ missing (cf v l 33) — $^{a}$) T $G_{2-5}$ अति-क्रान्तं ( for °क्रम्य ) — $^{b}$) $G_1$ M विशारदौ ( for °र-दम् ) — $^{c}$) $B_5$ त्वम् ( for त्वाम् ) $D_{c1}$ $D_{n2}$ $D_{3.5.6}$ एव ( for अद्य ) $B_{1-3}$ $D_{c1}$ $D_{n1}$ $D_{5.7}$ पुरुषव्याघ्र, S °षा सर्वे ( $G_1$ M संतो ) ( for °षव्याघ्रं ) — $^{d}$) $D_1$ om (hapl ) from सन्त up to लोके ( in 93$^{a}$ ) T $G_{2-5}$ नित्य, $G_1$ $M_{1.2}$ तात ( for सन्त ) $K_{4.5}$ प्रच( $K_4$ °व)क्ष्यते ( for °क्षते ) — After 92, S ins

581* सदेवासुरगन्धर्वान्सकिंनरमहोरगान् ।
योधयेत्स जगत्सर्वं विजयेत रिपून्बहून् ।
इति ब्रुवन्ति लोकेषु जनास्तव गुणास्तथा ।
समागमेषु जल्पन्ति पृथगेव च सर्वदा ।

[ ( L 1 ) $M_{3-5}$ -गधर्व. $M_{3-5}$ -महोरग — ( L 2 ) $G_2$ योजयेत् ( for योध° ) $G_{1.2.5}$ M विजित्य च ( for विजयेत ) — ( L 3 ) T $G_2$ जनांस् ( for जनास् ) $G_1$ M ( $M_5$ *inf lin* as above ) तदा, $G_{3.4}$ तव ( for तथा ) — ( L 4 ) $G_1$ M चैव ( for एव ) ]

93 $Ś_2$ missing (cf v l 33) $D_1$ om. 93$^{a}$ (cf. v l. 92) — $^{a}$) $B_4$ Dn $D_{3.6}$ नाशक्य ( for नासाध्यं ) $D_2$ विद्यते न समो लोके — $^{b}$) $B_3$ ( marg as in text ) मे मतिः ( for माधव ) S सत्यकस्येति माधव — $^{c}$) $K_1$ तस्त्वा, $G_1$ $M_{1.2}$ तं त्वा, $M_{3-5}$ त त्वा ( for तत्त्वां ) $D_2$ अत्र, S इह ( for अभि- ) $B_4$ यदत्र त्वा तु वक्ष्यामि — $^{d}$) $D_{4.7}$ महाबल, S नरर्षभ ( for महाबल )

94 $Ś_2$ missing (cf. v l 33) — $^{a}$) $G_1$ M संभावनां $D_4$ तु ( for हि ) T $G_{1-4}$ M पार्थस्य ( for लोकस्य ) $G_5$ सभवानभि पार्थस्य — $^{b}$) $K_{4.5}$ B $D_{c1}$ $D_{n2}$ $D_3$ S मम ( for तव ) S भीमस्य ( for पार्थस्य ) — $^{c}$) $D_{2.3.6}$ त्व, T $G_{1-4}$ M तं, $G_5$ हि ( for तां ) $B_2$ ( marg , orig as in text ) मान्यता च ( for नान्यथा तां ) — $^{d}$) T $G_{2-5}$ संप्रवक्तुम् ( for °कर्तुम् )

95 $Ś_2$ missing (cf v l 33) $G_5$ om 95–96 — $^{a}$) T $G_{3.4}$ परित्यजन् ( for °त्यज्य ) $D_{n1}$ रणे ( for प्रियान् ) $Ś_1$ पुत्रान् ( for प्राणान् ) — $^{b}$) $K_5$ $B_{1.3-5}$ $D_{2.4.7}$ रणे चर अ( $B_{1.3.4}$ वि, $B_5$ ह्य )भीतवत्; $B_2$ $D_{c1}$ रणे चरस्यभीतवत्, $D_{n1}$ प्रियाश्चर नभीतवत् — $^{c}$) $K_4$ $D_{4.6}$ सैनेय ( for शै° ) — $^{d}$) $K_{1.3-5}$ $B_2$ $D_{c1}$ $D_{2.3.5-8}$ युद्धे ( for रणे )

96 $Ś_2$ missing (cf v l 33). $G_5$ om 96 (cf v l 95) — $^{a}$) $Ś_1$ अयुद्धमेव संस्थानं, $G_4$ °मानसस्थानं ( sic ), Cd as in text — $^{b}$) $Ś_1$ युद्धे चैव ( for संग्रामे च ) $D_6$ [अ]पलायनं ( for पला° ) — $^{c}$) B ( except $B_1$ ) $D_{c1}$ समतो ( for असतां ) T $G_{1-4}$ $M_{1.2}$ एष भीरुगतो मार्गो — $^{d}$) S (except $M_{3-5}$, $G_5$ om ) नैव ( for नैष )

97 $Ś_2$ missing (cf. v l. 33) — $^{a}$) $D_1$ तथा ( for

तवार्जुनो गुरुस्तात धर्मात्मा शिनिपुंगव ।
वासुदेवो गुरुश्चापि तव पार्थस्य धीमतः ॥ ९७
कारणद्वयमेतद्धि जानानस्त्वाहमब्रुवम् ।
मावमंस्था वचो मह्यं गुरुस्तव गुरोर्ह्यहम् ॥ ९८
वासुदेवमतं चैतन्मम चैवार्जुनस्य च ।
सत्यमेतन्मयोक्तं ते याहि यत्र धनंजयः ॥ ९९
एतद्वचनमाज्ञाय मम सत्यपराक्रम ।
प्रविशैतद्बलं तात धार्तराष्ट्रस्य दुर्मतेः ॥ १००
प्रविश्य च यथान्यायं संगम्य च महारथैः ।
यथार्हमात्मनः कर्म रणे सात्वत दर्शय ॥ १०१

इति श्रीमहाभारते द्रोणपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## ८६

संजय उवाच ।
प्रीतियुक्तं च हृद्यं च मधुराक्षरमेव च ।
कालयुक्तं च चित्रं च स्वतया चाभिभाषितम् ॥ १ C 7 4 B 7 1 K 7 1
धर्मराजस्य तद्वाक्यं निशम्य शिनिपुंगवः ।

---

तव ) T G2-5 अर्जुनस्ते गुरुर्वृत्तो —[b] ) Ś1 K4 Do1 D4 5 G5 M1 2 -पुंगव- (for -पुंगव) —[c] ) S (except M3-5) चैव (for चापि) —[d] ) Ś1 K1, 4 B1-3 Do1 G1 M1, 2 तथा (for तव) K5 Dn1 D1, 5 7 8 धीमयो-, D6 धर्मत- (for धीमत-) T G2-5 M3-5 अर्जुनस्य (T G3 4 °श्च) सर्वेव च

98 Ś2 missing (cf v 1. 33) —[b] ) B Dn2 D1-3 6 S जानस्त्वामहमब्रुवं (G1 M °ब्रवं) —[c] ) S (except M3-5) मेद्य (for मह्यं) —[d] ) K3 4 S transp गुरुस् and गुरोर् Ś1 K1 गुरोस् K5 B4 D8 अहं (for ह्यहम्)

99 Ś2 missing (cf v 1 33) —[a] ) K3 B2 4 Dn D1, 2 6 G2 चैव, D5 चापि, M3-5 ह्येतन् (for चैतन्) —[b] ) B2, 5 Do1 मतं (for मम) —[c] ) D2 वाक्यमेवं; D7 तस्समेतं (for सत्यमेतन्) K4 D6 मया प्रोक्तं (for मयोक्तं ते) T G2-5 व्यक्तं ब्रवीमि वार्ष्णेय

100 Ś2 missing (cf v 1 33) —[a] ) D2 3 6-8 S (except M1 2) आस्थाय (for आज्ञाय) —[b] ) D3 6 [अ]सह्य (for सत्य) K1 D1 2 -पराक्रम, D4 M1 2 °क्रमः (for °क्रम) —[c] ) K1, 3 B2 D3 6 T G2 प्रविश्य (for श) —[d] ) K1 3 दुर्बुद्धे (for दुर्मते)

101 Ś2 missing (cf. v 1. 33) —[a] ) Ś1 K3 D2 यथा न्यायं —[d] ) S सत्यक (for सात्वत) M1 2 दर्शय (for य)

Colophon Ś2 missing —*Sub-parvan* Ś1 K B Do1 Dn D1-3, 6 G1 M1 2 जयद्रथवध —*Day of Droṇa's Generalship* K1 3 चतुर्थदिवसे, G5 चतुर्थेऽह्नि —*Adhy name* K5 B2 Dn1 D4 5 7 8 सात्यकिप्रवेशे (B2 °किं प्रति) युधिष्ठिरवाक्यं, B1 3-5 Do1 Dn2 सात्यकिप्रवेशे, G1 युधिष्ठिरनियोग, M1 2 सात्यकिप्रवेशे युधिष्ठिर नियोग —*Adhy no* (figures, words or both) B1 T G1-4 M1, 2 107, B2 97, B5 D2 113, Dn1 109, D3 6, G5 105, M3-5 106 —*Śloka no* Dn1 104, G5 67

### 86

☞ This adhy is missing in Ś2 (cf v 1 7 85 33)

1 The portion of the text from 1 up to the end of adhy 87 is lost in B1 on missing folios D2 सात्यकिर् (for संजय) —[a] ) D2 प्राप्तकाल (for प्रीतियुक्त) D6 om (hapl ) from हृद्य च up to युक्त च (in 1°) G1 प्रीतिहृद्य च युक्त च —[b] ) D2 प्रेम्णा चैवाभिभाषितं, T G2-5 माननीयं च सर्वदा (G2 °त) —D2 om 1°-2[d] —[c] ) K5 G1 M1 2 विचित्रं, M3-5 च मृष्ट (for च चित्रं) —[d] ) K5 D7 8 सुनयाद्य (K5 या च), B3 युक्तं यच्च; Do1 स्वनया च, Dn1 श्रुत्वा चैव; Dn2 D3 6 न्याय्यं (D3 °यं) यच्च, D5 सुनयेन, S स्वधिया च (G5 याभि ) (for स्वतया च) Cd cites स्वतया (as in text) K5 B5 Do1 Dn2 D1, 3 6 [अ]पि, D4 [अ]ति; G2 प्र (for [अ]भि) K6 भाखित, Do1 भावितं, Bom ed भाषितुं (for भाषितम्)

2 D2 om 2 (cf v 1. 1) —[b] ) M1 2 निगृह्य, M3 निशाम्य (for निशम्य) A few MSS शानिपुगव

सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरम् ॥ २
श्रुतं ते गदतो वाक्यं सर्वमेतन्मयाच्युत ।
न्याययुक्तं च चित्रं च फल्गुनार्थे यशस्करम् ॥ ३
एवंविधे तथा काले मादृशं प्रेक्ष्य संमतम् ।
वक्तुमर्हसि राजेन्द्र यथा पार्थं तथैव माम् ॥ ४
न मे धनंजयस्यार्थे प्राणा रक्ष्याः कथंचन ।
त्वत्प्रयुक्तः पुनरहं किं न कुर्यां महाहवे ॥ ५
लोकत्रयं योधयेयं सदेवासुरमानुषम् ।
त्वत्प्रयुक्तो नरेन्द्रेह किमुतैतत्सुदुर्बलम् ॥ ६
सुयोधनबलं त्वद्य योधयिष्ये समन्ततः ।
विजेष्ये च रणे राजन्सत्यमेतद्ब्रवीमि ते ॥ ७
कुशल्यहं कुशलिनं समासाद्य धनंजयम् ।
हते जयद्रथे राजन्पुनरेष्यामि तेऽन्तिकम् ॥ ८
अवश्यं तु मया सर्वं विज्ञाप्यस्त्वं नराधिप ।
वासुदेवस्य यद्वाक्यं फल्गुनस्य च धीमतः ॥ ९
दृढं त्वभिपरीतोऽहमर्जुनेन पुनः पुनः ।
मध्ये सर्वस्य सैन्यस्य वासुदेवस्य शृण्वतः ॥ १०
अद्य माधव राजानमप्रमत्तोऽनुपालय ।
आर्यां युद्धे मतिं कृत्वा यावद्धन्मि जयद्रथम् ॥ ११
त्वयि वाहं महाबाहो प्रद्युम्ने वा महारथे ।
नृपं निक्षिप्य गच्छेयं निरपेक्षो जयद्रथम् ॥ १२
जानीषे हि रणे द्रोणं रभसं श्रेष्ठसंमतम् ।

---

— c) K4 5 B1 8 Dc1 Dn1 D4 5 7 8 G5 M3–5 भरतश्रेष्ठं (for °श्रेष्ठ)

3 Before 3, G1 M ins सात्यकि — a) Dn1 गदित, D4 5 7 8 वदतो (for गदतो) — b) G1 M1 2 एव (for एतन्) Ś1 [अ]नघ (for [अ]च्युत) — c) Dn1 वि (for च) T G2–5 सत्वं (for चित्रं) — d) N (except Ś1 K1, 2, Ś2 B4 missing) फाल्गुनार्थे (for फल्गु°)

4 a) D2 ईदृशे तु (for एवंविधे) T G3 4 तत (for तथा) — b) D5 6 सदृशे (for मादृशं) S (except G1 M1 2) सत्तम (for संमतम्) — d) D4 पार्थस Ś1 K1–4 Dn1 D1 च (for माम्)

5 b) A few MSS रक्षा — D1, 4 om (hapl.) 5c–6b — d) B3 (marg) महारणे, D2 S विशां पते (for महाहवे)

6 D1 4 om 6ab (cf v l. 5) — a) D3 लोकत्रये. K4 शोधयेय, D2 वधिष्यामि, D5 योधयेह (for °येयं) S त्रींल्लोकान्वार(G1 M1 2 °कान्वा ज)येय च — b) T G3–5 -मानुषान्, G1 2 M मानवान् (for -मानुषम्) — c) K2 4 5 B1–3 Dc1 D2 4, 5 7 8 G1 M नरेंद्रं, T G2–4 नरेंद्रस्य (for नरेन्द्रेह) G5 त्वत्प्रयुक्तेन राजेंद्र — d) D5 [ए]नत् (for [ए]तत्) Dc1 D4 7 8 सुदुर्लभ (for °र्बलम्) S किं पुनस्तान्सुदुर्बलान्

7 a) B1 8 Dc1 S (except G1, 5 M1, 2) दुर्योधन (for सुयो°) Ś1 K1–4 तेद्य, D5 स्त्वेतद्, G1 M1 2 ह्यद्य (for त्वद्य) — b) S योधयेय (for °यिष्ये) — c) K2 4 5 D7 8 G3 विजिष्ये च (G3 °ष्येय), D2 विजेष्यामि (for °ष्ये च). T G2–5 M3–5 तथा, G1 M1 2 यथा (for रणे)

8 a) K5 Dn1 D4 5 7 8 कुशलो (for °ली) S (except G1 M1, 2) कुशली कुशलं (G4 °ली) संख्ये (G3 °ख्ये, M3 4 °घे) — c) D2 पार्थ, S पापे (for राजन्) — Ś1 K1–3 repeat 8d after 11a — d) S संस(G3 °प)र्दं (for तेऽन्तिकम्)

9 a) D2 साधु (for सर्वं) — b) Ś1 तु (for त्व) — c) S धनंजयस्य (for वासुदेवस्य) — d) Some MSS फाल्गुनस्य D7 [अ]पि, D3 तु (for च) S वासुदेवस्य चोभयो

10 a) K5 चापि (for त्वभि-) D2 S -हि(G4 -ह )तश्च (for -परीतो) — b) S आचार्येण (for अर्जुनेन) — c) D3 transp सर्वस्य and सैन्यस्य — d) B5 धीमत (for शृण्वत)

11 a) K1 मा जानन् (for राजानम्) K3 (sup lin as in text) अद्य सात्यकेनाजानन् — After 11a, Ś1 K1–3 repeat 8d — d) G5 (inf lin as in text) धनजयं (for जयद्रथम्)

12 a) K3 5 B1 (marg) 2 Dn D1, 3, 5–7 S च, D2 तु (for वा) — c) Dn1 अद्य (for नृपं) T G2–5 M3–5 राजगोपे हनिष्यामि, G1 M1, 2 राजगोपेय गच्छेय — After 12, S (except G2) ins

582* स एव वै विनिक्षिप्तो निक्षेप सव्यसाचिना ।
भारद्वाजभय तेऽद्य मन्यते वै धनंजय ।

[ (L 2) M1 2 भारद्वाजे (for भारद्वाज-) ]

प्रतिज्ञा चापि ते नित्यं श्रुता द्रोणस्य माधव ॥ १३
ग्रहणं धर्मराजस्य भारद्वाजोऽनुगृध्यति ।
शक्तश्चापि रणे द्रोणो निगृहीतुं युधिष्ठिरम् ॥ १४
एवं त्वयि समाधाय धर्मराजं नरोत्तमम् ।
अहमद्य गमिष्यामि सैन्धवस्य वधाय हि ॥ १५
जयद्रथमहं हत्वा ध्रुवमेष्यामि माधव ।
धर्मराजं यथा द्रोणो निगृह्णीयाद्रणे बलात् ॥ १६
निगृहीते नरश्रेष्ठे भारद्वाजेन माधव ।
सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत् ॥ १७
एवं गते नरश्रेष्ठ पाण्डवे सत्यवादिनि ।
अस्माकं गमनं व्यक्तं वनं प्रति भवेत्पुनः ॥ १८
सोऽयं मम जयो व्यक्तं व्यर्थ एव भविष्यति ।
यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् ॥ १९
स त्वमद्य महाबाहो प्रियार्थं मम माधव ।
जयार्थं च यशोऽर्थं च रक्ष राजानमाहवे ॥ २०
स भवान्मयि निक्षेपो निक्षिप्तः सव्यसाचिना ।
भारद्वाजाद्भयं नित्यं पश्यमानेन ते प्रभो ॥ २१
तस्यापि च महाबाहो नित्यं पश्यति संयुगे । C 7 B 7 K 7

13 $^a$) S (except $G_1$ $M_{1,2}$) जानासि (for जानीषे) $D_{n1}$ स्व, $D_{4,6}$ $G_4$ ह (for हि) —$^b$) $B_5$ कुरुपु (for रमस) $K_4$ -सत्तमं (for -संमतम्) $D_1$ रमसा श्रेष्ठमुत्तम —$^c$) $D_{2,5}$ $G_5$ त्वा (for च) $D_{n2}$ मे (for ते) $K_5$ $D_{n1}$ $D_{4,7,8}$ प्रतिज्ञातं हि तेनेद; $M_{3-5}$ प्रतिज्ञा च त्वया तस्य —$^d$) $K_1$ श्रोता, $D_{3,6}$ श्रुत्वा, $G_5$ श्रुतो (for श्रुता) $B_1$ मारिष, $D_2$ सात्वत, $G_1$ M शत्रुहन् (for माधव) $K_5$ $D_{n1}$ $D_{4,7,8}$ पश्यमानेव वै प्रभो

14 $^a$) $K_5$ Dn $D_{1,4-8}$ $M_{3-5}$ ग्रहणे (for °णं) —After $14^a$, $G_5$ ins 583* $G_5$ om $14^b$–$15^d$ —$^b$) $K_5$ [ऽ]भि, $D_{n1}$ $D_{n1}$ $D_{1,4,5,7,8}$ [ऽ]पि; T $G_{1-4}$ $M_{1,2}$ हि (for ऽनु) $K_1$ गृह्णति, $D_2$ गृध्यते (for ति) $K_4$ भारद्वाजेन गच्छति, $M_{3-5}$ गृध्यति ब्राह्मणो ध्रुव —$D_6$ om (hapl) $14^d$–$16^c$ —$^d$) $Ś_1$ $K_{2,3}$ $D_{n1}$ $D_{1,7,8}$ $G_{3,4}$ निग्रहीतु $D_{n2}$ निगृह्णीयाद्रणे बलात् = ($16^d$)

15 $D_6$ $G_5$ om 15 (of v l 14) —$^b$) $K_5$ $D_{n1}$ $D_{1,7}$ T $G_{3,4}$ नरोत्तम, $D_5$ युधिष्ठिर, $G_2$ नृपोत्तमं (for नरोत्तमम्) —$^d$) $D_2$ च, $M_{3-5}$ वै (for हि) —T $G_{1-4}$ M ins after 15 $G_5$ after $14^a$:

583* स त्वमद्य रणे यत्तो रक्ष माधव पाण्डवम् ।
रक्षणे धर्मराजस्य ध्रुवो हि विजयो मम ।

[$G_5$ om. (hapl) line 1, and the prior half of line 2 —(L 1) $G_2$ शक्तो (for यत्तो)]

16 $D_6$ om $16^{abc}$ (cf. v l 14) —$^a$) $Ś_1$ $K_{1-4}$ $D_{n2}$ $D_{1-3}$ च हत्वाहं (for अहं हत्वा) —$^b$) $Ś_1$ $K_{1-4}$ $D_{n2}$ $D_{1-3}$ द्रुतम् (for ध्रुवम्) $K_3$ (*sup lin* as in text) सात्यके (for माधव) —$D_4$ om. (hapl) $16^c$–$17^b$ —$^c$) B ($B_4$ missing) $D_{01}$ $D_1$ $M_{3-5}$ धर्मराजं न चेद्द्रोणो; T G $M_{1,2}$ न धर्मराजं द्रोणश्चेन् —$^d$) $Ś_1$ K Dn $D_{2,3,5-8}$ न्न (for त्रि)

17 $D_4$ om $17^{ab}$ (cf. v l 16) —$^a$) $D_{2,7,8}$ निगृह्णीते (for °हीते) $K_{1,4}$ $D_{7,8}$ $G_4$ नरश्रेष्ठ, $D_{3,6}$ रथश्रेष्ठे ($D_3$ °ष्ठ), $D_5$ नृप° (for नर°) —$^b$) $M_{3-5}$ धर्मराजे च माधव —$^c$) $Ś_1$ $K_1$ $G_{3,4}$ वधे (for वधो) $D_3$ सैंधवस्य वधेनाद्य, $D_5$ जयद्रथवधे वापि —$^d$) $D_2$ न मे, $D_3$ न माम् (for मम) T $G_{2,3}$ प्रीतिस् (for [अ]प्रीतिस्) $D_{7,8}$ क्षयो (for तथा) $D_1$ युधि (for भवेत्) $K_{1,2,4}$ मम प्रीतिस्तथा युधि, $D_5$ न मे प्रीतिकरो भवेत्

18 $^a$) $K_5$ नरव्याघ्रे, $B_{1,3,5}$ D (except $D_{01}$ $D_1$) S (except $G_1$ $M_{1,2}$) नर($D_5$ नृप)श्रेष्ठे (for °श्रेष्ठ) —$^b$) $Ś_1$ K (except $K_5$) $D_1$ पाण्डवे सव्यसाचिनि —$M_{3-5}$ read $18^c$–$19^d$ (except $18^d$–$19^a$) twice —$^c$) $K_4$ $D_1$ $G_1$ $M_{1,2,3-5}$ (last three second time) व्यर्थं (for व्यक्तं) —T G $M_{1,2}$ om (hapl) $18^d$–$19^a$

19 For the repetition in $M_{3-5}$, of v l. 18 T G $M_{1,2}$ om $19^a$ (of v l 18) —$^a$) $D_{4,5,7,8}$ transp मम and जयो —$^b$) $B_5$ एव (for एव) S ($M_{3-5}$ [all second time]) व्यक्तमेव भवेद्युधि —$^c$) $Ś_1$ $K_{1-4}$ रणे (for यदि) $Ś_1$ $K_{1,2}$ $M_{1,2}$ यदि, $K_4$ T G $M_{3-5}$ (last three both times) युधि (for रणे)

20 $^b$) $K_4$ प्रियार्थे (for °र्थं)

21 $^a$) $K_5$ $D_{6,7,8}$ मम (for मयि) $D_3$ सहाय (for निक्षेपो) —$^c$) $Ś_1$ $K_{1-4}$ $B_{1,3}$ $D_{01}$ $D_{2,4,6,8}$ भारद्वाजभय नि($Ś_1$ $K_{1-3}$ $D_4$ °भयात्रि)त्यं —$^d$) $Ś_1$ K (except $K_5$) D (except $D_{01}$ $D_2$) मन्यमानेन (for पश्य°) $Ś_1$ K Dn $D_{1,3-8}$ वै ($D_3$ च) प्रभो, $D_2$ संयुगे (for ते प्रभो)

सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरम् ॥ २
श्रुतं ते गदतो वाक्यं सर्वमेतन्मयाच्युत ।
न्याययुक्तं च चित्रं च फल्गुनार्थे यशस्करम् ॥ ३
एवंविधे तथा काले मादृशं प्रेक्ष्य संमतम् ।
वक्तुमर्हसि राजेन्द्र यथा पार्थे तथैव माम् ॥ ४
न मे धनंजयस्यार्थे प्राणा रक्ष्याः कथंचन ।
त्वत्प्रयुक्तः पुनरहं किं न कुर्यां महाहवे ॥ ५
लोकत्रयं योधयेयं सदेवासुरमानुषम् ।
त्वत्प्रयुक्तो नरेन्द्रेह किमुतैतत्सुदुर्बलम् ॥ ६
सुयोधनबलं त्वद्य योधयिष्ये समन्ततः ।
विजेष्ये च रणे राजन्सत्यमेतद्ब्रवीमि ते ॥ ७
कुशल्यहं कुशलिनं समासाद्य धनंजयम् ।
हते जयद्रथे राजन्पुनरेष्यामि तेऽन्तिकम् ॥ ८
अवश्यं तु मया सर्वं विज्ञाप्यस्त्वं नराधिप ।
वासुदेवस्य यद्वाक्यं फल्गुनस्य च धीमतः ॥ ९
दृढं त्वभिपरीतोऽहमर्जुनेन पुनः पुनः ।
मध्ये सर्वस्य सैन्यस्य वासुदेवस्य शृण्वतः ॥ १०
अद्य माधव राजानमप्रमत्तोऽनुपालय ।
आर्यां युद्धे मतिं कृत्वा यावद्धन्मि जयद्रथम् ॥ ११
त्वयि वाहं महाबाहो प्रद्युम्ने वा महारथे ।
नृपं निक्षिप्य गच्छेयं निरपेक्षो जयद्रथम् ॥ १२
जानीषे हि रणे द्रोणं रभसं श्रेष्ठसंमतम् ।

---

— $^c$) $K_{4\ 5}$ $B_{1.3}$ $Dc_1$ $Dn_1$ $D_{4.5\ 7\ 8}$ $G_5$ $M_{3-5}$ भरत-श्रेष्ठं ( for °श्रेष्ठ )

3 Before 3, $G_1$ M ins सात्यकि — $^a$) $Dn_1$ गदित, $D_{4\ 5\ 7\ 8}$ वदतो ( for गदतो ) — $^b$) $G_1$ $M_{1\ 2}$ एवं ( for एतन् ) $Ś_1$ [अ]नघ ( for [अ]च्युत ) — $^c$) $Dn_1$ वि ( for च ) T $G_{2-5}$ सत्य ( for चित्र ) — $^d$) N ( except $Ś_1$ $K_{1.2}$, $Ś_2$ $B_4$ missing ) फाल्गुनार्थे ( for फल्गु° )

4 $^a$) $D_2$ ईदृशे तु ( for एवंविधे ) T $G_{3\ 4}$ तत ( for तथा ) — $^b$) $D_{3\ 6}$ सदृशे ( for मादृश ) S ( except $G_1$ $M_{1\ 2}$ ) सत्तम ( for संमतम् ) — $^d$) $D_4$ पार्थस् $Ś_1$ $K_{1-4}$ $Dn_1$ $D_1$ च ( for माम् )

5 $^b$) A few MSS रक्षा — $D_{1\ 4}$ om ( hapl ) $5^c$–$6^b$ — $^d$) $B_3$ ( marg ) महारणे, $D_2$ S विशां पते ( for महाहवे )

6 $D_{1\ 4}$ om $6^{ab}$ ( cf v 1 5 ) — $^a$) $D_3$ लोकत्रये $K_4$ शोषयेयं, $D_3$ वधिष्यामि, $D_5$ योधयेह ( for °येयं ) S त्रीँल्लोकान्वार( $G_1$ $M_{1\ 2}$ °कान्वा ज )येय च — $^b$) T $G_{3-5}$ -मानुषान्, $G_{1.2}$ M -मानवान् ( for -मानुषम् ) — $^c$) $K_{2\ 4\ 5}$ $B_{1-3}$ $Dc_1$ $D_{2\ 4\ 5\ 7\ 8}$ $G_1$ M नरेंद्रेंद्र, T $G_{2-4}$ नरेंद्रस्य ( for नरेन्द्रेह ) $G_5$ त्वत्प्रयुक्तेन राजेंद्र — $^d$) $D_5$ [ए]नद् ( for [ए]तद् ) $Dc_1$ $D_{4\ 7\ 8}$ सुदुर्लभ ( for °र्बलम् ) S किं पुनस्तान्सुदुर्बलान्

7 $^a$) $B_{1\ 3}$ $Dc_1$ S ( except $G_{1\ 5}$ $M_{1\ 2}$ ) दुर्योधन ( for सुयो° ) $Ś_1$ $K_{1-4}$ तेद्य, $D_5$ त्वेतद्, $G_1$ $M_{1.2}$ ह्यद्य ( for त्वद्य ) — $^b$) S योधयेय ( for °यिष्ये )

— $^c$) $K_{3\ 4\ 5}$ $D_{7\ 8}$ $G_3$ विजिष्ये च ( $G_3$ °ष्येथ ), $D_2$ विजेष्यामि ( for °ष्ये च ). T $G_{2-5}$ $M_{3-5}$ तथा, $G_1$ $M_{1\ 2}$ यथा ( for रणे )

8 $^a$) $K_5$ $Dn_1$ $D_{4.5\ 7\ 8}$ कुशलो ( for °ली ) S ( except $G_1$ $M_{1.2}$ ) कुशली कुशलं ( $G_4$ °ली ) सखे ( $G_3$ °ख्ये, $M_{3\ 4}$ °खे ) — $^c$) $D_2$ पार्थं, S पापे ( for राजन् ) — $Ś_1$ $K_{1-3}$ repeat $8^d$ after $11^a$ — $^d$) S संस( $G_3$ °प )दं ( for तेऽन्तिकम् )

9 $^a$) $D_2$ साधु ( for सर्वं ) — $^b$) $Ś_1$ तु ( for त्वं ) — $^c$) S धनंजयस्य ( for वासुदेवस्य ) — $^d$) Some MSS फाल्गुनस्य $D_7$ [अ]पि, $D_8$ तु ( for च ) S वासु-देवस्य चोभयो

10 $^a$) $K_6$ चापि ( for त्वभि ) $D_2$ S -हि( $G_4$ -इ )तश्च ( for -परीतो ) — $^b$) S आचार्येण ( for अर्जुनेन ) — $^c$) $D_3$ transp सर्वस्य and सैन्यस्य — $^d$) $B_5$ धीमत ( for शृण्वत )

11 $^a$) $K_1$ मा जानन् ( for राजानम् ) $K_3$ ( *sup lin as in text* ) अद्य सात्यकेनाजानन् — After $11^a$, $Ś_1$ $K_{1-3}$ repeat $8^d$ — $^d$) $G_5$ ( *inf lin as in text* ) धनंजयं ( for जयद्रथम् )

12 $^a$) $K_{3\ 5}$ $B_1$( marg ) $_2$ Dn $D_{1.3.5-7}$ S च, $D_2$ तु ( for वा ) — $^c$) $Dn_1$ अद्य ( for नृपं ) T $G_{2-5}$ $M_{3-5}$ राजगोपे हनिष्यामि, $G_1$ $M_{1.2}$ राजगोपेय गच्छेय — After 12, S ( except $G_2$ ) ins

582* स एव वै विनिक्षिप्तो निक्षेप सव्यसाचिना ।
भारद्वाजभय तेऽद्य मन्यते वै धनंजय ।
[ ( L. 2 ) $M_{1\ 2}$ भारद्वाजे ( *for* भारद्वाज ) ]

प्रतिज्ञा चापि ते नित्यं श्रुता द्रोणस्य माधव ॥ १३
ग्रहणं धर्मराजस्य भारद्वाजोऽनुगृध्यति ।
शक्तश्चापि रणे द्रोणो निगृहीतुं युधिष्ठिरम् ॥ १४
एवं त्वयि समाधाय धर्मराजं नरोत्तमम् ।
अहमद्य गमिष्यामि सैन्धवस्य वधाय हि ॥ १५
जयद्रथमहं हत्वा ध्रुवमेष्यामि माधव ।
धर्मराजं यथा द्रोणो निगृह्णीयाद्रणे बलात् ॥ १६
निगृहीते नरश्रेष्ठे भारद्वाजेन माधव ।
सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत् ॥ १७
एवं गते नरश्रेष्ठ पाण्डवे सत्यवादिनि ।
अस्माकं गमनं व्यक्तं वनं प्रति भवेत्पुनः ॥ १८
सोऽयं मम जयो व्यक्तं व्यर्थ एव भविष्यति ।
यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् ॥ १९
स त्वमद्य महाबाहो प्रियार्थं मम माधव ।
जयार्थं च यशोऽर्थं च रक्ष राजानमाहवे ॥ २०
स भवान्मयि निक्षेपो निक्षिप्तः सव्यसाचिना ।
भारद्वाजाद्भयं नित्यं पश्यमानेन ते प्रभो ॥ २१
तस्यापि च महाबाहो नित्यं पश्यति संयुगे । C 7 4 B 7 ॥ K 7 ॥

---

13 a) S (except G1 M1 2) जानासि (for जानीषे) Dn1 स्व; D4 6 G4 ह (for हि) —b) B5 कुरुषु (for रभस) K4 -सत्तमं (for -संमतम्) D1 रभसा श्रेष्ठमुत्तम —c) D2 5 G5 वा (for च) Dn2 मे (for ते) K5 Dn1 D4 7 8 प्रतिज्ञातं हि तेनेद, M3-5 प्रतिज्ञा च त्वया तस्य —d) K1 श्रोता, D1. 2. 6 श्रुत्वा; G5 श्रुतो (for श्रुता) B1 मारिष, D2 सात्वत, G1 M शत्रुहन् (for माधव) K5 Dn1 D4 7 8 पश्यमानेव वै प्रभो

14 a) K5 Dn D1. 4-8 M3-5 ग्रहणे (for °णं) —After $14^{a}$, G5 ins 583* G6 om $14^{b}$–$15^{a}$ —b) K5 [ऽ]मि, Do1 Dn1 D1. 4 5 7 8 [ऽ]पि; T G1-4 M1 2 हि (for ऽनु-) K1 गृह्णति, D2 गृध्यते (for °ति) K4 भारद्वाजेन गच्छति, M3-5 गृध्यति ब्राह्मणो ध्रुव —D6 om. (hapl.) $14^{d}$–$16^{c}$ —d) Ś1 K2 3 Dn1 D1 7 8 G3 4 निग्रहीतुं Dn2 निगृह्णीयाद्रणे बलात् = ($16^{d}$)

15 D6 G5 om 15 (cf v l 14) —b) K5 Dn1 D2 7 T G3 4 नरोत्तम, D5 युधिष्ठिर, G2 नृपोत्तमं (for नरोत्तमम्) —d) D2 च, M3-5 वै (for हि) —T G1-4 M ins after 15 G5 after $14^{a}$

583* स त्वमद्य रणे यत्तो रक्ष माधव पाण्डवम् ।
रक्षणे धर्मराजस्य ध्रुवो हि विजयो मम ।

[ G5 om (hapl.) line 1, and the prior half of line 2 —(L 1) G2 शक्तो (for यत्तो) ]

16 D6 om $16^{abc}$ (cf v l 14) —a) Ś1 K1-4 Dn2 D1-3 च हत्वाहं (for अहं हत्वा) —b) Ś1 K1-4 Dn2 D1-3 द्रुतम् (for ध्रुवम्) K3 (sup lin as in text) सात्यके (for माधव) —D4 om. (hapl) $16^{c}$–$17^{b}$ —c) B (B4 missing) Do1 D1 M3-5 धर्मराजं न चेद्द्रोणो, T G M1 2 न धर्मराजं द्रोणश्चेन् —d) Ś1 K Dn D2 3 5-8 न (for नि)

17 D4 om $17^{ab}$ (cf. v l 16) —a) D3 7 8 निगृह्णीते (for °हीते) K1 4 D7 8 G4 नरश्रेष्ठ, D3 6 रथश्रेष्ठे (D3 °ष्ठ), D5 नृप° (for नर°) —b) M3-5 धर्मराजे च माधव —c) Ś1 K1 G3 4 वधे (for वधो) D2 सैंधवस्य वधेनाद्य, D5 जयद्रथवधे चापि —d) D2 न मे; D3 न माम् (for मम) T G3 8 प्रीतिस् (for [अ]प्रीतिस्) D7 8 भयो (for तथा) D1 युधि (for भवेत्) K1 2 4 मम प्रीतिस्तथा युधि, D5 न मे प्रीतिकरो भवेत्

18 a) K5 नरव्याघ्रे, B1 3 5 D (except Do1 D1) S (except G1 M1 2) नर(D5 नृप)श्रेष्ठे (for °श्रेष्ठ) —b) Ś1 K (except K5) D1 पाण्डवे सव्यसाचिनि —M3-5 read $18^{c}$–$19^{d}$ (except $18^{d}$–$19^{a}$) twice —c) K4 D1 G1 M1 2 3-5 (last three second time) व्यर्थं (for व्यक्तं) —T G M1 2 om (hapl) $18^{d}$–$19^{a}$

19 For the repetition in M3-5, cf v l. 18 T G M1 2 om $19^{a}$ (cf. v l. 18) —a) D4 5 7 8 transp मम and जयो —b) B5 एवं (for एव) S (M3-5 [all second time]) व्यक्तमेव भवेद्युधि —c) Ś1 K1-4 रणे (for यदि) Ś1 K1 2 M1 2 यदि, K4 T G M3-5 (last three both times) युधि (for रणे)

20 b) K4 प्रियार्थे (for °र्थं)

21 a) K5 D5 7 8 मम (for मयि) D8 सहाय (for निक्षेपो) —c) Ś1 K1-4 B1. 3 Do1 D2 4 6 8 भारद्वाजभयं नि(Ś1 K1-3 D4 °भयाद्धि)त्यं —d) Ś1 K (except K5) D (except Do1 D2) मन्यमानेन (for पश्य°) Ś1 K Dn D1 3-6 वै (D3 ) प्रभो, D2 संयुगे (for ते प्रभो).

2 13 नान्यं हि प्रतियोद्धारं रौक्मिणेयादृते प्रभो ।
मां वापि मन्यते युद्धे भारद्वाजस्य धीमतः ॥ २२
सोऽहं संभावनां चैतामाचार्यवचनं च तत् ।
पृष्ठतो नोत्सहे कर्तुं त्वां वा त्यक्तुं महीपते ॥ २३
आचार्यो लघुहस्तत्वादभेद्यकवचावृतः ।
उपलभ्य रणे क्रीडेद्यथा शकुनिना शिशुः ॥ २४
यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वजः ।
तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथार्जुनः ॥ २५
कुरु त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यः प्रतीयाद्रणे द्रोणं यावद्गच्छामि पाण्डवम् ॥ २६
मा च ते भयमद्यास्तु राजन्नर्जुनसंभवम् ।
न स जातु महाबाहुर्भारमुद्यम्य सीदति ॥ २७
ये च सौवीरका योधास्तथा सैन्धवपौरवाः ।
उदीच्या दाक्षिणात्याश्च ये चान्येऽपि महारथाः ॥ २८
ये च कर्णमुखा राजन्रथोदाराः प्रकीर्तिताः ।
एतेऽर्जुनस्य क्रुद्धस्य कलां नार्हन्ति षोडशीम् ॥ २९
उद्युक्ता पृथिवी सर्वा ससुरासुरमानुषा ।
सराक्षसगणा राजन्सकिंनरमहोरगा ॥ ३०
जङ्गमाः स्थावरैः सार्धं नालं पार्थस्य संयुगे ।
एवं ज्ञात्वा महाराज व्येतु ते भीर्धनंजये ॥ ३१
यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ।
न तत्र कर्मणो व्यापत्कथंचिदपि विद्यते ॥ ३२

---

22 Ś1 K1–4 D1 om (hapl) $22^{abcd}$ — a) M3–5 यस्य (for तस्य) B1 महाराज (for °बाहो) — b) B (B4 missing) फलं, D5 नान्यं, T G2–4 सर्त्यं, G5 सत्त्वं (for नित्यं) B (B4 missing) Dc1 D2 पश्यसि; Dn D5 S पश्यामि (for पश्यति) — D2 om $22^{cdef}$ — d) G2 रौग्मिणेयाद् K5 D3. 4. 6 [ह्]ते (for [ऋ]ते) — e) Ś1 K B1. 3 Dn D1. 3–6 मां चापि, T G2–4 मां वासौ, G5 भवान्स (for मां वापि) — After 22, M3–5 ins

584* भीमो वापि महाराज प्रभञ्जनसमो बले ।

23 a) B (B4 missing) Dc1 D4. 5. 7. 8 M3–5 एताम्, D1 T G M1. 2 चैवम् (G5 °व) (for चैताम्) — b) D1 M3 K4 च यत्, D4 तत (for च तत्) — d) D1 M3 त्वा K1 च, K2 तु, M3–5 वै (for वा) T G M1. 2 न त्वां (M1. 2 त्वा) त्यक्षामि पांडव

24 a) T G1–4 M1. 2 -हस्तस्त्वाम् (for °त्वाद्) — b) S (except M3) अवध्य- (for अभेद्य) — c) K5 B2 Dn1 D7. 8 उपालभ्य, D2 उपलक्ष्य (for °लभ्य) Dn1 क्रीडन्, G5 क्रुद्धे (for क्रीडेद्) — d) M3–5 शकुनिन (for °निना) G5 रिपु (for शिशु)

25 c) Ś1 त्वा तस्मै (by transp), G1 M1. 2 तस्मै त्वा; M3–5 तस्मिन्हि — d) Ś1 M3–5 त्वा (for त्वां) G1 M3–5 यथा ह्यह (for यथार्जुन)

26 a) D1 करोति, G5 गुरुत्वम् (for कुरु त्वम्) — b) K4 त्वा (for ते)

27 a) S मा (G1 M1. 2 न) हि (for मा च) — c) S स (M3–5 हि) (for स)

28 a) G1 M1. 2 यौधास्, M3–5 सर्वे — b) K5 M3–5 ये च (for तथा) G5 -पौरुषा (for -पौरवा) Ś1 G1 M1. 2 तथा पौरवसैंधवा, D7 तथा मागधपौषिका

29 b) Do1 महोदारा (for रथो°) — T G3 om. $29^{c}$–$30^{a}$ — c) G2. 4. 5 M3–5 धनंजयस्य क्रुद्धस्य — d) Ś1 K1–3 B3 नार्घंति (for नार्हन्ति)

30 T G3 om $30^{a}$ (cf v l 29) — a) K1–4 इत्येवं, B5 सद्युक्ता; G5 उद्युक्त्वा (for °क्ता) G1 M कृत्स्ना, G2. 4. 5 राजन् (for सर्वा) — b) K3 D4 -मानुषा, S -मानवा (G1 M °वा) — c) T G2–4 चैव (for राजन्) G5 सगंधर्वगणाश्चैव — d) K1. 5 Dn1 D6 T G2–5 महोरगा

31 a) K1. 2 B1. 3 Dc1 T G2–4 M1. 2 जगम-, K5 B1 Dn1 D2. 4. 5. 7. 8 जगमै- (for °मा) B5 Dn2 D1. 3. 6 जगमा (Dn2 °मै-) स्थावरा सर्वे — c) T G M1. 2 एतद् (for एव) — d) G1. 5 M व्यैतु (for व्येतु) Ś1 K1. 3–5 D4. 5. 7. 8 धनंजयात् (for °जये) Dn1 व्येतु ते मनसो ज्वर-

32 a) G1 M3. 4 तत्र (for यत्र) T G2–5 कृष्णौ (for वीरौ) — b) T G2–5 गतौ पुरुषसत्तमौ — c) D3. 6 व्यासि, G1 M1. 2 ह्यापत्, Cd व्या° (as in text) Ś1 K1–3 न तत्र कर्मणा व्याध (K1 व्यास, K2 न्यास-; K3 व्यास)

33 a) Ś1 K1. 3. 4 दैव कृत्वा योगस(Ś1 K1 °म)हम्. Cd cites योगम् (as in text) — b) D7 om from चाहवे up to चित्रास्त्र (in $34^{c}$), D5 संयुगे (for चाहवे).

दैवं कृतास्त्रतां योगममर्षमपि चाहवे ।
कृतज्ञतां दयां चैव भ्रातुस्त्वमनुचिन्तय ॥ ३३
मयि चाप्यपयाते वै गच्छमानेऽर्जुनं प्रति ।
द्रोणे चित्रास्त्रतां संख्ये राजंस्त्वमनुचिन्तय ॥ ३४
आचार्यो हि भृशं राजन्निग्रहे तव गृध्यति ।
प्रतिज्ञामात्मनो रक्षन्सत्यां कर्तुं च भारत ॥ ३५
कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यस्याहं प्रत्ययात्पार्थ गच्छेयं फल्गुनं प्रति ॥ ३६
न ह्यहं त्वा महाराज अनिक्षिप्य महाहवे ।
क्वचिद्यास्यामि कौरव्य सत्यमेतद्ब्रवीमि ते ॥ ३७

एतद्विचार्य बहुशो बुद्ध्या बुद्धिमतां वर ।
दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन्प्रशाधि माम् ॥ ३८

युधिष्ठिर उवाच ।

एवमेतन्महाबाहो यथा वदसि माधव ।
न तु मे शुध्यते भावः श्वेताश्वं प्रति मारिष ॥ ३९
करिष्ये परमं यत्नमात्मनो रक्षणं प्रति ।
गच्छ त्वं समनुज्ञातो यत्र यातो धनंजयः ॥ ४०
आत्मसंरक्षणं संख्ये गमनं चार्जुनं प्रति ।
विचार्यैतद्द्वयं बुद्ध्या गमनं तत्र रोचये ॥ ४१
स त्वमातिष्ठ यानाय यत्र यातो धनंजयः । C 7 B 7 K 7

---

T $G_{2-5}$ क्षमर्पं शौर्यमाहवे —$^{c}$) T $G_{2-5}$ चापि (for चैव) —$^{d}$) T G $M_{1\ 2}$ [अ]पि (for [अ]नु) Ś1 -कीर्तय, $D_{6\ 8}$ चिंतयन् (for चिन्तय)

34 $D_7$ om up to चित्रास्त्र (cf. v l 33) $K_4$ om $34^{a}$–$35^{b}$ —$^{a}$) $K_2$ $B_2$ (marg as in text) $D_{c1}$ उपयाते, T $G_{3\ 4}$ असहाये (for अपयाते) $G_1$ $M_{1\ 2}$ चेद्, $G_{2-4}$ ते, $G_5$ तु, $M_{3-5}$ स्व (for वै) —$^{b}$) $M_{3-5}$ भीमसेने च पाण्डवे — Ś1 $K_{1\ 3}$ om (hapl) $34^{c}$–$36^{d}$, $D_4$ om. $34^{c}$–$35^{b}$ —$^{c}$) $D_8$ कृतास्त्रतां; $G_4$ विचित्रतां (for चित्रास्त्रता) $B_2$ युद्धे, $G_{1\ 2}$ M संखे (for संख्ये) —$^{d}$) $D_2$ सर्वं (for राजंस्) S [अ]पि (for [अ]नु-)

35 Ś1 $K_{1\ 3}$ om. 35, $K_4$ $D_4$ om $35^{ab}$ (for all, cf v l 34) $K_2$ reads 35–36 on marg —$^{a}$) $K_2$ [ऽ]पि (for हि) $M_{3-5}$ तात (for राजन्) —$^{b}$) $D_2$ $G_1$ M निग्रहे गृह्य(G1 M3–5 °ध्य)ते तव —$^{c}$) $D_4$ राजन् (for रक्षन्) —$^{d}$) $K_4$ $D_{n1}$ $D_8$ सत्यं (for सत्या)

36 Ś1 $K_{1.3}$ om 36 (cf v l. 34) $K_2$ reads 36 on marg —$^{a}$) $M_{3.4}$ [आ]त्मना (for नो) —$^{b}$) T G $M_{1\ 2}$ भवेदिह (for गते मयि) —$^{c}$) $K_{3\ 4}$ पार्थं $K_5$ $D_{7\ 8}$ यस्याहं प्रत्ययार्थाय, $B_2$ (marg) यास्याम्यहं यत्र पार्थो, $M_{1.2}$ यस्याह प्रतीया पार्थं Cd cites प्रत्ययात् (as in text) —$^{d}$) $M_{1.2}$ फाल्गुनं $D_{n1}$ गमिष्याम्यर्जुन प्रति — For $36^{cd}$, T G $M_{3-5}$ subst.

585* प्रत्ययो न हि मे पार्थ यावद्गच्छामि पाण्डवम् ।
[$M_{3-5}$ फल्गुनं (for पाण्डवम्)]

37 $G_5$ om. 37 —$^{a}$) $K_{4\ 5}$ Dn $D_{1-3\ 5-8}$ त्वां (for त्वा) B ($B_4$ missing) न ह्यह त्वामनि($B_6$ °नु)क्षिप्य, S ($G_5$ om) न ह्यहं (T $G_{3\ 4}$ तर्ह्यह) त्वयि कौरव्य —$^{b}$) B ($B_4$ missing) कौरवेंद्र महारणे, S ($G_5$ om) वि($G_{1.2}$ M अ)निक्षिप्ते महारथे —$^{c}$) $B_2$ $D_{c1}$ कौंतेय (for कौरव्य) S ($G_5$ om) कस्मिंश्चित्स($M_{3-5}$ एकस्मिन्सं)प्रयास्यामि — After 37, S (except $G_5$) ins

586* न पश्यामि रथं कंचिद्यस्ते गोप्ता भवेदिह ।
शक्तं य मन्यसे राजन्गोप्तारं प्रति पाण्डव ।

[(L 1) $G_1$ रणे (for रथ) $G_{1\ 3\ 4}$ कश्चिद्, $M_{1.2}$ किंचिद् (for क°) $G_1$ $M_{1.2}$ इति (for इह) —(L 2) $M_{3-5}$ ब्रूहि (for प्रति)]

38 $^{a}$) $D_{3\ 6}$ हि कार्यं (for विचार्यं) $D_{3\ 6}$ बहुधा (for °शो) —$^{b}$) $D_{3\ 6}$ बुद्धा Ś1 $K_1$ वर —$^{c}$) $D_{3\ 6}$ स्वयं (for श्रेय) $G_1$ $M_{1\ 2}$ यस्त्वास्य (for बुद्ध्या) —$^{d}$) $M_5$ मा (for माम्)

39 $^{a}$) $D_5$ एव (for एतन्) —$^{c}$) B ($B_4$ missing) $D_{c1}$ हि (for तु) $D_{4\ 6}$ बुध्यते (for शु°) —$^{d}$) $B_{1\ 5}$ $D_6$ माधव, $D_{n1}$ मानद; $D_{3\ 6}$ भारत (for मारिष)

40 $^{a}$) $K_4$ S च पर, $D_2$ प्रथम (for परमं) $G_2$ ज्ञानम् (for यत्नम्) —$^{b}$) $D_5$ आत्मनो रक्षणे ह्यहं — $K_1$ om $40^{c}$–$42^{d}$ —$^{c}$) $K_3$ मदनु (for समनु-) — After 40, $G_1$ $M_{1\ 2}$ read $42^{cd}$

41 $K_1$ om 41 (cf. v l 40) Ś1 $K_{2-4}$ $D_{1\ 5}$ $G_3$ om (hapl) $41^{a}$–$42^{b}$. $G_4$ om 41–43 —$^{a}$) $D_2$ चैव, $G_{1.2\ 5}$ $M_{1.2}$ सखे, $M_{3\ 4}$ सवे (for संख्ये) —$^{b}$) $D_{c1}$ वा (for च) $D_2$ संयोगमर्जुनं प्रति —$^{c}$) $D_{2\ 3}$ तद्

नान्यं हि प्रतियोद्धारं रौक्मिणेयादृते प्रभो ।
मां वापि मन्यते युद्धे भारद्वाजस्य धीमतः ॥ २२
सोऽहं संभावनां चैतामाचार्यवचनं च तत् ।
पृष्ठतो नोत्सहे कर्तुं त्वां वा त्यक्तुं महीपते ॥ २३
आचार्यो लघुहस्तत्वादभेद्यकवचावृतः ।
उपलभ्य रणे क्रीडेद्यथा शकुनिना शिशुः ॥ २४
यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वजः ।
तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथार्जुनः ॥ २५
कुरु त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यः प्रतीयाद्रणे द्रोणं यावद्गच्छामि पाण्डवम् ॥ २६
मा च ते भयमद्यास्तु राजन्नर्जुनसंभवम् ।
न स जातु महाबाहुर्भारमुद्यम्य सीदति ॥ २७
ये च सौवीरका योधास्तथा सैन्धवपौरवाः ।
उदीच्या दाक्षिणात्याश्च ये चान्येऽपि महारथाः ॥ २८
ये च कर्णमुखा राजन्रथोदाराः प्रकीर्तिताः ।
एतेऽर्जुनस्य क्रुद्धस्य कलां नार्हन्ति षोडशीम् ॥ २९
उद्युक्ता पृथिवी सर्वा ससुरासुरमानुषा ।
सराक्षसगणा राजन्सकिंनरमहोरगा ॥ ३०
जङ्गमाः स्थावरैः सार्धं नालं पार्थस्य संयुगे ।
एवं ज्ञात्वा महाराज व्येतु ते भीर्धनंजये ॥ ३१
यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ।
न तत्र कर्मणो व्यापत्कथंचिदपि विद्यते ॥ ३२

---

22 $Ś_1$ $K_{1-4}$ $D_1$ om (hapl.) $22^{abcd}$ —$^{a}$) $M_{3-5}$ यस्य (for तस्य) $B_1$ महाराज (for °बाहो) —$^{b}$) B ($B_4$ missing) फलं, $D_5$ नान्य, T $G_{2-4}$ सत्यं, $G_5$ सत्त्वं (for नित्यं) B ($B_4$ missing) $D_{c1}$ $D_2$ पश्यसि, $D_n$ $D_5$ S पश्यामि (for पश्यति) —$D_2$ om $22^{cdef}$ —$^{d}$) $G_2$ रौग्मिणेयाद् $K_5$ $D_{3\ 4.\ 6}$ [हृ]ति (for [ऋ]ते) —$^{e}$) $Ś_1$ K $B_{1.3}$ $D_n$ $D_{1\ 3-8}$ मा चापि, T $G_{2-4}$ मां वासौ, $G_5$ भवान्स (for मां वापि) —After 22, $M_{3-5}$ ins

584* भीमो वापि महाराज प्रभञ्जनसमो बले ।

23 $^{a}$) B ($B_4$ missing) $D_{c1}$ $D_{4\ 5\ 7\ 8}$ $M_{3-5}$ एताम्, $D_1$ T G $M_{1\ 2}$ चैवम् ($G_5$ °व) (for चैताम्) —$^{b}$) $K_4$ च यत्, $D_4$ तत (for च तत्) —$^{d}$) $D_4$ $M_3$ त्वा $K_1$ च, $K_2$ तु, $M_{3-5}$ वै (for वा) T G $M_{1.\ 2}$ न त्वा ($M_{1\ 2}$ त्वा) त्यक्षामि पाडव

24 $^{a}$) T $G_{1-4}$ $M_{1\ 2}$ -हस्तस्त्वाम् (for °त्वाद्) —$^{b}$) S (except $M_3$) अवध्य- (for अभेद्य) —$^{c}$) $K_5$ $B_2$ $D_{7\ 8}$ उपालभ्य, $D_2$ उपलक्ष्य (for °लभ्य) $D_{n1}$ क्रीडन्, $G_5$ क्रुद्धे (for क्रीडेद्) —$^{d}$) $M_{3-5}$ शकुनिन (for °निना) $G_5$ रिपु (for शिशु)

25 $^{c}$) $Ś_1$ त्वा तस्मै (by transp.), $G_1$ $M_{1.\ 2}$ तस्मै त्वा, $M_{3-5}$ तस्मिन्हि —$^{d}$) $Ś_1$ $M_{3-5}$ त्वा (for त्वा) $G_1$ $M_{3-5}$ यथा द्यह (for यथार्जुन)

26 $^{a}$) $D_4$ करोति, $G_5$ गुरुत्वम् (for कुरु त्वम्) —$^{b}$) $K_4$ त्वा (for ते)

27 $^{a}$) S मा ($G_1$ $M_{1\ 2}$ न) हि (for मा च). —$^{c}$) S स्म ($M_{3-5}$ हि) (for स)

28 $^{a}$) $G_1$ $M_{1\ 2}$ यौधास्, $M_{3-5}$ सर्वे —$^{b}$) $K_5$ $M_{3-5}$ ये च (for तथा) $G_5$ -पौरुषा (for -पौरवा) $Ś_1$ $G_1$ $M_{1.\ 2}$ तथा पौरवसैंधवा, $D_7$ तथा मागधपौषिका

29 $^{b}$) $D_{c1}$ महोदारा (for रथो°) —T $G_3$ om. $29^{c}$–$30^{b}$ —$^{c}$) $G_{2\ 4.\ 5}$ $M_{3-5}$ धनजयस्य क्रुद्धस्य —$^{d}$) $Ś_1$ $K_{1-3}$ $B_2$ नार्घंति (for नार्हन्ति)

30 T $G_3$ om $30^{a}$ (cf v l 29) —$^{a}$) $K_{1-4}$ इत्येवं, $B_5$ तद्युक्ता; $G_5$ उद्युक्त्वा (for °क्ता) $G_1$ M कृत्स्ना, $G_{2\ 4\ 5}$ राजन् (for सर्वा) —$^{b}$) $K_3$ $D_4$ -मानुषा, S मानवा ($G_1$ M °वा) —$^{c}$) T $G_{2-4}$ चैव (for राजन्) $G_5$ सगधर्वगणाश्चैव —$^{d}$) $K_{1\ 5}$ $D_{n1}$ $D_6$ T $G_{2-5}$ -महोरगा

31 $^{a}$) $K_{1\ 2}$ $B_{2\ 3}$ $D_{c1}$ T $G_{2-4}$ $M_{1\ 2}$ जंगम-, $K_5$ $B_1$ $D_{n1}$ $D_{3\ 4\ 5\ 7\ 8}$ जगमै (for °मा) $B_5$ $D_{n2}$ $D_{1.\ 3\ 6}$ जगमा ($D_{n2}$ °मै) स्थावरा सर्वे —$^{c}$) T G $M_{1\ 2}$ एतद् (for एव) —$^{d}$) $G_{1\ 5}$ M व्यैतु (for व्येतु) $Ś_1$ $K_{1\ 3-5}$ $D_{4\ 5\ 7\ 8}$ धनंजयात् (for °जये) $D_{n1}$ व्येतु ते मनसो ज्वर

32 $^{a}$) $G_1$ $M_{3.\ 4}$ तत्र (for यत्र) T $G_{2-5}$ कृष्णौ (for वीरौ) —$^{b}$) T $G_{2-5}$ गतौ पुरुषसत्तमौ —$^{c}$) $D_{3.\ 6}$ व्याप्ति, $G_1$ $M_{1\ 2}$ ह्यापत्, Cd व्या° (as in text) $Ś_1$ $K_{1-3}$ न तत्र कर्मणा व्याध ($K_1$ व्यास, $K_2$ न्यास; $K_3$ व्यास)

33 $^{a}$) $Ś_1$ $K_{1.\ 3\ 4}$ दैवं कृत्वा योगस($Ś_1$ $K_1$ °म)हम् Cd cites योगम् (as in text) —$^{b}$) $D_7$ om from चाहवे up to चित्रास्त्र (in $34^{c}$), $D_3$ संयुगे (for चाहवे).

अभवत्सर्वसैन्यानाममावकरणो महान् ॥ २२

धृतराष्ट्र उवाच ।

तथा गतेषु सैन्येषु तथा कृच्छ्रगतः स्वयम् ।
कच्चिद्दुर्योधनः सूत नाकार्षीत्पृष्ठतो रणम् ॥ २३
एकस्य च बहूना च संनिपातो महाहवे ।
विशेषतो नृपतिना विषमः प्रतिभाति मे ॥ २४
सोऽत्यन्तसुखसंवृद्धो लक्ष्म्या लोकस्य चेश्वरः ।
एको बहून्समासाद्य कच्चिन्नासीत्पराङ्मुखः ॥ २५

संजय उवाच ।

राजन्संग्राममाश्चर्यं तव पुत्रस्य भारत ।
एकस्य च बहूनां च शृणुष्व गदतोऽद्भुतम् ॥ २६
दुर्योधनेन सहसा पाण्डवी पृतना रणे ।
नलिनी द्विरदेनेव समन्ताद्विप्रलोडिता ॥ २७
तथा सेना कृतां दृष्ट्वा तत्र पुत्रेण कौरव ।
भीमसेनपुरोगास्तं पाञ्चालाः समुपाद्रवन् ॥ २८
स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः ।
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम् ॥ २९
धृष्टद्युम्नं च विंशत्या धर्मपुत्रं च सप्तभिः ।
केकयान्दशभिर्विद्ध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ३०
शतशश्चापरान्योधान्सद्विपाश्च रथान्रणे । C 7 3580 B 7 12 ? 7 12

addl Colophon [*Sub parvan* जयद्रथवध —*Adhy name* सात्यकिप्रवेश —*Adhy no* 127 ]

23 Ś2 missing (cf. v l 6) G2 M3–5 om 23 (cf v l 21) —$^{a}$) B2 3 5 Do1 यातेषु (for गतेषु) —$^{b}$) D2 कृत्स्नगत —$^{c}$) K1 2 कश्चिद् (for कच्चिद्) —$^{d}$) D4 अकार्षीत् G5 रणे

24 Ś2 missing (cf. v l 6) G2 M3–5 om 24 (cf v l 21) —$^{a}$) T एतस्य (for एकस्य) Dn1 हि (for the second च) D8 एकस्य बहूना चैव —$^{b}$) K1 D3–5 सनिपाते Ś1 K Dn D1 3–8 महारणे (for हवे) —$^{c}$) B Do1 नरपतेर् (for नृपतिना) S (G2 M3–5 om) विशेषतस्तु नृपतेर् —$^{d}$) T G3 4 M1 2 विषमं

25 Ś2 missing (cf v l 6) G2 M3–5 om 25 (cf v l. 21) —$^{a}$) B1 5 सोत्यंत, Dn2 D3 6 मत्पुत्र (for सोऽत्यन्त) G5 संवृत्तो (for संवृद्धो) —$^{b}$) K5 D7 S (G2 M3–5 om) रक्ष्यो (for लक्ष्म्या) — D4 om $25^{c}$–$27^{b}$

26 Ś2 missing (cf v l. 6) D4 G2 M3–5 om 26 (cf v l 25, 21) —$^{a}$) D5 तत्र (for राजन्) K5 राजन्नाश्चर्यं संग्रामे —$^{b}$) K2 4 transp तव and पुत्रस्य —$^{c}$) B2. 3 Do1 एकस्य बहुभि सार्धं —$^{d}$) S (G2 M3–5 om) शृणु त्व (for शृणुष्व) K5 G5 वदतो (for ग) K5 B Do1 Dn2 D3 6 T G3–5 मम; Dn1 D2 5 7 8 भृशं (for ऽद्भुतम्)

27 Ś2 missing (cf. v l 6) G2 M3–5 om 27 (cf v l. 21) D4 om $27^{ab}$ (cf v l 25) —$^{a}$) B2 (orig) 3–5 Do1 समरे, B2 (marg) महती (for सहसा) —$^{b}$) B2 3 5 Do1 पृतना पांडवी रणे, G1 M1 2 पाहूना रथिना चमू —$^{c}$) B1 5 D5 G1 M1 2 [ए]व (for [इ]व) —$^{d}$) Ś1 परिलोडिता; B1–3 Do1 प्रति°, T G1 M1 2 प्रवि(T विप्र, G1 परि)लोळिता (for विप्रलोडिता)

28 Ś2 missing (cf v l 6) G2 M3–5 om 28 (cf v l 21) D6 om 28 —$^{a}$) Ś1 transp तथा and सेना B1–3 Do1 ततस्ता महता सेना, B4 S (G2 M3–5 om) पाडुसेनां हता दृष्ट्वा, B5 ततस्ता प्रहिता दृष्ट्वा —$^{b}$) G5 पाडु (for तव) K5 D2 भारत, B4 D5 S (G2 M3–5 om.) मारिष (for कौरव) B1–3 5 Do1 दृष्ट्वा (B5 सेनां) पुत्रेण ते नृप —$^{c}$) G1 M1 2 सहायास् (for पुरोगास्) K Dn1 D1 2 5 7 8 T G3 4 ते (for तं) —$^{d}$) Do1 पंचाला T G3–5 तमुपाद्रवन्, G1 M1 2 समभि° (for समुपा°)

29 Ś2 missing (cf. v l 6) G2 M3–5 om 29 (cf v l 21) K4 reads $29^{ab}$ twice. —$^{a}$) K5 G5 भीमसेन च (K5 तु) दशभिर्, Dn1 D4 5 7 8 स भीम दशभिर्विद्ध्वा —D8 om (? hapl) $29^{b}$–$30^{c}$ —$^{b}$) Ś1 K1–3. 4 (both times) Dn2 D1–3 6 तथा (for the second त्रिभि) B (except B4) Do1 शरैर्विव्याध पाडव — After $29^{ab}$, B1–3. 5 Do1 ins

732* त्रिभिस्त्रिभिर्यमौ वीरौ धर्मराज च सप्तभि ।

— T G3–5 om (hapl) $29^{c}$–$30^{d}$ —$^{d}$) K5 तु (for च)

30 Ś2 missing (cf v l 6) S (except G1 M1. 2) om 30 (cf. v l 21, 29) D8 om $30^{abc}$ (cf. v l 29) —$^{a}$) D6 तु (for च) G1 M1 2 सप्तत्या (for विंशत्या) — B2 Do1 om $30^{bc}$ —$^{c}$) Ś1 K1–4 D1 एकैकं, K5 B4 Dn1 G1 कैकयान्, B1 3 Dn2 D2 3, 5–7

शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ॥ ३१
न संदधन्विमुञ्चन्वा मण्डलीकृतकार्मुकः ।
अदृश्यत रिपून्निघ्नञ्शिक्षयास्त्रबलेन च ॥ ३२
तस्य तान्निघ्नतः शत्रून्हेमपृष्ठं महद्धनुः ।
भल्लाभ्यां पाण्डवो ज्येष्ठस्त्रिधा चिच्छेद मारिष ॥ ३३
विव्याध चैनं बहुभिः सम्यगस्तैः शितैः शरैः ।
वर्माण्याशु समासाद्य ते भग्नाः क्षितिमाविशन् ॥ ३४
ततः प्रमुदिताः पार्थाः परिवव्रुर्युधिष्ठिरम् ।
यथा वृत्रवधे देवा मुदा शक्रं महर्षिभिः ॥ ३५
अथ दुर्योधनो राजा दृढमादाय कार्मुकम् ।
तिष्ठ तिष्ठेति राजानं ब्रुवन्पाण्डवमभ्ययात् ॥ ३६
तं तथा वादिनं राजंस्तव पुत्रं महारथम् ।
प्रत्युद्ययुः प्रमुदिताः पाञ्चाला जयगृद्धिनः ॥ ३७
तान्द्रोणः प्रतिजग्राह परीप्सन्युधि पाण्डवम् ।

---

कैके° (for केक°) B5 सप्तभिर् (for दशभिर्) B1 3 M1 2 पच (for विद्धा)

31 Ś2 missing (cf v 1 6) G2 M3-5 om 31 (cf v 1 21) —a) G1 M1. 2 यौधान् (for यो°) —b) Ś1 K1 3 D3. 4 G5 सद्विपाश्व, Dc1 °पाश्व (for °पाश्व) D2 G1 M1 2 स (for च) —c) B3 D8-9 एव (for अव) —d) D2 क्रूरो (for क्रुद्धो) B5 समप्रभ (for इव प्रजा)

32 Ś2 missing (cf v 1 6) G2 M3-5 om 32 (cf v 1 21) —a) Ś1 B1-3 D4 संदधद् (for °धन्) B3 विमुचद्वा, T G1 3. 4 M1 2 अमुंचन्वा, G5 विमुंचानां (for विमुञ्चन्वा) — Dn2 om 32c-33c —c) D1 सोऽदृश्यत (for अदृ°) —d) D4 [श]थ (for [श]क्ष) T G3 वा (for च)

33 Ś2 missing (cf. v 1 6) G2 M3-5 om 33 (cf v 1 21) Dn2 om. 33abc (cf v 1 32) —a) D3. 6 अस्यतो (for तस्य तान्) —b) G1 M1 2 दुरानम (for महद्धनु) —c) D4 पाण्डवश्रेष्ठो, T G1. 3-5 °वश्रेष्ठस्, M1. 2 °वज्येष्ठस् (for °वो ज्येष्ठस्) —d) D2 कार्मुकं (for मारिष) Dn2 भल्लाभ्यामच्छिनद्धनु — For 33, B (except B1) Dc1 subst

733* अजस्रं मण्डलीभूतं ददृशुः समरे जनाः ।
ततो युधिष्ठिरो राजा भल्लाभ्यामच्छिनद्धनु ।
तव पुत्रस्य कौरव्य यतमानस्य संयुगे ।

34 Ś2 missing (cf. v 1 6) G2 M3-5 om 34 (of v 1 21) —a) K5 B Dc1 Dn D1 4 5 7 8 G1 M1. 2 दशभि, T G5 बहुधा, G3 4 विविधा (for बहुभि°) —b) K4 5 Dn1 D1 3. 5 6 T अन्यै (for अस्तै°) B1-3 Dc1 Dn2 शरोत्तमै, D5 शिलाशितै (for शितै शरै°) —c) K1 3 4 G1 M1 2 वर्मण्याशु, K5 D1 7 8 मर्मा ण्याशु; B Dc1 Dn2 D1 G3 वर्म चाशु; D2 वर्म चास्य; D8 वर्मणा च, D6 वर्माण च (for वर्माण्याशु) B1-3 Dc1 T G3-5 तदासाद्य (for समा°) —d) B1 D1 भित्त्वा (for भग्ना)

35 Ś2 missing (cf v 1 6) G2 M3-5 om 35 (cf v 1 21) —c) Dc1 वीरे (for देवा) —d) Ś1 तदा, B Dc1 Dn2 पुरा (for मुदा) Ś1 Dn1 G1 M1 2 सहर्षिभि, B1-4 Dc1 महर्षय., B5 महर्षिणा, D6 प्रहर्षिता (for महर्षिभि)

36 Ś2 missing (cf v 1 6) G2 M3-5 om. 36 (cf. v 1 21) —b) D3. 6 आयम्य (for आदाय) — For 36ab, B (except B4) Dc1 subst

734* ततोऽन्यद्धनुरादाय तव पुत्र प्रतापवान् ।
[ B1 अथ (for ततो) ]

—d) K1 क्रूर (for ब्रुवन्)

37 Ś2 missing (cf v 1. 6) G2 M3-5 om 37 (cf v 1 21) —a) Dn3 राजा (for राजंस) B Dc1 तमायातमभिप्रेक्ष्य, D2 T G1 3-5 M1 2 तमेव (D2 तदैवं, T तथैवं, G3 4 तथैव) वादिनं दृष्ट्वा —b) B (except B1) Dc1 T G1 3-5 M1 2 महामृधे (for °रथम्) —c) B1 स, G1 M1 2 ते (for प्र-) —d) G1 M1 2 राज (for जय-) Ś1 गृद्धिण

38 For the repetition in T G1 3-5 M1 2, cf v 1 20 Ś2 missing (cf v 1. 6) G2 M1 5 om 38ab, M3 om 38 (for all, cf v 1 21) —b) D2 परीप्सुन् B1 2 4 Dn2 D7 8 T G3-5 पार्थिवं, D2 पार्थिवान्, D5 पार्थिव (for पाण्डवम्) —c) K3-5 B1 Dn D2 4 5 7 8 T G1 6 M1. 2 (last six second time) षड्वा (D1 °पा )तोद्ध (D1 °द्धु )तान्मेघा( Dn2 °न्वेगा )न्, D1 6 संदधारोद्धतान्वे गान् —d) Dn2 D3 6 जलदान्, D1 सजलाम्, D7 8 सबलान् (for सज°) B (except B1) Dc1 गिरिरश्मसुचो यथा, T G1 (all first time) 2 3-5 M1. 2 (last five first time) 3-5 विकिरन्नश्मिमानिव; T G1 2-5 M1 2 (all

चण्डवातोद्धुतान्मेघान्सजलानचलो यथा ॥ ३८
तत्र राजन्महानासीत्संग्रामो भूरिविर्धनः ।
रुद्रस्याक्रीडसंकाशः संहारः सर्वदेहिनाम् ॥ ३९

C. 7. 501; B. 7. 124; K. 7. 124

इति श्रीमहाभारते द्रोणपर्वणि शततमोऽध्यायः ॥ १०० ॥

second time) गिरिमंबुमुचो यथा — T G1 3-5 M1 2 ins after the first occurrence of 38$^{cd}$ G2 M3 5 after 38$^{cd}$ M3 after 20

735* तथा तव महत्सैन्य तत्रारोचत तापयन् ।
संप्रहृष्टस्तु सहसा तव सैन्यार्णवं प्रति ।
लोळयन्सर्वतो गत्वा समुद्रं मकरो यथा ।

[ (L 1) M3 om. from तथा up to सप्र (in the prior half of line 2) G1 M (M3 om.) ध्यरो चत स पात (G1 M1, 2 ताप) यन् (for the post half) — (L 2) G1 M सप्र (M3 om सप्र) विष्टस् (for °हृष्टस्) T2 G3-5 स (for तु) G1 M प्रमु (for प्रति) — (L 3) G3-5 लोळयन् (for लोळ°) ]

39 For the repetition in T G1 3-5 M1 2, of v 1. 20 Ś1 missing (cf v 1 6) —$^{a}$) K1 महाराजन् (for महानासीत्) —$^{b}$) D1, 7 संग्रामे (for °मो) K5 B1 D7 भूमि, D2 3 6 मय, T (both times) G2 3 4 (last two both times) 5 (first time) मीति-; M3-5 भूति, Cd भूरि (as in text) B1 (marg as in text) 3 5 Do1 G1 M1 2 (last three both times) सग्रामो लो (G1 M1, 2 रो) महर्षण, D5 मोरिजनक्षय — K4 B Do1 Dn2 D1-3 5 6 S ins after 39$^{ab}$

736* पाण्डवानां महाबाहो तावकानां च संयुगे ।

[ T G1, 2 M1, 2 पांडवस्य, M3-5 अर्जुनस्य (for पाण्डवानां) M3-5 महाबाहोस् (for °बाहो) T G1 2 M1 2 दारुण; M3-5 धन्विनां (for सयुगे) ]

—$^{c}$) B Do1 Dn2 G1 M1 2 (last three both times) सहसा (for -संकाश) K4 D2 रुद्रस्याक्रीडयामास (D2 °नमिव) Cd cites रुद्राक्रीड° —$^{d}$) D1 5 7 8 प्रहार (for सं) — K4 B Do1 Dn1 D1-3, 5 6 G2 M3-5 ins after 39 T G1, 3-5 M1 2 after the first occurrence after 39 G3-5 (also) after the second occurrence of 39

737* ततः शब्दो महानासीत्पुनर्येन धनंजयः ।
अतीव सर्वशब्देभ्यो लोमहर्षकरः प्रभो ।
अर्जुनस्य महाबाहो तावकानां च धन्विनाम् ।
मध्ये भारतसैन्यस्य माधवस्य महारणे ।
द्रोणस्यापि परैः सार्धं व्यूहद्वारे महारणे । [5]
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।
क्रुद्धेऽर्जुने तथा द्रोणे सात्वते च महारथे ।

[ T G1 M1 2 read lines 1-2 and 6-7 twice —(L 1) G3-5 (all second time) तत्र, M1 2 (both both times) यत (for तत ) D3 6 पुनर्मत्र, D5 पुन युंद्धे, T G1 (all both times) 2 3-5 (last three first time) M1 2 (last two both times) प्रायायत्र, G3-5 (all second time) M3-5 यानो यत्र (for पुनर्येन) D5 निवर्तता (for धनंजय) —(L 2) K4 सैन्यानां, D3 6 शब्दानां (for -शब्देभ्यो) G2 3-5 (last three second time) रोमहर्षप्रदो भृश (for the post half) — For line 2, T G1 (all both times) 3-5 (last three first time) M1 2 (both both times) 3-5 subst

738* तत्र स कदन घोर वर्तते पाण्डुपूर्वज ।

— G2 3-5 (last three second time) om lines 3-5 — (L 3) M3-5 पाढवस्य (for अर्जुनस्य) Do1 महाशब्दो, T G1 M1, 2 बाहोस् M3-5 कौरवाणां च दारुण (M5 °ण) (for the post half) — (L 4) B2 महामृधे, G1 M1, 2 तदा रणे (for महारणे) — (L 5) T G1 2-5 M सुदारुण (M3-5 °णा) (for महारणे) — (L 6) K4 एव (for एष) D2 समाने (for पृथिव्या) — (L 7) G1 M1 2 (all both times) तदा (for तथा) B1 सतानां च, G1 M1 2 (all both times) 3-5 सत्यकेन, G2 3-5 (last three second time) सात्यकेन (for सात्वते च) ]

*Colophon* Ś2 missing — *Sub parvan* Ś1 K1-4 B1 5 D जयद्रथवध — *Day of Droṇa's Generalship* K2 3 चतुर्थेदिवसे; G5 चतुर्थेह्नि — *Adhy name* Ś1 K1-4 B Do1 Dn D1, 2 5 7 8 सात्यकिप्रवेश, G1 4 5 M सात्यकिप्रवेश समास; Bom ed सात्यकिप्रवेशे संकुलयुद्ध — *Adhy no* (figures, words or both) B1 T G2-4 122, B2 123, Dn1 124; D2 128, D3 21, G1 M 121, G5 118. — *Śloka no*, Do1 46, G5 50,

# १०१

संजय उवाच ।

अपराह्णे महाराज संग्रामः समपद्यत ।
पर्जन्यसमनिर्घोषः पुनर्द्रोणस्य सोमकैः ॥ १
शोणाश्वं रथमास्थाय नरवीरः समाहितः ।
समरेऽभ्यद्रवत्पाण्डूञ्जवमास्थाय मध्यमम् ॥ २
तव प्रियहिते युक्तो महेष्वासो महाबलः ।
चित्रपुङ्खैः शितैर्बाणैः कलशोत्तमसंभवः ॥ ३
वरान्वरान्हि योधानां विचिन्वन्निव भारत ।
अक्रीडत रणे राजन्भारद्वाजः प्रतापवान् ॥ ४
तमभ्ययाद्बृहत्क्षत्रः केकयानां महारथः ।
भ्रातॄणां वीरपञ्चानां ज्येष्ठः समरकर्कशः ॥ ५
विमुञ्चन्विशिखांस्तीक्ष्णानाचार्यं छादयन्भृशम् ।
महामेघो यथा वर्षं विमुञ्चन्गन्धमादने ॥ ६
तस्य द्रोणो महाराज स्वर्णपुङ्खाञ्शिलाशितान् ।
प्रेषयामास संक्रुद्धः सायकान्दश सप्त च ॥ ७
तांस्तु द्रोणधनुर्मुक्तान्घोरानाशीविषोपमान् ।

## 101

1 Ś2 missing up to काले (in 44^d) (cf. v 1 7 100 6) — ^a) Some MSS अपराह्ले, D8 अपराह्ले तु — ^b) B1-3 5 Dc1 Dn1 संग्राम सुमहानभूत् — ^d) B5 D3 5 सायकै (for सोमकै)

2 Ś2 missing (cf. v 1 1) — ^a) K2 3 शोणाश्वो, D2 शोणाश्व- (for °श्व) — ^b) D7 नरवीरान्, D8 नृवीरान्स (for नरवीर) Ś1 K1-3 नरवीरसमाहितं — ^c) B3 व्यद्रवत् (for ऽभ्य°) K5 द्रोणो (for पाण्डून्) — ^d) Dn1 भारद्वाज प्रतापवान् (= 4^d)

3 Ś2 missing (cf. v 1 1) — ^ab) D4 प्रिये (for प्रिय) B1-3 Dc1 Dn1 महारथ (for महाबल) G1 M विमुंचन्विशिखांस्तीक्ष्णान्भारद्वाजो महारथ — ^c) D2 हेमपुखै (for चित्र°) K4 D4 7 8 सितैर् (for शितैर्) — ^d) T G3. 4 अर्दयन्कलशोद्भवै (G4 °व), G2 जघान कलशोद्भव Cd as in text — T G2-5 ins after 3 G1 M subst for 3^cd

739* जघान सोमकाश्राजन्सृञ्जयान्केकयानपि ।

[ T G2 transp सोमकान् and केकयान् G1 M1 2 पांडवान् (for केकयान्) ]

4 Ś2 missing (of v 1 1) — ^a) T G3 4 M4 5 परान्वरान्, G1 2 M1 2 प( G2 व )रान्परान् (for वरान्वरान्) K5 D5 योधान्वै, D7 8 योधाश्च, G1 M1-4 यौधानां (for यो°) — ^b) D6 विचिन्वंति च भारत, G1 M प्रचरन्नथ ब्राह्मण — ^c) K3-5 B4 Dn D1 3-8 आक्रीडत (for अक्री°) B1-3 5 Dc1 क्रीडन्निव रणे द्रोणो, S विक्रीड समरे राजन् — ^d) B1-3. 5 Dc1 जघानारीन्वरान्वरान्, G1 M गवा मध्ये वृषो यथा

5 Ś2 missing (of v 1 1) — ^a) B बृहत्क्षेत्र (for °क्षत्र) — ^b) K4 Dn1 D1 3 6 कैकेयाना, K5 B6 Dc1 D2. 4 5 8 कैकयाना (for केक°) — After 5^ab, G1 M ins

740* भ्रातॄणां पञ्चमो ज्येष्ठ स्पर्धमानो महारथ ।

— ^c) A few MSS भ्रातृणा B1-3 D1 नृपपचानां, B4 Dc1 D3-6 पंचवीराणां (for वीरपञ्चानां) Dn1 कैकेयानां स वै ज्येष्ठ — ^d) B1 3 4 Dn1 G1. 5 M1 2 श्रेष्ठ. (for ज्येष्ठ) D2 -दुर्जय (for -कर्कश)

6 Ś2 missing (of v 1 1) — ^b) K4 आचार्ये K4 छादयद्; B1 4 5 S चार्दयद् (for छादयन्) D1 शरै (for भृशम्) B2 3 Dc1 आचार्यं भृशमार्दयत् — ^c) K3 यथा (for महा) K5 S (except G5) वृष्टिं (for वर्षं) — ^d) G1 M मुचते (for विमुञ्चन्) Dc1 गधं मादन

7 Ś2 missing (cf v 1 1) — ^a) D2 तस्मै (for तस्य) — ^b) K1 om. शिला K4 5 D5 6-8 शिला मितान् — ^d) K B3-5 Dc1 Dn1 D1 पञ्च च, B1 (marg as in text) 2 (marg) सप्तभि, T G3 चाष्टभि, G1 2 4 5 M चाष्ट च (for सप्त च)

8 Ś2 missing (cf v 1 1) — ^a) K3 5 B3 4 विनिर्मुक्तान् (for -धनुर्मु°) — ^b) K5 B1 (orig) 4 Dn2 D1 5 7 8 शरान् (for घोरान्) K5 D5 आसी (for आशी) B1 (marg) 2 3 5 Dc1 क्रुद्धाशीविषसंनिभान् — Dn1 om 8^c-10^b — ^c) B1-4 Dc1 Dn2 पंचभिर् (for दश भिर्) — ^d) D6 विव्याध (for चिच्छेद) K1-3 D1

एकैकं दशभिर्बाणैर्युधि चिच्छेद हृष्टवत् ॥ ८
तस्य तल्लाघवं दृष्ट्वा प्रहसन्द्विजसत्तमः ।
प्रेषयामास विशिखानष्टौ संनतपर्वणः ॥ ९
तान्दृष्ट्वा पततः शीघ्रं द्रोणचापच्युताञ्शरान् ।
अवारयच्छरैरेव तावद्भिर्निशितैर्दृढैः ॥ १०
ततोऽभवन्महाराज तव सैन्यस्य विस्मयः ।
बृहत्क्षत्रेण तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ ११
ततो द्रोणो महाराज केकयं वै विशेषयन् ।
प्रादुश्चक्रे रणे दिव्यं ब्राह्ममस्त्रं महातपाः ॥ १२
तदस्त्रं राजन्कैकेयः प्रत्यवारयदच्युतः ।
ब्राह्मेणैव महाबाहुराहवे समुदीरितम् ॥ १३
प्रतिहन्य तदस्त्रं तु भारद्वाजस्य संयुगे ।
विव्याध ब्राह्मणं षष्ट्या स्वर्णपुङ्खैः शिलाशितैः ॥ १४
तं द्रोणो द्विपदां श्रेष्ठो नाराचेन समर्पयत् ।
स तस्य कवचं भित्त्वा प्राविशद्धरणीतलम् ॥ १५
कृष्णसर्पो यथा मुक्तो वल्मीकं नृपसत्तम ।
तथाभ्यगान्महीं बाणो भित्त्वा कैकेयमाहवे ॥ १६
सोऽतिविद्धो महाराज द्रोणेनास्त्रविदा भृशम् । C 7 503 B 7 125 K 7 125

---

भारत, D8 सायकान् (for हृष्टवत्)

9 Ś2 missing (cf v l 1) Dn1 om 9 (cf v l 8) —$^{a}$) B Do1 S तद् (G1 स त) स्य (for तस्य तल्) —$^{b}$) K4 B Do1 D1 प्रहस्य, D3 सहसा (for प्रहसन्) B2 3. 5 Do1 D1 -पुंगव (for -सत्तम') —$^{d}$) Ś1 पर्वणां — For $9^{cd}$, G1 M subst

741* प्रेषयत्स शरानष्टौ सहस्र च पुन पुन ।

10 Ś2 missing (cf v l. 1) Dn1 om $10^{ab}$ (cf v l 8) —$^{a}$) G1 M सहसा (for तान्दृष्ट्वा) K3 पततं B Do1 Dn2 D1. 3 6 तूर्णं, T G2–5 शीघ्रान्, G1 M सर्वान् (for शीघ्रं) —$^{c}$) D2 बृहत्क्षत्रस् (for शरैरेव) G1 M शितै (M5 शरै) र्वारितवान्राजस् —$^{d}$) B1–3 5 Do1 मृधे, B4 D2 4 6–8 S शरै (for दृढै) D8 नवभिर्निशितैर्दृढं

11 Ś2 missing (cf. v l 1) —$^{a}$) G1 M1 2 तत्र (for ततो) —$^{b}$) Ś1 K Dn1 D1. 3 5–8 पुत्रस्य (for सैन्यस्य) B3 4 सैन्यस्य तव विस्मय — D6 om $11^{c}$–$12^{b}$ —$^{cd}$) B1 3. 5 बृहत्क्षेत्रेण; G4 रक्षत्रस्य (for रक्षत्रेण) B3 transp कर्म and दृष्ट्वा

12 Ś2 missing (cf. v l 1) D6 om $12^{ab}$ (cf v l 11) —$^{b}$) K2 5 Dn D1–5 8 कैके (D1 3 क) यं वै (D3 च); B1–3 5 Do1 बृहत्क्षे (Do1 रक्ष) त्रं, T G3 4 M3–5 केकयान्वै; G1 M1 2 केकय स (for 'य वै) —$^{c}$) Ś1 K1–4 D (except Do1) ततो, K5 महद् (for रणे) —$^{d}$) K1–3 मस्त्रं ब्राह्मं (by transp), D5 6 ब्राह्मयमस्त्र B Do1 सुदुर्जय (for महातपा)

13 Ś2 missing (cf v l 1) —$^{c}$) K2 Dn1 D4 5 ब्राह्मणैव (for ब्राह्मे) —$^{d}$) D3 आहवे समुदाहृत — For $13^{cd}$, G1 M subst

742* ब्राह्मेणास्त्रेण तन्मुक्त ब्राह्ममस्त्रं विशा पते ।

14 Ś2 missing (cf v l 1) —$^{a}$) K1 Dn1 प्रतिहन्यत्, D2 S प्रतिहत्य (for हन्य) G1 M ततस्त (for तदस्त्रं) — For $13^{a}$–$14^{b}$, B (except B4) Do1 subst

743* कैकेयोऽस्त्र समालोक्य मुक्त द्रोणेन संयुगे ।
ब्रह्मास्त्रेणैव राजेन्द्र ब्राह्ममस्त्रमशातयत् ।
ततोऽस्त्रे निहते ब्राह्मे बृहत्क्षत्रश्च भारत ।

[ (L 1) B1 केकयोस्त्र (for कैकेयोऽस्त्र) B5 युक्त (for मुक्त) —(L 3) B1 3 5 बृहत्क्षेत्रश्च (for बृहत्क्षत्रश्च) ]

—$^{c}$) T G2 विव्याथ —$^{d}$) T G1–4 M1 2 हेम, M3–5 रुक्म (for स्वर्ण) K4 5 Do1 Dn1 D4 8 शिलासितै

15 Ś2 missing (cf v l 1) K4 Do1 om (hapl) $15^{a}$–$18^{b}$ B3 reads 15–18 on marg —$^{a}$) D4 5 7 8 द्विषतां (for द्विपदां) D5 श्रेष्ठं (for श्रेष्ठो) —$^{b}$) Ś1 K1 2 समार्दयत्, K3 B Dn D1. 2 4 समार्पयत् (for समर्प) —$^{c}$) B2 तस्य तत् (for स तस्य) —$^{d}$) D7 8 धरणीतले (for तलम्)

16 Ś2 missing (cf v l 1) K4 Do1 om 16 (cf v l 15) B3 reads 16 on marg B3 reads $16^{ab}$ twice. —$^{a}$) B3 (second time) 5 महाहिरिव वल्मीक —$^{b}$) B3 (second time) 5 त्रासितो, T G3 4 वल्मीकान् (for वल्मीकं) G1 M वल्मीकं प्राविशन्नृप —$^{c}$) B3 Dn1 D2 4 5 7 8 ततो (for तथा) B2 4 5 Dn2 S (except M1 2) [अ]त्यगान् (for [अ]भ्य) —$^{d}$) B3 क्षिप्र (for भित्त्वा) Ś1 T G2 3 केक (Ś1 के) यम्, D2 7 कैकयम् (for कैके) G1 M1 2 आशुग (for आहवे)

क्रोधेन महताविष्टो व्यावृत्य नयने शुभे ॥ १७
द्रोणं विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ।
सारथिं चास्य भल्लेन बाह्वोरुरसि चार्पयत् ॥ १८
द्रोणस्तु बहुधा विद्धो बृहत्क्षत्रेण मारिष ।
असृजद्विशिखांस्तीक्ष्णान्केकयस्य रथं प्रति ॥ १९
व्याकुलीकृत्य तं द्रोणो बृहत्क्षत्रं महारथम् ।
व्यसृजत्सायकं तीक्ष्णं केकयं प्रति भारत ॥ २०
स गाढविद्धस्तेनाशु महाराज स्तनान्तरे ।
रथात्पुरुषशार्दूलः संभिन्नहृदयोऽपतत् ॥ २१
बृहत्क्षत्रे हते राजन्केकयानां महारथे ।
शैशुपालिः सुसंक्रुद्धो यन्तारमिदमब्रवीत् ॥ २२
सारथे याहि यत्रैष द्रोणस्तिष्ठति दंशितः ।

---

17 Ś2 missing (cf v l 1) K4 Dc1 om 17 (cf v l 15) B3 reads 17 on marg — $^{b}$) D2 4 5 अस्त्रविदा (D5 °भृता) D3 वर, T G2 5 दृढं (for मृधाम्) B (except B4) कैकेयो द्रोणसा( B2 5 °शा )यकै

18 Ś2 missing (cf v l 1) K4 Dc1 om 18$^{ab}$ (cf. v l 15) B3 reads 18 on marg — $^{a}$) T G2 विव्याथ T G3 4 बाणैश्च, G1 बाणैवै, G5 lacuna (for सप्तत्या) — $^{b}$) G1 M हेम (for स्वर्ण) K5 Dn1 D1 4 8 शिलाशितै — $^{c}$) K5 Dn D3 5 8 G5 भल्लैस्तु, B1 2 (marg as in text) 3. 5 Dc1 बाणेन (for भल्लेन) — $^{d}$) Ś1 K1-3 D1 चार्दयत्, K4 चोद° (for चार्प°) B (except B4) Dc1 भृश मर्मस्वताडयत्

19 Ś2 missing (cf v l 1) — $^{a}$) B2-5 Dc1 बहुभिर्, G1 M1 2 सहसा (for बहुधा) T G3 4 तेन (for विद्धो) — $^{b}$) B1. 3 5 D7 8 बृहत्क्षेत्रेण (for क्षत्रेण) — D1 om 19$^{c}$-20$^{b}$ — $^{c}$) K1 3 Dc1 S (except G2) व्यसृजद् (for असृ°) — D3 6 8 om (hapl) 19$^{d}$-20$^{c}$ — $^{d}$) N (except K1 4, D1 3 6 8 om, Ś2 missing) G1. 3 5 M1 2 कैके( K3 Dc1 D7 °क )यस्य (for केक°)

20 Ś2 missing (cf v l 1) D1 om 20$^{ab}$, D3 6 8 om 20$^{abc}$ (for all, cf. v l. 19) — $^{a}$) G1 M1 2 द्रोणस्तु, M3-5 तु रणे (for तं द्रोणो) — $^{b}$) B1 3-5 बृहत्क्षेत्र D2 महाबल (for °रथम्) — After 20$^{ab}$, Dn1 reads 21 and 22$^{ab}$ (transposed) for the first time, repeating the same in the proper place B1 3 5 Dc1 ins after 20$^{ab}$ B2 Dn1 after 20

744* अश्वाश्चतुर्भिर्न्यवधीच्चतुरोऽस्य पतत्रिभि ।
सारथि चास्य बाणेन रथनीडादपाहरत् ।
द्वाभ्या ध्वज च छत्र च छित्वा भूमावपातयत् ।

[ Dn1 reads line 1 after 21 — (L 2) B2 सूत चैकेन बाणेन (for the prior half) B1-3 अपातयत् (for हरत्) — B2 om (hapl) line 3 ]

— B1. 3 5 Dc1 om. 20$^{cd}$ — $^{c}$) B2. 4 Dn D2 सा( B2 शा )यकास्तीक्ष्णान् — $^{d}$) K4 5 B3 4 Dn D1-6 कैकेयं, D7 8 कैकयं (for केकय) — For 20$^{cd}$, S subst

745* व्यसृजत्सर्वतो बाणान्केकयस्य विमोहनात् ।
[ G5 कैकयस्य G3 4 विमोहनान् ]

— After 20, S ins

746* तमविध्यत्पृषत्केन द्रोणो राजन्स्तनान्तरे ।
भ्रातृणा पञ्चमो ज्येष्ठो महाबलपराक्रम ।

[ (L 1) T G2 5 पृषत्केण — (L 2) G5 M3-5 श्रेष्ठो (for ज्येष्ठो) M -5 om the post half ]

21 For the repetition in Dn1, cf v l 20 Ś2 missing (cf v l. 1) M3-5 om 21$^{abc}$ — $^{c}$) Dn1 (first time) D1 G1 M1 2 तथा (for रथात्) G2 शार्दूल (for °ल) — For 21$^{abc}$, B (except B4) Dc1 Dn1 (second time) subst

747* ततः साधुविसृष्टेन नाराचेन द्विजर्षभ ।
हृद्यविध्यद्बृहत्क्षत्र

[ (L 1) Dn1 द्विजपम — (L 2) B (except B4) बृहत्क्षेत्र ]

— $^{d}$) B1 2 Dn2 D2-3 स भिन्न, B3-5 Dc1 Dn1 (second time) S स छि( S संछि )न्न (for संभिन्न)

22 For the repetition in Dn1, cf v l 20 Ś2 missing (cf v l 1) — $^{a}$) B (except B2) D5 बृहत्क्षेत्रे — $^{b}$) K4 5 B3 Dn1 (both times) D2-6 G1 M1 2 कैकेयाना, B2 D5 कैक° (for केक°) D3 महा रणे (for रथे) — $^{c}$) Ś1 शैशुपाल, G1 M धृष्टकेतु B Dc1 Dn D1 अभि( B1 2 ति )क्रुद्धो, D7 8 तु स, D7 स स° (for सुस°)

23 Ś2 missing (cf v l 1) Before 23, M3-5 ins. धृष्टकेतु — $^{a}$) T G3 transp याहि and यत्र D2 यत्रैव, D1 तत्रैव (for यत्रैष) — $^{b}$) K2-4 D1 S दमित — $^{c}$) K5 D (except Dn1) कैकयान् (for केक°). — $^{d}$) Bom. ed पञ्चालानां

विनिघ्नन्केकयान्सर्वान्पाञ्चालानां च वाहिनीम् ॥ २३
तस्य तद्वचनं श्रुत्वा सारथी रथिनां वरम् ।
द्रोणाय प्रापयामास काम्बोजैर्जवनैर्हयैः ॥ २४
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
सहसा प्रापतद्द्रोणं पतंग इव पावकम् ॥ २५
सोऽभ्यविध्यत्ततो द्रोणं षष्ट्या साश्वरथध्वजम् ।
पुनश्चान्यैः शरैस्तीक्ष्णैः सुप्तं व्याघ्रं तुदन्निव ॥ २६
तस्य द्रोणो धनुर्मध्ये क्षुरप्रेण शितेन ह ।
चिच्छेद राज्ञो बलिनो यतमानस्य संयुगे ॥ २७
अथान्यद्धनुरादाय शैशुपालिर्महारथः ।
विव्याध सायकैर्द्रोणं पुनः सुनिशितैर्दृढैः ॥ २८
तस्य द्रोणो हयान्हत्वा सारथिं च महाबलः ।
अथैनं पञ्चविंशत्या सायकानां समार्पयत् ॥ २९
विरथो विधनुष्कश्च चेदिराजोऽपि संयुगे ।
गदां चिक्षेप संक्रुद्धो भारद्वाजरथं प्रति ॥ ३०
तामापतन्तीं सहसा घोररूपां भयावहाम् ।
अश्मसारमयीं गुर्वीं तपनीयविभूषिताम् ।
शरैरनेकसाहस्रैर्भारद्वाजो न्यपातयत् ॥ ३१
सा पपात गदा भूमौ भारद्वाजेन सादिता ।
रक्तमाल्याम्बरधरा तारेव नभसस्तलात् ॥ ३२ C 7 1 / B 7 1 / K 7 1

---

24 Ś$_2$ missing (cf v l. 1) Before 24, S (except T G$_3$) ins संजय —$^{b}$) M$_3$ वर (for वरम्) —$^{c}$) B$_3$ G$_2$ द्रोणाय प्रेषयामास, G$_1$ M प्रापयामास द्रोणाय —$^{d}$) Ś$_1$ K$_4$ D$_1$ काम्बोजैर्

25 Ś$_2$ missing (cf. v l 1) —$^{a}$) G$_1$ M तु (for च) —$^{b}$) Ś$_1$ °बलोद्धत, K$_{1-4}$ D$_{1\ 7\ 8}$ बलोर्जित, D$_2$ °बलो मत, D$_5$ °बलोचित, G$_1$ M बलो रथी (for बलोदित) —$^{c}$) K$_3$ प्रणमद्, D$_{3.6}$ प्राद्रवद् (for प्रापतद्) B Dc$_1$ Dn$_1$ D$_2$ S वधायाभ्यद्रवद्द्रोणं — D$_2$ reads 25$^{d}$ and 26$^{a}$ (transposed) twice

26 For the repetition in D$_2$, cf v l 25 Ś$_2$ missing (cf v l. 1) —$^{a}$) K$_3$ D$_5$ [ऽ]त्य(D$_5$ °प्य) विध्यत्, G$_5$ ऽभिवि (for ऽभ्यवि°) B Dc$_1$ Dn D$_2$ (both times) सोवि(D$_2$ सोव)ध्यत तदा (D$_2$ रणे) द्रोणं; G$_1$ M सोविध्यद्ब्राह्मणं षष्ट्या —$^{b}$) Ś$_1$ K D$_{1\ 3-8}$ च स (for साश्व) T$_2$ G$_{2-5}$ द्विप (for ध्वजम्) D$_2$ षष्ट्या साश्वं ससारथिं; G$_1$ M साश्वसूतरथध्वजं (G$_1$ M$_{1\ 2}$ द्विप) —$^{c}$) D$_5$ T G$_{3\ 4}$ अन्यै (for चान्यै°) Ś$_1$ तीक्ष्ण (for तीक्ष्णै) —$^{d}$) Dc$_1$ सुप्त (for सुप्तं) Ś$_1$ K$_{1,\ 2\ 4}$ D$_1$ व्यालं (for व्याघ्रं) K$_5$ G$_5$ नुदन्निव, D$_4$ तु दति वत् (for तुदन्निव)

27 Ś$_2$ missing (cf v l 1) —$^{b}$) K$_{4\ 5}$ Dn$_2$ D$_{4\ 7\ 8}$ सि(D$_4$ श)तेन (for शि) K$_5$ हि; B (except B$_1$) D$_{4\ 5\ 7\ 8}$ T G$_{2-5}$ च (for ह) G$_1$ M क्षुरप्रेण समाच्छिनत् —$^{c}$) D$_2$ T G$_{3\ 8}$ राजन्, G$_{4\ 5}$ राजा (for राज्ञो) B$_{1-3\ 5}$ Dc$_1$ Dn$_1$ चकर्त गार्ध्रपत्रेण G$_1$ M क्षिप्रं राजन्बलवतो —$^{d}$) B$_{1-3\ 5}$ Dc$_1$ Dn$_1$ Cd शुष्मिण (for संयुगे)

28 Ś$_2$ missing (cf v l. 1) —$^{a}$) D$_4$ तथा; G$_1$ M$_{1\ 2}$ ततो, M$_{3-5}$ हित्वा (for अथ) —$^{b}$) G$_1$ M धृष्टकेतुर् (for शैशुपालिर्) —$^{c}$) T G$_2$ विव्याध B$_{3\ 4}$ शायकैर् —$^{d}$) K$_2$ lacuna, Dn$_2$ D$_{3\ 6}$ तु, D$_{2\ 5}$ स, D$_{1\ 7\ 8}$ स (for सु) K$_5$ T G M$_{3-5}$ दृढ, B$_4$ Dn$_2$ D$_{3\ 6}$ शरै, M$_{1\ 2}$ भृश (for दृढै) B$_{1-3\ 5}$ Dc$_1$ Dn$_1$ Bom ed कङ्कबर्हि(Dn$_1$ र्ह)णवाजिभि (Bom ed °तै), D$_1$ पुन सुनिशितेन ह

29 Ś$_2$ missing (cf v l 1) —$^{a}$) K$_4$ D$_1$ G$_5$ विद्ध्वा (for हत्वा) —$^{b}$) B$_4$ महारथ (for °बल) B$_{1-3\ 5}$ Dc$_1$ Dn$_1$ चतुर्भिश्चतुर शरै — After 29$^{ab}$, B (except B$_4$) Dc$_1$ Dn$_1$ ins

748* सारथेश्च शिर कायाच्चकर्त प्रहसन्निव ।

—$^{d}$) Ś$_1$ K$_{1-4}$ D$_{1\ 8}$ समर्द(D$_8$ र्ज)यत्, B$_3$ Dc$_1$ D$_{2\ 6}$ समर्पयत्, S समाचिनोत् (for °र्पयत्)

30 Ś$_2$ missing (cf v l 1) —$^{b}$) B$_4$ Dn$_2$ च; D$_2$ [ऽ]थ (for ऽपि) D$_{3\ 6}$ चेदिनाथो विसंयुगे —$^{c}$) D$_4$ चिच्छेद (for चिक्षेप) T सभ्रातो, G$_{2-5}$ सभ्रांतो (for संक्रुद्धो) — For 30, B$_{1-3\ 5}$ (marg as in text) Dc$_1$ Dn$_1$ subst

749* अवप्लुत्य रथाच्चैद्यो गदामादाय सत्वर ।
भारद्वाजाय चिक्षेप रुषितामिव पन्नगीम् ।

31 Ś$_2$ missing (cf. v l 1) —$^{a}$) B$_{1-3}$ आलोक्य, Dc$_1$ Dn$_1$ आसाद्य (for सहसा) —$^{b}$) G$_2$ दुरासदां, G$_{4\ 5}$ भयापहा (for °वहाम्) B$_{1-3}$ Dc$_1$ Dn$_1$ कालरात्रिमिवोद्यतां —$^{f}$) B$_{1-3}$ Dc$_1$ Dn$_1$ [ऽ]च्छिनच्छितै°, Dn$_2$ D$_{3\ 6}$ न्यवारयत्, G$_2$ न्यषेधयत् (for न्यपातयत्)

32 Ś$_2$ missing (cf v l 1) —$^{a}$) G$_1$ M तदा (for गदा) B (except B$_4$) Dc$_1$ Dn$_1$ सा छिन्ना बहुधा

गदां विनिहतां दृष्ट्वा धृष्टकेतुरमर्षणः ।
तोमरं व्यसृजत्तूर्णं शक्तिं च कनकोज्ज्वलाम् ॥ ३३
तोमरं तु त्रिभिर्बाणैर्द्रोणश्छित्त्वा महामृधे ।
शक्तिं चिच्छेद सहसा कृतहस्तो महाबलः ॥ ३४
ततोऽस्य विशिखं तीक्ष्णं वधार्थं वधकाङ्क्षिणः ।
प्रेषयामास समरे भारद्वाजः प्रतापवान् ॥ ३५
स तस्य कवचं भित्त्वा हृदयं चामितौजसः ।
अभ्यगाद्धरणीं बाणो हंसः पद्मसरो यथा ॥ ३६
पतंगं हि ग्रसेच्चाषो यथा राजन्बुभुक्षितः ।
तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महामृधे ॥ ३७
निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत् ।
अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् ॥ ३८
तमपि प्रहसन्द्रोणः शरैर्निन्ये यमक्षयम् ।
महाव्याघ्रो महारण्ये मृगशावं यथा बली ॥ ३९
तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत ।
जरासंधसुतो वीरः स्वयं द्रोणमुपाद्रवत् ॥ ४०

---

बा( B2 5 Dn1 °भिर्बा )णैद्, D4 पपात गदया भूमौ — b) B (except B4) Dc1 Dn1 मारिष, D2 पातिता, G1 M ताडिता (for सादिता) — c) K1–3 D7 रक्तमाल्याम्बरधरा, B1 गदामासाद्य कौरव्य, B2 3 5 Dc1 Dn1 गदा पपात कौरव्य — d) D7 8 M3–5 च नभस् (for नभसस्) K1–4 D1 2 च्युता, T G2–5 तदा, G1 M स्थलात् (for तलात्) K5 D4 5 तार( D5 °रि )केव नभस्तलात् (D4 °ल), B1–3 5 Dc1 Dn1 ना( B5 सा )द्यंती धरा( B3 रसा )तल

33 Ś2 missing (cf v l 1) — b) T G2–5 महाबल, G1 M महारथ (for अमर्षण) — c) D4 विसृजन् (for व्यसृजत्) B Dc1 Dn1 वीर (for तूर्णं) — d) T G3 शक्तिं च कलितायता, M4 शक्तिं च करकोज्ज्वला

34 Ś2 missing (cf v l 1) — a) D1 तोमरैश् Ś1 K B4 Dn2 D3 6 T G2–5 च (for तु) Ś1 K5 छित्त्वा (for बाणैर्) — b) Ś1 बाणैर्द्रोणो, K5 त्रिभिर्बाणैर्, D7 8 छित्त्वा द्रोणो (by transp) B4 महाहवे, D4 5 7 8 °रथ (for °मृधे) — c) K4 D1 चिक्षेप (for चिच्छेद) B4 5 शतधा, T G2–5 दशधा (for सहसा) — d) K5 G1 M महारथ (for °बल) — For 34, B1–3 Dc1 Dn1 subst

750* तोमरं पञ्चभिश्छित्त्वा शक्तिं चिच्छेद सप्तभिः ।
तौ जग्मतुर्महीं छिन्नौ सर्पाविव गरुत्मता ।

[ (L 1) Dn1 भित्त्वा (for छित्त्वा) Bom ed. पञ्चभि (for सप्त°) ]

35 Ś2 missing (cf v l 1) — a) G1 M अथ (for ततो) D1 चूर्णं (for तीक्ष्णं) — b) B1–4 Dc1 Dn1 वधाय, D3 T G2–5 वधार्थे (for °र्थं)

36 Ś2 missing (cf v l 1) —ab) K5 G2 transp कवच and हृदय — c) S (except G3 4) अत्यगाद्

(for अभ्य°) M3 भित्त्वा (for बाणो) — d) B1–3 Dc1 Dn1 G1 M पद्मवन (for °सरो) — After 36, K4 B3 Dn2 D1 2 5 6 ins

751* स गाढविद्धस्तेनाशु हृदि राजन्महारथ ।
पपात च रथात्तूर्णं धृष्टकेतुर्महायशा ।

[ (L 1) D5 स नाराचेनाभिहतो (for the prior half) — (L 2) B3 Dn2 प्रतापवान् (for महायशा) ]

37 Ś2 missing (cf v l 1) — a) Ś1 पतगो, B5 तदग, D3 6 पन्नग (for पतगं) G5 ग्रसते (for हि ग्रसेच्) Ś1 lacuna, K5 D4 7 8 चामिर्, B1 Dn1 चासौ, Dn2 D3 6 ताक्ष्यौ, D5 व्याघ्रो (for चाषो) K1–4 D1 पन्नगराड्ग्रसेत्सर्पं, B4 G1 M क्षुद्रं पतगं ग्रसते, D2 T G2–4 पतगं ग्रसते राहुर् (D2 सर्पो) — b) B1–3 5 Dc1 Dn1 क्षुद्रं, B4 lacuna, G1 M1 2 व्याळो, M3–5 चापो (for राजन्) — c1) M4 यथा (for तथा) B Dc1 Dn1 D2 T G3–5 M4 महाहवे (for मृधे) G1 M1 2 तथा द्रोणेन संग्रस्तो व्याघ्रेणेव च गोपति

38 Ś2 missing (cf v l. 1) — b) Ś1 K1 3 D1 तत्खड्गं, K5 Dn1 तद्भागं, D4 तत्सुत (for तत्खण्ड) Ś1 (marg) आददत् (for आविशत्) — d) D1 पुत्रे (for पुत्रो)

39 Ś2 missing (cf v l 1) — a) K4 तमथ, K5 त चापि (for तमपि) — c) T G2–5 M3–5 महाव्याळो (for °व्याघ्रो) B4 5 G1 M1 2 यथारण्ये (for महा°) — d) B4 5 G1 M बुभुक्षित (for यथा बली)

40 Ś2 missing (cf v l 1) — b) D6 पाण्डवेषु च भारत — d) B1 4 स्मयन्, S त्वरन् (for स्वयं)

41 Ś2 missing (cf. v l. 1) — a) B4 lacuna, D4 5 7 8 स स (for स तु) B1–3 Dc1 Dn1 महाबाहुर्

स तु द्रोणं महाराज छादयन्सायकैः शितैः ।
अदृश्यमकरोत्तूर्णं जलदो भास्करं यथा ॥ ४१

तस्य तल्लाघवं दृष्ट्वा द्रोणः क्षत्रियमर्दनः ।
व्यसृजत्सायकांस्तूर्णं शतशोऽथ सहस्रशः ॥ ४२

छादयित्वा रणे द्रोणो रथस्थं रथिनां वरम् ।
जारासंधिमथो जघ्ने मिषतां सर्वधन्विनाम् ॥ ४३

यो यः स्म लीयते द्रोणं तं तं द्रोणोऽन्तकोपमः ।
आदत्त सर्वभूतानि प्राप्ते काले यथान्तकः ॥ ४४

ततो द्रोणो महेष्वासो नाम विश्राव्य संयुगे ।
शरैरनेकसाहस्रैः पाण्डवेयान्व्यमोहयत् ॥ ४५

ततो द्रोणाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः ।
नरान्नागान्हयांश्चैव निजघ्नुः सर्वतो रणे ॥ ४६

ते वध्यमाना द्रोणेन शक्रेणेव महासुराः ।
समकम्पन्त पाञ्चाला गावः शीतार्दिता इव ॥ ४७

ततो निष्टानको घोरः पाण्डवानामजायत ।
द्रोणेन वध्यमानेषु सैन्येषु भरतर्षभ ॥ ४८ C 7 B 7 K 7

---

(for °राज) —$^{b}$) G1 M1 2 सादयन् (for छादयन्) K2 4 5 Dn1 D7 8 सितै, D1 शतै, D5 M3–5 शरै (*for* शितै°) B1–3 Dc1 शरधाराभिराद्वते, B5 छादया मास शायकै, D2 सायकैश्छादयन्शितै — K5 om (hapl) $41^{d}$–$42^{c}$

42 Ś2 missing (cf v l 1) K5 om $42^{abc}$ (cf v l 41) —$^{a}$) G1 M स तस्य (for तस्य तल्ल°) — D8 om. (? hapl) $42^{b}$–$43^{a}$ —$^{c}$) D2 असृजत्, D8 6 विसृजन् (for व्यसृजत्) D8 शायकांस् D4 असृजन्सा यकांस्तीमान्

43 Ś2 missing (cf v l 1) D8 om $43^{a}$ (cf v l 42) —$^{a}$) K3 D6 7 द्रोण (for द्रोणो) —$^{b}$) B3 D5 रथस्थो (for °स्थं) D6 वर (for वरम्) —$^{c}$) Ś1 K1 2 4 D1 4–8 T G2 3 5 जरासंधिम् (for जारा°) K5 D2–4, 6 अथाजघ्ने, B1–3 5 Dc1 Dn1 जघानाशु (for अथो जघ्ने) —$^{d}$) G1 M1 (*sup lin*) 2 द्विषतां (for मिषतां)

44 Ś2 missing up to काले (cf. v l 1) —$^{a}$) K2 3 Dn2 D1 5 6 7 द्रोणे, K4 5 D8 द्रोणस् (for द्रोणं) B1–4 Dc1 Dn1 यो यो विनी( B3 योयली, B4 यो निधी, Dc1 Dn1 यो विली )यते तत्र, B5 यो यो विद्ध रणे तत्र; D2 यो यो हि युध्यते तत्र, D4 corrupt, T G2–5 M1 2 यो यो विधीयते स्वस्य( G3, 4 स्वस्तस्, G5 स्वस्त, M1, 2 स्वड ), G1 यो य स्म नीयते तत्र, M3–5 यो यो हि धीयते स्वडस् —$^{b}$) D7 8 स त, G5 lacuna (for त त) D4 तथा परमकोपन, G1 स द्रोणो ऽन्तकोपमः, M3–5 त त कालांतको — Ś1 K1–4 D1 om. (? hapl) $44^{cd}$ —$^{c}$) B4 5 D2 7 8 T G2–4 आदत्ते (for °त्त) —$^{d}$) D4 G3 प्राप्तकाले (for प्राप्ते काले) Ś2 [अं]तको पम (for यथान्तक)

45 $^{a}$) Ś2 K1–3 ततो (for द्रोणो) K5 B Dc1 Dn1 D2 4 S महाराज (for महेष्वासो) —$^{b}$) Dn2 D7 8 साहवे (for संयुगे) — B3 reads $45^{c}$–$46^{d}$ on marg —$^{d}$) B (except B1) Dc1 Dn1 D1 समावृणोत्, D1 व्यपोथयत्, M3–5 विमोहयन् (for व्यमोहयत्)

46 B3 reads 46 on marg —$^{a}$) B4 D2 S ते तु, Dn2 D6 तत्र (for ततो) Ś1 K1–3 D2 4 5 7 8 द्रोणा तिका (Ś1 K2 °काद्) (for द्रोणाङ्किता) Ś2 ततो द्रोणस्य बाणौघा, B1–3 5 Dc1 Dn1 ते तु नामांकिता बाणा —$^{b}$) Ś1 K1 3 lacuna, B2 3 5 Dc1 Dn द्रोणेनास्ता, G1 M हेमपुंखा (for स्वर्ण°) K5 Dc1 D4 8 शिलासिता —$^{c}$) D4 7 8 नरनागान्, D5 रथनाग (for नरान्नागान्) —$^{d}$) K1 विजघ्नु (for नि°) K3 B (except B4) Dc1 Dn1 निजघ्नु शतशो मृधे, S परलोकाय निन्यि( G1 °न्यु )रे

47 $^{a}$) G1 M हन्यमाना (for वध्य°) —$^{b}$) D2 वज्रिणेव (for शक्रेणेव) —$^{c}$) D3 पचाला — B1 reads $47^{d}$–$48^{d}$ on marg —$^{d}$) Dc1 सिंहार्दिता (for शीता°)

48 B1 reads 48 on marg —$^{a}$) D5 द्रोण, T घोरं (for घोर) —$^{c}$) Ś1 वध्यमानस्य, Ś2 K1–4 D1 मानानां, G1 M हन्यमानानां (for वध्यमानेषु) —$^{d}$) Ś1 सैन्यस्य, Ś2 सैन्यानां, K1 पाडूनां, K3 4 D1 शूराणां (for सैन्येषु) K5 om भरतर्षभ — After 48, B1 3 4 Dc1 (marg) D2 ins

752* प्रताप्यमाना सूर्येण हन्यमानाश्च सायकै ।
अन्वपद्यन्त पाञ्चालास्तदा सन्त्रस्तचेतस ।

[ (L 1) B1 reads (on marg) from प्रताप्य up to पाञ्चाला (in line 2) D2 प्रकंपमानास्त्वार्येण (for the prior half) — (L 2) B3 पचालास् (for पाञ्चा°). B1 मानसा (for -चेतस) ]

49 B3 reads 49 on marg —$^{a}$) K5 महवा (for मोहिता) B2 5 बाण (for शर) B Dc1 Dn Ś1

मोहिताः शरवर्षेण भारद्वाजस्य संयुगे ।
ऊरुग्राहगृहीता हि पाञ्चालानां महारथाः ॥ ४९
चेदयश्च महाराज सृञ्जयाः सोमकास्तथा ।
अभ्यद्रवन्त संहृष्टा भारद्वाजं युयुत्सया ॥ ५०
हत द्रोणं हत द्रोणमिति ते द्रोणमभ्ययुः ।
यतन्तः पुरुषव्याघ्राः सर्वशक्त्या महाद्युतिम् ।
निनीषन्तो रणे द्रोणं यमस्य सदनं प्रति ॥ ५१
यतमानांस्तु तान्वीरान्भारद्वाजः शिलीमुखैः ।
यमाय प्रेषयामास चेदिमुख्यान्विशेषतः ॥ ५२
तेषु प्रक्षीयमाणेषु चेदिमुख्येषु भारत ।
पाञ्चालाः समकम्पन्त द्रोणसायकपीडिताः ॥ ५३

प्राक्रोशन्भीमसेनं ते धृष्टद्युम्नरथं प्रति ।
दृष्ट्वा द्रोणस्य कर्माणि तथारूपाणि मारिष ॥ ५४
ब्राह्मणेन तपो नूनं चरितं दुश्चर महत् ।
तथा हि युधि विक्रान्तो दहति क्षत्रियर्षभान् ॥ ५५
धर्मो युद्धं क्षत्रियस्य ब्राह्मणस्य परं तपः ।
तपस्वी कृतविद्यश्च प्रेक्षितेनापि निर्दहेत् ॥ ५६
द्रोणास्त्रमग्निसंस्पर्शं प्रविष्टाः क्षत्रियर्षभाः ।
बहवो दुस्तर घोर यत्रादह्यन्त भारत ॥ ५७
यथाबलं यथोत्साहं यथासत्त्वं महाद्युतिः ।
मोहयन्सर्वभूतानि द्रोणो हन्ति बलानि नः ॥ ५८
तेषां तद्वचनं श्रुत्वा क्षत्रधर्मा व्यवस्थितः ।

-जालेन (for वर्षेण) — b) B Dc1 Dn D1–3 6 T G2–5 M3–5 भारद्वाजेन सयुगे — c) Ś2 B Dc1 Dn1 G3 4 -गृहीताना, K2 -गृहीतानि (for °ता हि) K5 D2 5 7 8 [ह]व, M3–5 च (for हि) — d) B1 2 Dc1 पचालाना K5 D2 4 5 7 8 अनीकिनी (for महारथा)

50 b) K1 सृजय (for सृञ्जया) D2 तदा (for तथा) B (except B1) Dc1 Dn1 सृजया काशिकोश (Dn1 °स)ला — d) K2 3 D1 2 7 8 भारद्वाज (for °द्वाज) T G2–5 युयुत्सव (for °त्सया) — After 50, K4 5 B D ins

753* ब्रुवन्तश्च रणेऽन्योन्य चेदिपाञ्चालसृञ्जया ।

[ B1 रुवतश् (for ब्रुवन्तश्) K5 तथा (for रणे) K4 B5 पचाए, D4 -पाडव (for पाञ्चाल) ]

51 a) B3 D3 6 हतो द्रोणो हतो द्रोण, D4 7 8 हत द्रोण हत द्रोणम्, S ध्नत द्रोण ध्नत द्रोणम् — b) Ś2 इत्येके, D7 8 lacuna K2 इति द्रोण समभ्ययु — c) B (except B1) Dc1 Dn1 ते यततो (Dn1 °ते) नरव्याघ्रा, S ते यतनो यथाशक्ति — d) K4 सर्वतो वा, S व्यथयंतो (for सर्वशक्त्या) Ś K1–4 B4 महाद्युते, B2 (marg) °मृधे, D7 8 °युधि (for °द्युतिम्) — e) K4 B1–4 Dc1 Dn1 निनीषवो, D1 नेनीषतो, G2 निरीक्षतो (for निनीषन्तो) B2 3 Dc1 Dn1 T G2–5 युधि (for रणे)

52 a) G1 M1 2 यतमानस् (for °मानास्) B3 Dc1 Dn1 च (for तु) B1–3 Dc1 Dn1 S शूरान् (for वीरान्) — b) Ś1 शितै शरै, K1 शिलाशितै (for शिलीमुखै) — d) B3 विशां पते, D5 सहसा (for विशेषत)

53 b) B1–3 Dc1 Dn1 D5 S सर्वश (G2 °त) (for भारत) — c) B4 5 D3 6 पचाला — d) B2 3 D3 -शायक

54 a) K5 आक्रोशन्, S प्राक्रोशद् (for °शन्) K5 D3 भीमसेन तु (D3 त), D4 °सेनेन, S °सेनस्तु (for °सेन ते) — b) B Dc1 Dn1 धृष्टद्युम्नं च भारत

55 Before 55, G1 2 5 M ins भीम° — a) Ś1 तथा, D4 7 8 ततो (for तपो) — b) D2 3 7 8 दुष्कर, D4 दुष्कृत (for दुश्चर) Ś K1–4 Dn2 D1 3 5 6 पुरा, D4 7 8 तप (for महत्) — c) K5 B Dc1 Dn D3 6 S संक्रुद्धो (for विक्रान्तो) — d) G1 M दहति क्षत्रपुगवान्

56 a) D4 धर्म (for धर्मो) Ś2 K1–3 युद्ध (sic) (for युद्धं) — b) Dn2 D3 6 महद् (for परं) — d) D4 T G3–5 प्रेषितान (G5 °द)पि, D6 8 M1 2 प्रेषितेनापि (for प्रेक्षि°)

57 a) D4 5 7 8 संपश (for -संस्पर्शं) Dn G2 द्रोणाग्निमस्त्रसस्पर्शं (G2 °सज्ञ च) — b) K1 प्रविष्ट क्षत्रियर्षभ — c) Ś K1–4 D1 विस्तरं (for दु°) — d) G1 M2 दह्यत (for [अ]द°) D3 यत्रादाप्यत मारिष

58 a) B4 om बलं — b) Ś K1–4 यथामत्र, G1 M यथासर्व, G2 यथाशक्ति (for यथासत्त्व) Ś1 यत्नो द्युत, Ś2 K1–3 महाद्युते, B2 यथाद्युति (for महाद्युति) — c) B1 2 S -सैन्यानि (for -भूतानि) — d) Ś K1–4

अर्धचन्द्रेण चिच्छेद द्रोणस्य सशरं धनुः ॥ ५९
स संरब्धतरो भूत्वा द्रोणः क्षत्रियमर्दनः ।
अन्यत्कार्मुकमादाय भास्वर वेगवत्तरम् ॥ ६०
तत्राधाय शर तीक्ष्णं भारघ्नं विमलं दृढम् ।
आकर्णपूर्णमाचार्यो बलवानभ्यवासृजत् ॥ ६१
स हत्वा क्षत्रधर्माणं जगाम धरणीतलम् ।
स भिन्नहृदयो वाहादपतन्मेदिनीतले ॥ ६२
ततः सैन्यान्यकम्पन्त धृष्टद्युम्नसुते हते ।
अथ द्रोणं समारोहच्चेकितानो महारथः ॥ ६३
स द्रोणं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ।
चतुर्भिः सारथिं चास्य चतुर्भिश्चतुरो हयान् ॥ ६४
तस्याचार्यः षोडशभिरविध्यद्दक्षिणं भुजम् ।
ध्वजं षोडशभिर्बाणैर्यन्तारं चास्य सप्तभिः ॥ ६५
तस्य सूते हते तेऽश्वा रथमादाय विद्रुताः ।
समरे शरसंवीता भारद्वाजेन मारिष ॥ ६६
चेकितानरथं दृष्ट्वा विद्रुतं हतसारथिम् ।
पाञ्चालान्पाण्डवांश्चैव महद्भयमथाविशत् ॥ ६७
तान्समेतान्रणे शूरांश्चेदिपाञ्चालसृञ्जयान् । C 7 5.. P 7.1.. K 7.1..

D1 2 4 6–8 च (for न)

59 a) S तस्य (for तेषा) D2 4 5 7 8 तु (for तद्) — b) Ś K D1 G1 M क्षत्रवर्मा, Dc1 Dn1 G4 धर्मे (for °धर्मा) D7 8 धृष्टद्युम्नसुतं स्थित — After 59abc, B Dc1 Dn1 ins

754* क्षत्रधर्मा महाबल ।
क्रोधसंविग्नमनसो

60 a) G1 M सु (for स) T G3 4 भूयो (for भूत्वा) K4 B (except B4) Dc1 Dn1 D2–4 स सरब्ध (B2 रभ)स्ततो भूत्वा (D4 यो) — b) M3 4 पुंगव (for मर्दन) B (except B4) Dc1 Dn1 द्रोण प्रहरतां वर — d) K2 4 D1 भासुरं, D4 भास्कर (for भास्वरं) B1–3 Dc1 Dn1 वेगवद्भारसाधन

61 a) Ś2 K1–4 G3 4 तमादाय, G1 M सधाय च (G1 M1 2 स) (for तत्राधाय) Dn2 D3 6 तीक्ष्णं (for तीक्ष्णं) B1–3 Dc1 Dn1 शर संधाय कालाभं — b) B4 5 S परघ्नं, D6 वीरघ्नं (for भारघ्न) K2 5 D4 5 G1 विपुल, G2 वेगवद् (for विमलं) B1–3 Dc1 Dn1 परानीक विशातन, D2 विमलं विपुलं दृढं — c) Ś1 पूरम् (for पूर्णम्) — d) K1 3 अत्यवासृजत्, D4 अस्य चासृजत् G1 M1, 2 अभिसृष्टवान् — After 61, B (except B4) Dc1 Dn1 ins

755* स जीवितमुपादाय धार्ष्टद्युम्ने शरोत्तम ।
[ Dn1 धृष्टद्युम्ने ]

62 a) Ś K1 4 5 G1 5 M -व(M2 -क)र्माण (for धर्माणं) B (except B4) Dc1 Dn1 आशीविष इव क्रुद्धो — b) D2, 5 6 तले (for -तलम्) — c) B1–3 Dc1 S स(B1–3 Dc1 स)च्छिन्न, D4 8 सभिन्न (for स भिन्न), K5 वेगात् (for वाहाद्) — d) K5 पपात, B2 4 5 Dn2 D5–8 G2 न्यपतन्, D4 आपतन् (for अ°) K1–4 Dn2 D1 6 T G2–5 मेदिनीतल, K5 D2 5 7 G1 M1 2 धरणीतले (for मेदिनी°)

63 a) D2 अथ (for तत) — b) B4 om हते — c) B4 तथा (for अथ) B (except B4) Dc1 समासाद्य (for °रोहच्च) S ततस्तु समरे वीरश् — d) D4 5 7 8 महाबल (for °रथ) — After 63, B (except B4) Dc1 Dn1 ins

756* व्यसृजत्समरे बाणान्प्रत्यमित्रजिघांसया ।
[ Dn1 प्राणान् (for बा°) ]

64 a) D1 2 4 5 7 8 विद्ध्वा (for बाणै) — D6 om (hapl) 64b–65c — c) B (except B4) Dc1 Dn1 पञ्चभि (for चतुर्भि) Ś2 तस्य (for चास्य) — d) K4 om चतुर्भि

65 D6 om 65abc (cf v l 64) — a) D4 तु दशभिर् (for षोड°) — b) Ś1 (before corr) शुभ, Dn2 D3 करं (for भुजम्) — c) D4 तत (for ध्वज) — d) B4 चापि, D2 अपि, S चैव (for चास्य) D2 चाष्टभि (for सप्तभि) — For 65, B (except B4) Dc1 Dn1 subst.

757* तमाचार्यस्त्रिभिर्बाणैर्बाह्वोरुरसि चार्दयत् ।
ध्वजं सप्तभिरुन्मथ्य यन्तारमवधीत्त्रिभि ।
[ (L 1) B1 Dn1 चार्पयत ]

66 a) B5 [s]श्वास्तु (for तेऽश्वा) — c) D3 6 समरात् (for समरे) — d) B (except B4) Dc1 Dn1 भारत (for मारिष)

67 b) Ś K B3 4 5 Dn2 D1 2 5 हताश्व, D3 4 6–8 द्रुताश्व (for विद्रुत) T G3 4 सह (for हत) — c) M3 4 अपि (for एव) K5 Dn2 पांचालान्पांडवेयांश्च.

69 72 72 समन्ताद्द्रावयन्द्रोणो वह्वशोभत मारिष ॥ ६८
आकर्णपलितः श्यामो वयसाशीतिकात्परः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ ६९
अथ द्रोणं महाराज विचरन्तमभीतवत् ।
वज्रहस्तममन्यन्त शत्रवः शत्रुसूदनम् ॥ ७०
ततोऽब्रवीन्महाराज द्रुपदो बुद्धिमान्नृप ।
लुब्धोऽयं क्षत्रियान्हन्ति व्याघ्रः क्षुद्रमृगानिव ॥ ७१
कृच्छ्रान्दुर्योधनो लोकान्पापः प्राप्स्यति दुर्मतिः ।
यस्य लोभाद्विनिहताः समरे क्षत्रियर्षभाः ॥ ७२
शतशः शेरते भूमौ निकृत्ता गोवृषा इव ।
रुधिरेण परीताङ्गाः श्वसृगालादनीकृताः ॥ ७३
एवमुक्त्वा महाराज द्रुपदोऽक्षौहिणीपतिः ।
पुरस्कृत्य रणे पार्थान्द्रोणमभ्यद्रवद्द्रुतम् ॥ ७४

इति श्रीमहाभारते द्रोणपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

— $^{d}$) Ś2 K5 D1 उपाविशत् (for अथावि°)

68 D3 om 68 — $^{a}$) D5 रथे शूराश्, T G2-5 रथे (G2 5 °णे) दृष्ट्वा (for रणे शूराश्) — $^{b}$) K3 4 पचाल, D4 पाडव (for पाञ्चाल-) D2 -सोमकान् (for -सृञ्जयान्) — After $68^{ab}$, Dn1 reads 72 — $^{d}$) K1. 4 शोभत (for [अ]शो°) Ś2 B (except B2) Dc1 Dn D3 G2 M3-5 भारत, D7 मारिप (for मारिष) T G3-5 बहुशो भरतर्षभ (G5 °भ)

69 $^{a}$) Ś K1-3 आसन्न, D2 4 आपन्न (for आकर्ण) D5 G3-5 पलित, D3 पलिता (for पलित) — $^{b}$) Ś K B1 (marg as in text) 2 (marg) D [अ]शीति पञ्चक Cd वयसाशीतिकापर — $^{c}$) D4 पर्यद्रवद् (for °चरद्)

70 $^{a}$) D6 तथा (for अथ) — $^{b}$) D5 G2 व्यच रतम् (for विचरन्तम्)

71 $^{a}$) Dn1 महाबाहुर् (for °राज) — $^{b}$) Dn2 om (hapl) from बुद्धिमा up to द्रुपदो (in $74^{b}$) Ś1 B1 5 Dc1 Dn1 D2 4 6 8 T G3-5 नृप (for नृप) Ś2 K1-4 D1 द्रुपदो वृद्धपार्षत — Dc1 reads $71^{c}$–$72^{b}$ on marg — $^{c}$) B2 (marg) Dn1 ग्लरब्धान्, D4 7 G2 लब्धोय (for लुब्धोऽयं) B3 8 Dn1 S हंतुं (for हन्ति) — $^{d}$) B1-3 Dc1 Dn1 पशुगणान् (for क्षुद्रमृगान्)

72 Dn2 om 72 (cf v l 71) Dn1 reads 72 after $68^{ab}$ Dc1 reads $72^{ab}$ on mar‸ — $^{a}$) K1-3 G1 M3 4 5 (sup lin) कृच्छ्राद्, D7 कृत्स्नाद्, D1 कृच्छ्रो (for कृच्छ्रान्) Ś2 लोके (for लोकान्) — $^{b}$) Ś2 नृप, Dc1 D2 7 8 T G3-5 प्राय (for पाप) G1 M1 2 प्राप्स्यसि (for °ति) — $^{c}$) Ś K1-4 लोभेन, B3 (marg) 5 D3 6 कोपाद्वि, D4 5 लोकाद्वि (for लोभाद्वि) — $^{d}$) K5 सर्वे वै, B (except B4) Dc1 Dn1 बलिन°, D4 क्षत्रिया (for समरे)

73 Dn2 om 73 (cf. v l 71) — $^{a}$) D2 शेरते शतशो भूमौ — $^{b}$) K1 2 G2 M1 (sup lin) निवृत्ता, D1 3 6 निकृंता (for निकृत्ता) D2 निवृत्ता इव गोवृषा, D4 निकृत्तागा वृषा इव Cd cites गोवृषा (as in text) — $^{c}$) B1-3 Dc1 Dn1 परिक्लिष्टा, G1 M परीतास्तु (for °ताङ्गा) — $^{d}$) Ś K1-4 D1 श्वशृ (Ś2 °सृ) गाल (K3 4 D1 °ला) समावृता, D1 7 T G2-5 श्वशृगालोदनीकृता

74 Dn2 om up to द्रुपदो (cf v l 71) Before 74, S ins संजय — $^{a}$) G1 M महाबाहुर् (for °राज) — $^{b}$) Dc1 D5 T G1 2 M1 2 4 [ऽ]क्षोहिणी — $^{c}$) D8 रथे (for रणे) — $^{d}$) G1 M1 2 अभ्यपतद् (for °द्रवद्) B4 रणे (for द्रुतम्)

Colophon — *Sub-parvan* Ś1 K1 3-5 B3 4 Dc1 Dn D1 2 4-8 जयद्रथवध — *Day of Droṇa's Generalship* Ś2 चतुर्थे दिवसे — *Adhy name* Ś K4 B Dc1 Dn D1 3-5 सात्यकिप्रवेश°, K1-3 D1 8 सात्यकि प्रवेश समाप्त, G1 M1 2 बृहत्क्षत्रवध ; G3 द्रोणपराक्रम — *Adhy no* (figures, words or both) B1 T G3-5 123, B2 52, B3 132, Dn1 125, D2 129, D3 22, G1 M 122 — *Śloka no* Dc1 74, Dn1 78

# १०२

संजय उवाच ।

व्यूहेष्वालोड्यमानेषु पाण्डवानां ततस्ततः ।
सुदूरमन्वयुः पार्थाः पाञ्चालाः सह सोमकैः ॥ १
वर्तमाने तथा रौद्रे संग्रामे लोमहर्षणे ।
प्रक्षये जगतस्तीव्रे युगान्त इव भारत ॥ २
द्रोणे युधि पराक्रान्ते नर्दमाने मुहुर्मुहुः ।
पाञ्चालेषु च क्षीणेषु वध्यमानेषु पाण्डुषु ॥ ३
नापश्यच्छरणं किंचिद्धर्मराजो युधिष्ठिरः ।
चिन्तयामास राजेन्द्र कथमेतद्भविष्यति ॥ ४
तत्रावेक्ष्य दिशः सर्वाः सव्यसाचिदिदृक्षया ।
युधिष्ठिरो ददर्शार्थं नैव पार्थं न माधवम् ॥ ५
सोऽपश्यन्नरशार्दूलं वानरर्षभलक्षणम् ।
गाण्डीवस्य च निर्घोषमशृण्वन्व्यथितेन्द्रियः ॥ ६
अपश्यन्सात्यकिं चापि वृष्णीनां प्रवरं रथम् ।
चिन्तयाभिपरीताङ्गो धर्मराजो युधिष्ठिरः ।
नाध्यगच्छत्तदा शान्तिं तावपश्यन्नरर्षभौ ॥ ७
लोकोपक्रोशभीरुत्वाद्धर्मराजो महायशाः ।
अचिन्तयन्महाबाहुः शैनेयस्य रथं प्रति ॥ ८ C 7 310 B 7 126 K 7 126

## 102

1 $^{c}$) D4 S अ(G5 आ)दूरम् (for सुदूरम्) D7 8 अन्वगु (for यु) B (except B8) D5 पार्थान्, S द्रोण (for पार्था) — Dn2 om $1^{d}$–$2^{d}$ D7 om $1^{d}$–$3^{b}$ — $^{d}$) G1 M पांसवा (for पाञ्चाला) B1 8 4 Dc1 transp सह and सोमकै Ś1 K (except K5) D1 T G2 सोमका, D4 कैकयै (for सोमकै)

2 Dn2 D7 om 2 (of v l 1) — $^{a}$) G3 (orig as in text, *inf lin*) महा (for तथा) D2 घोरे, T G3 द्रोणे (for रौद्रे) — $^{b}$) Ś2 B2 S रोम (for लोम) — $^{c}$) Ś K D2 4–6 8 सक्षये, D1 संक्षयो, G1 M प्रक्षयो (for प्रक्षये) Ś K1–4 D1 तीक्ष्णे, Dn1 तीव्र, G1 M तीव्रो (for तीव्रे) — $^{d}$) G1 M1 2 धामवत् (for भारत)

3 D7 om $3^{ab}$ (cf. v l 1) — $^{a}$) D6 lacuna for पराक्रान्ते — $^{b}$) K1 3 D1 नंदमाने, D2 मर्दमाने, D6 lacuna, G1 M1, 2 नदत्यपि (for नर्दमाने) — $^{c}$) K3 B1 8 पंचालेषु D4 om. च K1 च छिन्नेषु, G1 प्रनष्टेषु (for च क्षीणेषु) Dc1 Dn1 वध्यमानेषु योधेषु — $^{d}$) G1 M त्रास्यमानेषु (for वध्य) B1–3 Dc1 Dn1 पाण्डवेयेषु भारत

4 $^{a}$) Ś2 K1–3 B4 Dc1 Dn1 G1–3 5 M कच्चिद् (for किं) D3 नापश्यत रणे किंचिद् — $^{b}$) G1 M सहार्य स, G2 धर्मपुत्रो (for राजो) — D2 om (hapl) $4^{c}$–$7^{d}$ — $^{c}$) B1 2 Dc1 Dn1 धर्मात्मा, D4 राजेंद्र (for राजेन्द्र) — $^{d}$) D6 स्वेतद् (for ए)

5 D2 om 5 (of v l 4) — $^{a}$) Ś2 K2 T G2–5 तत्र वीक्ष्य, B1 3 5 Dn1 ततो वीक्ष्य, B2 D5 तदा (D5 °था) वेक्ष्य, D4 7 तत्रावेक्ष (sic), D6 तत प्रेक्ष्य (for तत्रावेक्ष्य)

6 D2 om 6 (cf v l 4) — $^{a}$) Ś2 रथ (for नर) B2 S (except G4 M5) शार्दूलो (for °लं) — $^{b}$) B5 lacuna for भलक्षणम् B1 2 (marg, orig as in text) 3 वरवानरकेतन, G2 वानरध्वजलक्षण — $^{c}$) D4 गाजीवस्य — $^{d}$) G3 न शृण्वन् (for अशृ°)

7 D2 om $7^{abcd}$ (cf v l 4) — $^{a}$) K1–3 D6 अपश्यत्, G1 M1 2 नापश्यत् (for अपश्यन्) B1–3 Dc1 Dn1 चैव (for चापि) — $^{b}$) G1 M तथा (for रथम्) — $^{c}$) K5 चिंतया वि, S तत शोक (for चिन्तयाभि) — B3 D5 om $7^{e}$–$8^{b}$ — $^{e}$) S नाभ्यगच्छत् (for नाध्य) D2 तत (for तदा) — $^{f}$) G1 M1 2 अपश्यंस्तौ (by transp) K5 Dn2 D3, 4 6–8 नरोत्तमौ (for नरर्षभौ) D2 नापश्यन्नरतर्षभ

8 B4 D6 om $8^{ab}$ (cf. v l 7) — $^{a}$) D2 भीतस्तु (for -भीरुत्वाद्) Ś K1–3 लोकोपाक्रोशभीरुत्वाद्, G1 M लोकापवादभी Cd cites उपक्रोश° — $^{b}$) B (B4 om) Dc1 Dn1 T G2–5 धर्मपुत्रो (for °राजो) B3 5 G1 M1 2 युधिष्ठिर, D4 महामना, D7 **मना, D8 महायश (for यशा) — $^{d}$) Ś2 K1–3 D1 सात्वतस्य, D4 7 सैनेयस्य (for शै)

9 Before 9, G1 4 M ins युधिष्ठिर — $^{a}$) B2 चापि (for चैव) — $^{b}$) N (except Ś K1, 2, 4) फा

पदवीं प्रेषितश्चैव फल्गुनस्य मया रणे ।
शैनेयः सात्यकिः सत्यो मित्राणामभयंकरः ॥ ९
तदिदं ह्येकमेवासीद्द्विधा जातं ममाद्य वै ।
सात्यकिश्च हि मे ज्ञेयः पाण्डवश्च धनंजयः ॥ १०
सात्यकिं प्रेषयित्वा तु पाण्डवस्य पदानुगम् ।
सात्वतस्यापि कं युद्धे प्रेषयिष्ये पदानुगम् ॥ ११
करिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि ।
युयुधानमनन्विष्य लोको मां गर्हयिष्यति ॥ १२
भ्रातुरन्वेषणं कृत्वा धर्मराजो युधिष्ठिरः ।
परित्यजति वार्ष्णेयं सात्यकिं सत्यविक्रमम् ॥ १३
लोकापवादभीरुत्वात्सोऽहं पार्थं वृकोदरम् ।
पदवीं प्रेषयिष्यामि माधवस्य महात्मनः ॥ १४
यथैव च मम प्रीतिरर्जुने शत्रुसूदने ।
तथैव वृष्णिवीरेऽपि सात्वते युद्धदुर्मदे ॥ १५
अतिभारे नियुक्तश्च मया शैनेयनन्दनः ।
स तु मित्रोपरोधेन गौरवाच्च महाबलः ।
प्रविष्टो भारतीं सेनां मकरः सागरं यथा ॥ १६
असौ हि श्रूयते शब्दः शूराणामनिवर्तिनाम् ।
मिथः संयुध्यमानानां वृष्णिवीरेण धीमता ॥ १७
प्राप्तकालं सुबलवन्निश्चित्य बहुधा हि मे ।
तत्रैव पाण्डवेयस्य भीमसेनस्य धन्विनः ।
गमनं रोचते मह्यं यत्र यातौ महारथौ ॥ १८

---

ल्गुनस्य Ś K1 3 4 D2 8 T G3 4 महारणे, K2 धनजय, B1 2 5 G2 महामृधे, B3 Dc1 Dn1 मया मृधे (for मया रणे) — c) D4 सैनेय B4 D3 शूरो, T सद्यो, G1 M1-3 5 संखे, G2 सोद्य, M4 संधे (for सत्यो) B3 (marg as in text) 3 5 Dc1 Dn1 गतः स पुरुषव्याघ्रो

10 a) Ś1 तदेक हीदमेवासीद्, ० B (except B4) Dc1 Dn1 द्वैध चित्तमिद मेद्य, G1 M शातम (M3-5 तन्ममा)-प्येवमवेद — b) K5 तमद्य, B4 D2 3 5 6 मनोद्य, D7 8 मयाद्य (for ममाद्य) B4 D3 मे (for वै) B1-3 5 Dc1 Dn1 पार्थसात्वतयोः कृते, G1 M द्विधा जात मन पुनः — c) D3 6 स तु, D7 8 चेह, T G2-5 चापि (for च हि) K4 D1 स हि (for हि मे) K5 B5 Dn D4 5 7 8 विज्ञेयः, T मैत्रेय, G4 वार्ष्णेय (for मे ज्ञेय) D3 सात्यकिश्चाहमाज्ञेय (sic), G1 M सत्यकश्चैव मे ज्ञेय — d) Ś K1-4 D2 8 फ (K4 D2 फा)ल्गुनश्

11 a) G1 M1 2 सत्यक (for सात्यकिं) D7 8 [भ्रा]शु, G1 M1 2 5 च (for तु) — b) Ś K1-4 D2 फ- (K4 D2 फा)ल्गुनस्य (for पाण्डवस्य) — K5 om (hapl) 11cd, B3 reads the same on marg — c) D2 G2 स (G3 सा)त्यकेश्च, G1 M सत्यकस्य (for सात्वतस्य) K1-3 किं (for क)

12 b) K4 lacuna, D1 युधि, D6 T G3 M3 प्रति (for यदि) — c) K4 D4 5 7 8 अनन्वेष्य, D2 अहं ज्ञास्ये (for अनन्विष्य) — d) K (except K5) G1 M लोको मा, D4 लोकाना (for लोको मा) B3 गर्हयेत्तु तत्, Dc1 Dn1 °येत्तत (for °यिष्यति)

13 b) Ś K1-4 D (except Dc1 Dn) M3-5 धर्मपुत्रो (for °राजो) — d) B1 सात्वता, B3 3 Dc1 Dn1 G2 5 सात्वत (for सात्यकिं) G5 lacuna for सत्यविक्रमम्

14 a) K4 om from त्वा up to वृष्णि (in 15c) B1 (marg, orig as in text) लोकप्रवादभीरुत्वात्, marg also लोकावचाद°; B3 लोकापरागभी°, Dn3 लोकोपरवभी°, D3 6 लोकोपक्रोशभी, T G2-5 M1 2 लोके (G5 lacuna) परमभी, G1 लोकोपवादभी°

15 K4 om up to वृष्णि (cf v l 14) — a) B1 3 Dc1 मे परा, D5 मम च (by transp) — c) B. यथैव (for तथैव) D2 तु (for ऽपि) M3-5 तथैव च मम प्रीति — d) Ś1 K2 4 युधि (for युद्ध) — After 15, D3 6 read 39c–41b for the first time, repeating the same in the proper place

16 D3 6 om 16 — a) T G3 4 अतिभार (for °भारे) D2 तु (for नि) — b) K4 D4 सैनेय (for शैनेय) — c) Ś1 Dn2 च (for तु) K3 मित्रापरोधेन, S मित्रानु° (for मित्रोप) — d) B Dc1 Dn1 ममानघ (B4 Dc1 °घ) (for महाबल) — After 16, Dn3 reads 39c–41b for the first time, repeating the same in the proper place

17 c) D2 मृधे (for मिथ) G1 M1 2 प्रयुध्यमानाना (for संयुध्य°)

18 a) K4 D4 सुयत्यान्, B1-3 Dc1 Dn1 हि यत्नव (Dn1 °वा)न्, D3 सुय° °न्, S अह मन्ये (for सुबलवन्) — b) K. 4 B1 . Dn2 D4 . 7 8 निश्चित

न चाप्यसह्यं भीमस्य विद्यते भुवि किंचन ।
शक्तो ह्येष रणे यत्तान्पृथिव्यां सर्वधन्विनः ।
स्वबाहुबलमास्थाय प्रतिव्यूहितुमञ्जसा ॥ १९
यस्य बाहुबलं सर्वे समाश्रित्य महात्मनः ।
वनवासान्निवृत्ताः स्म न च युद्धेषु निर्जिताः ॥ २०
इतो गते भीमसेने सात्वतं प्रति पाण्डवे ।
सनाथौ भवितारौ हि युधि सात्वतफल्गुनौ ॥ २१
कामं त्वशोचनीयौ तौ रणे सात्वतफल्गुनौ ।
रक्षितौ वासुदेवेन स्वयं चास्त्रविशारदौ ॥ २२

अवश्यं तु मया कार्यमात्मनः शोकनाशनम् ।
तस्माद्भीमं नियोक्ष्यामि सात्वतस्य पदानुगम् ।
ततः प्रतिकृतं मन्ये विधानं सात्यकिं प्रति ॥ २३
एवं निश्चित्य मनसा धर्मपुत्रो युधिष्ठिरः ।
यन्तारमब्रवीद्राजन्भीमं प्रति नयस्व माम् ॥ २४
धर्मराजवचः श्रुत्वा सारथिर्हयकोविदः ।
रथं हेमपरिष्कारं भीमान्तिकमुपानयत् ॥ २५
भीमसेनमनुप्राप्य प्राप्तकालमनुस्मरन् ।
कश्मलं प्राविशद्राजा बहु तत्र समादिशन् ॥ २६　C 7 | B 7 | K 7 |

---

(for त्य) Ś1 D2 [म्र]पि (for हि) S यान भीमस्य तत्र तु — c) K4 B1 D1 यत्र (for तत्र) B1 Dc1 D2 6 S वै (for [ए]व) — d) K5 M3–5 धीमत, B4 संयुगे (for धन्विन) — e) G3 [s]व्यग्र (for मह्यं) T G1, 3–5 M गमन रोचये व्यक्त — f) S यत्र यातो महारथ

19 a) Ś1 चाविषह्यं, G1 M1 3–5 चाप्यसाध्यं, M2 चास्य साध्यं (for चाप्यसह्य) T G2–5 नासाध्यं भीमसेनस्य — b) G4 lacuna for भुवि — K4 om. 19c–20b — c) B2 3 Dc1 एष (for ह्येष) K5 B3 5 Dn2 D2 5 7 8 G1 M यत्त ; B1–3 Dc1 Dn1 हत्तु, G3 5 यस्मात् (for यत्तान्) — d) Ś K1–3 D1 पृथिवी (for व्या) B4 5 D5 G5 M3–5 धन्विनां, Dn2 धन्वन (for धन्विन) — e) B1, 3 Dc1 Dn D3 6 S आश्रित्य (for आस्थाय) — f) D6 प्रत्यव्यूहितुम् D2 ओजसा (for अञ्जसा) B (except B4) Dc1 Dn1 भीमसेनो वि(Dc1 Dn1 °नोरि)-मर्दन

20 K4 Dn1 om. 20ab (for K4, cf. v l 19) — c) K4 D1 निववृते, B1 3 निवृत्ता स्मो — d) M3–5 तु (for च) G1 M1, 2 युद्धेन (for षु) Ś1 विश्रुता, D3, 6 निर्वृता (for निर्जिता)

21 a) T G2–5 प्रयातेन च (G5 स) भीमेन, G1 M सम्प्रयातेन भीमेन (M3 4 तेन भीमे तु, M5 से तु भीमे च [sup lin तु]) — b) T G2–5 सात्यर्कि, G1 M सत्यक (for सात्वत) K5 संयुगे, S (M5 [sup lin] as in text) पांडव (for पाण्डवे) — c) S नाथवतौ भवेतां तौ — d) K5 युद्धे (for युधि) G1 M सत्यक (for सात्वत) Ś2 पांडवौ, K1, 4 5 B4 5 D1, 3 4 5 6 -फाल्गुनौ B1–3 Dc1 युधि (Dc1 °द्धे) सात्यकिफाल्गुनौ, D2 युधि फाल्गुणसात्यकी, D5 युधि फाल्गुनपांडवौ

22 D3 6 om (hapl) 22ab, D7 8 read the same after 29 — a) G4 कर्म (for काम) K1 3 5 B1–3 Dn2 D1, 2 त्वशौचनीयौ, K4 तु शोच°, B4 5 न शोच°, G M ह्यशोच (for त्वशोच) T कामस्य शोचनीयौ तु — b) K4 D1 M3 5 युधि (for रणे) M3, 5 सत्यक (for सात्वत) K2 4 5 Dn2 D4 6 7 8 -फाल्गुनौ B Dc1 Dn1 D2 रणे फाल्गुन(D2 °ण)सात्यकी, T G M1, 2 रणे शूरौ महारथौ, M4 रणे फल्गुनसत्यकौ — d) K1 2 शास्त्र, D6 शस्त्र (for चास्त्र) Ś1 स्वयं शस्त्रभृतां वरौ

23 d) S (except G5) सत्यकस्य (for सात्वतस्य) D5 रथं प्रति (for पदानुगम्) — D5 om (hapl) 23ef — e) B2 (marg, orig as in text) प्रीतिकृतं (for प्रति°) — f) B2 (marg) 5 Dc1 Dn1 सात्वत, G1 M सत्यक (for सात्यकिं)

24 Before 24, S ins संजय — a) D5 बहुधा (for मनसा) — D5 om 24c–25b — c) B (except B4) Dc1 Dn1 D1 6–8 राजा (for राजन्) — d) G1 M भीमसेनाय मा वह

25 D5 om 25ab (cf v l 24) — b) G1 M धर्मराजस्य सारथि — c) K4 Dc1 Dn1 D3, 4 6 7 -परिस्कार Cd cites भीमपरिस्कार — d) B1 उपावहत्, B2 3 Dc1 Dn1 T G3–5 उदावहत्, D4 समपातयत्, G2 अथागमत् (for उपानयत्) G1 M भीमसेनान्तिकेवहत् (G1 °न्)

26 a) B3 भीमांतिकम् (for भीमसेनम्) S (except G2 5) भीमसेनरथं प्राप्य — b) G1 M कृच्छ्र- (for प्राप्त) — d) D2 [अ]वशस् (for बहु) Ś K1–4 सत्त्व, D3 T G2–5 तत्तत् (for तत्र) Ś2 K3 Dc1 Dn D1–3 5–8 T G2 समादिशत्, K4 D4 G3 4 °विशत् (for दि-

क्रुद्धा इव मनुष्येन्द्र भुजगाः कालचोदिताः ॥ २६
प्रसर्पमाणा मेदिन्यां ते व्यरोचन्त मार्गणाः ।
अर्धप्रविष्टाः संरब्धा बिलानीव महोरगाः ॥ २७
तं प्रत्यविध्यद्राधेयो जाम्बूनदविभूषितैः ।
चतुर्दशभिरत्युग्रैर्नाराचैरविचारयन् ॥ २८
ते भीमसेनस्य भुजं सव्यं निर्भिद्य पत्रिणः ।
प्राविशन्मेदिनीं भीमाः क्रौञ्चं पत्ररथा इव ॥ २९
ते व्यरोचन्त नाराचाः प्रविशन्तो वसुंधराम् ।
गच्छत्यस्तं दिनकरे दीप्यमाना इवांशवः ॥ ३०
स निर्भिन्नो रणे भीमो नाराचैर्मर्मभेदिभिः ।
सुस्राव रुधिरं भूरि पर्वतः सलिलं यथा ॥ ३१
स भीमस्त्रिभिरायस्तः सूतपुत्रं पतत्रिभिः ।
सुपर्णवेगैर्विव्याध सारथिं चास्य सप्तभिः ॥ ३२
स विह्वलो महाराज कर्णो भीमबलार्दितः ।
प्राद्रवज्जवनैरश्वै रणं हित्वा महायशाः ॥ ३३
भीमसेनस्तु विस्फार्य चापं हेमपरिष्कृतम् ।
आहवेऽतिरथोऽतिष्ठज्ज्वलन्निव हुताशनः ॥ ३४ C 7 B 7 K 7

इति श्रीमहाभारते द्रोणपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

D8 व्यराजत (for व्यरोचन्त) D5 सायका (for मार्गणा) — For $27^{ab}$, S subst.

857* ते मेदिनीं प्रसर्पन्त शोभन्ते रुधिरोक्षिता ।

— $^{c}$) B8 5 अर्धं (for अर्ध) — $^{d}$) M8-5 बिलादिव (for बिलानीव)

28 $^{b}$) S विभूषणै (for विभूषितै) — $^{c}$) D2 अन्यैश्च; S आयत्तो (G1 M1-4 °त्तो) (for अत्युग्रैर्). — $^{d}$) Ś1 K5 अविधारयन्, K1 °चिंतयन्, D2 अभ्य वारयत् (for अविचारयन्)

29 $^{c}$) D6 धरणीं (for मेदिनीं) S विदार्य प्राविश न्भूमिं — $^{d}$) Ś1 कौंजपत्र, K1 2 D2 क्रौंचपत्र (for क्रौञ्च पत्र) ❀ Cd कौंज लतादिगृह । पत्ररथा पक्षिण । ❀

30 $^{a}$) G1 M [ऽ]प्रकाशंत (for व्यरोचन्त) — $^{b}$) D6 G5 प्राविशंतो (for प्रवि°) K4 धरातलं (for वसुं धराम्) — $^{c}$) S अस्तं गच्छंतमादित्यं — $^{d}$) S प्रवि शंत (for दीप्यमाना) D2 खगा इव (for इवांशव)

31 $^{a}$) S निर्विण्णो (for निर्भिन्नो) G1 M पार्थो (for भीमो) — $^{b}$) G1 M रुधिरेण समुक्षित — D7 om (hapl) $31^{c}$–$32^{d}$ — $^{c}$) K5 B1 Dn1 D2-6 8 सु- (D8 6 सु)स्राव, Dc1 सुस्रुवे (for सुस्राव) G1 M गात्रै (for भूरि) — $^{d}$) N (except B Dc1, Ś2 missing, D7 om) कैलास इव पर्वत

32 D7 om 32 (cf v l 31) — $^{a}$) K1 D4 T G2 8 आयत्त, Dc1 आयस्तै, D2 आजघ्ने (for आयस्त) — $^{b}$) B4 प्राविशतो वसुधरां — $^{c}$) Ś1 B1-3 Dc1 Dn1 D8 4 सु(D8 स)पत्रवेगैर्, D2 सपूर्णै°, D6 8 T G M1 2 सुव(G8-5 प)र्णपुंखैर्, M8-5 स्वर्णपुंखैश्च (for सुपर्णवेगैर्) T G2 विव्याथ — $^{d}$) M4 चापि (for चास्य) D2 पचाभि (for सप्तभि)

33 $^{b}$) G1 M8-5 भीमसेन (for कर्णो भीम) B Dc1 D1 S शराहत, Dn1 D4 शरार्दित (for बलार्दित) — Dc1 reads $33^{c}$–$34^{b}$ on marg — $^{c}$) B5 तरलैर् (for जवनैर्) D2 प्रदुद्राव च तैरश्वै — $^{d}$) Dc1 Dn2 D8 6 त्यक्त्वा (for हित्वा) K5 D5 महाभयात्, Dc1 D4 T G2-5 M8-5 °रथ (for °यशा) — For $33^{cd}$, G1 M1 2 subst.

858* तथा पुरुषमानी सन्प्रत्यपायाद्रणाजिरात् ।

34 Dc1 reads $34^{ab}$ on marg — $^{a}$) G1 8-5 M विष्फार्य — $^{b}$) K1 4 5 Dn D8 4 6-8 परिस्कृत (for °ष्कृतम्) S चाप रुक्मांगद दृढं — $^{c}$) B4 आहवे सम राभिष्टं, D7 8 आजावतिरथं(D8 °थ)स्तिष्ठन्

Colophon Ś2 missing — *Sub parvan* Ś1 K1 8-5 B6 4 D1-3 6-8 जयद्रथवध — *Day of Droṇa's Generalship* K1 8 चतुर्थदिवसे — *Adhy name* K1-3 B2 Dn2 D1 8 4 भीमसेनप्रवेश, B1, 8-5 Dc1 भीम प्रवेश, D5 भीमप्रवेशे दुर्मुखवध, D6 भीमसेनप्रवेशे भीमसेनेन कर्णजय, D7 8 भीमसेनप्रवेशे कर्णपराजय, T G2 8 5 कर्णपलायन, Bom ed भीमकर्णापयानं — *Adhy no* (figures, words or both) B1 T G2-5 131, B2 132, B5 140, Dn1 134, D2 137, D8 G1 M 130 — *Śloka no* Dc1 35, Dn1 32

# ११०

धृतराष्ट्र उवाच ।
दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
यत्राधिरथिरायस्तो नातरत्पाण्डवं रणे ॥ १
कर्णः पार्थान्सगोविन्दाञ्जेतुमुत्सहते रणे ।
न च कर्णसमं योधं लोके पश्यामि कंचन ।
इति दुर्योधनस्याहमश्रौषं जल्पतो मुहुः ॥ २
कर्णो हि बलवाञ्शूरो दृढधन्वा जितक्लमः ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ॥ ३
वसुषेणसहायं मां नालं देवापि संयुगे ।
किमु पाण्डुसुता राजन्गतसत्त्वा विचेतसः ॥ ४
तत्र तं निर्जितं दृष्ट्वा भुजंगमिव निर्विषम् ।
युद्धात्कर्णमपक्रान्तं किं स्विद्दुर्योधनोऽब्रवीत् ॥ ५
अहो दुर्मुखमेवैकं युद्धानामविशारदम् ।
प्रावेशयद्धुतवहं पतंगमिव मोहितः ॥ ६
अश्वत्थामा मद्रराजः कृपः कर्णश्च संगताः ।
न शक्ताः प्रमुखे स्थातुं नूनं भीमस्य संजय ॥ ७
तेऽपि चास्य महाघोरं बलं नागायुतोपमम् ।
जानन्तो व्यवसायं च क्रूरं मारुततेजसः ॥ ८

## 110

1 Ś2 missing up to भीमध (in 35$^{c}$) (cf v 1 7 106 36) — $^{b}$) D2 अकर्मक (for अनर्थकम्) D4 कर्णे बलसमन्वित, T G2–6 M3–5 पौरुष तु निरर्थक — $^{c}$) D4 यदा (for यत्र) G3 4 [अ]तिरथिर् K1 आयस्ते, K3 B4 5 Dn D3 T G2–6 आयत्तो, D2 4 6 आधेयो, Cd आयस्तो (as in text) — $^{d}$) B4 युधि (for रणे) D3 नातरद्युधि पाडव, D4 तान्ननाद ह पाडवान

2 Ś2 missing (cf. v 1 1) Ś1 K1–3 om (hapl) 2$^{ab}$ — $^{b}$) K4 5 D (except Dc1 Dn1) पुरा (for रणे) — $^{cd}$) B4 G1 M transp योधं (G1 M योध) and लोके D3 7 8 पश्याम (for मि) — $^{f}$) D5 बहु (for मुहु) — After 2, D7 reads 4$^{cd}$, for the first time, repeating it in its proper place

3 Ś2 missing (cf v 1 1) D7 om. 3$^{ab}$ — $^{a}$) K1 3 G1 M [s]पि (for हि) — $^{c}$) D2 मन्ये (for सूत) — $^{d}$) D2 सोयं (for मन्दो) Ś1 तदा (for पुरा)

4 Ś2 missing (cf v 1 1) — $^{a}$) K1 वासवेन, K6 वसुखेण, D2 वैकर्तन (for वसुषेण) G1 M1 2 मा (for मां) Dn1 D4 सूतपुत्रस्य स(D4 om स)तत — $^{b}$) Ś1 K1–3 D1 2 देवो (for देवा) S (except M3–5) च (for [अ]पि) S बाधितुं (for संयुगे) — D7 reads 4$^{cd}$ for the first time after 2 — $^{c}$) K5 Dn2 D4 किं नु, Dn1 किं तु (for किमु) — $^{d}$) B4 विचेतना (for °स)

5 Ś2 missing (cf v 1 1) — $^{a}$) K5 T G2–5 त तत्र (by transp), D2 त भीम- — $^{c}$) Ś1 तद्वत्, K1–4 D1 तथा (for युद्धात्) K1 3 D3 8 M3–5 अपाक्रातं, D5 उपक्रात, G1 M1 2 सुभीत च (for अपक्रान्त) — $^{d}$) K3 D4 8 किंचिद् (for किं स्विद्)

6 Ś2 missing (cf v 1 1) — $^{a}$) Dn1 अह (for अहो) D4 हि दु खम् (for दुर्मुखम्) K1–3 एकैक, T G2–5 एवैन (for एवैक) — $^{d}$) D2 पतग (for °गम्) — For 6$^{cd}$, K5 D6 subst

859* को हि प्रावेशयेन्नून मुक्त्वा तं मम पुत्रकम् ।

while, G1 M subst

860* पतगमिव सदीप्त भीमाग्निं समवेशयत् ।
[ M3–5 दीप्त स (for सदीप्त) ]

7 Ś2 missing (cf v 1 1) — $^{ab}$) K4 transp मद्रराज and कृप कर्ण K1 Dn1 D2 3 6 सगत — $^{c}$) K1–4 D1 शेकु, D7 शक्त्या (for शक्ता) Dn1 [अ]द्य शुवन्, D4 शक्नुवन् (for शक्ता प्र) D2 G3–5 समरे (for प्रमुखे) — $^{d}$) Dn1 सयुगे (for सजय) D4 वर्तंत इव सजय, D7 भीम नूनं सजय

8 Ś2 missing (cf v 1 1) — $^{a}$) B2 3 Dn1 transp ऽपि and च K5 बलं घोरं, D5 महावाहोर्, M1 °घोर (for °घोरं) — $^{b}$) D2 महा, D7 मूल (for बलं) — $^{d}$) Ś1 K1 2 4 D1 क्रुद्ध, D7 8 K5 नागायुतबलोपमं — $^{d}$) Ś1 K1 2 D1 तेजसं, D5 चेतस, T क्रूर (for क्रूरं) Ś1 K1 2 D1 तेजसं, D5 चेतस, T G2 4 रहसं; G3 5 रहम (for तेजस·)

किमर्थं क्रूरकर्माणं यमकालान्तकोपमम् ।
बलसंरम्भवीर्यज्ञाः कोपयिष्यन्ति संयुगे ॥ ९
कर्णस्त्वेको महाबाहुः स्वबाहुबलमाश्रितः ।
भीमसेनमनादृत्य रणेऽयुध्यत सूतजः ॥ १०
योऽजयत्समरे कर्णं पुरंदर इवासुरम् ।
न स पाण्डुसुतो जेतुं शक्यः केनचिदाहवे ॥ ११
द्रोणं यः संप्रमथ्यैकः प्रविष्टो मम वाहिनीम् ।
भीमो धनंजयान्वेषी कस्तमर्छेज्जिजीविषुः ॥ १२
को हि संजय भीमस्य स्थातुमुत्सहतेऽग्रतः ।
उद्यताशनिवज्रस्य महेन्द्रस्येव दानवः ॥ १३

प्रेतराजपुरं प्राप्य निवर्तेतापि मानवः ।
न भीमसेनं संप्राप्य निवर्तेत कदाचन ॥ १४
पतंगा इव वह्निं ते प्राविशन्नल्पचेतसः ।
ये भीमसेनं संक्रुद्धमभ्यधावन्विमोहिताः ॥ १५
यत्तत्सभायां भीमेन मम पुत्रवधाश्रयम् ।
शप्तं संरम्भिणोग्रेण कुरूणां शृण्वतां तदा ॥ १६
तन्नूनमभिसंचिन्त्य दृष्ट्वा कर्णं च निर्जितम् ।
दुःशासनः सह भ्रात्रा भयाद्भीमादुपारमत् ॥ १७
यश्च संजय दुर्बुद्धिरब्रवीत्समितौ मुहुः ।
कर्णो दुःशासनोऽहं च जेष्यामो युधि पाण्डवान् १८ C 7 B 7 K

---

9 Ś2 missing (cf v l 1) —$^{b}$) K5 D2 कालान्तकयमोपमं, T G2-4 कालसूर्यांतकोपम —$^{c}$) B1 कोप च, D2 वीर्यज्ञ (for वीर्यज्ञा) —$^{d}$) Ś1 D2 4 कोपयिष्यति S पाश्च समकोपयन्

10 Ś2 missing (cf v l 1) —$^{a}$) K1 2 स्त्वेव, K4 D1 स्त्वयं, G1 M1 2 कथं, M3-5 चैको (for स्त्वेको) —$^{b}$) Ś1 K1-4 D1 मास्थित, B4 अर्पित (for आश्रित॰) —$^{d}$) S युयुधे शत्रुकर्शन — After 10, M1 2 5 read $11^{cd}$

11 Ś2 missing (cf v l 1) T G2 4 5 repeat $11^{ab}$ after 11 —$^{a}$) B2 (marg as in text) यो जयेत्, D6 अजयत् (for योऽजयत्) —$^{b}$) K1 2 4 Dn2 D1 8 इवासुरान् T (second time) G1 2 (both times) 4 5 (both second time) M वज्रहस्तो यथा बल (M1 2 लीं) — After $11^{ab}$, Dc1 reads $12^{c}$–$13^{b}$ G2 om. $11^{cd}$ M1 2 5 read $11^{cd}$ after 10 —$^{c}$) T च (for स) G1 M न हि भीमो रणे जेतु —$^{d}$) T G3-5 शक्य संख्ये (G4 सघे, G5 सखे) कथचन, G1 M शक्य सजय केनचित्

12 For the sequence in Dc1, cf. v l 11 Ś2 missing (cf v l 1) G3 om $12^{a}$–$13^{b}$ —$^{a}$) G1 M1 2 तु (for सं) K1-3 [प्र]ष (for [प्र]क॰) —$^{d}$) K1 2 अर्छेज्, K3 D5 आर्छेज्, K6 B (except B2) Dn D4 7 8 Cd आर्छेज्, D2 S (G3 om) इच्छेज्, D3 मृच्येज्, D6 ऋच्येज् (for अर्छेज्)

13 For the sequence in Dc1, cf v l 11 Ś2 missing (cf v l. 1) G3 om $13^{ab}$ (cf. v l 12) —$^{c}$) B1 उद्यतायुध, T G2 उद्धृताशनि (for उद्यता॰) Cd cites अशनि K3 B Dc1 Dn D2 T G2-5 M3-5 हस्तस्य (for वज्रस्य) —$^{d}$) Dc1 G1 3 M दानवा

14 Ś2 missing (cf v l 1) S1 K1-4 D1 4 om (hapl) $14^{ab}$ G5 M3-5 om (hapl) $14^{bc}$ —$^{b}$) D2 हि (for [अ]पि) G1 M1 2 मानुष (for मानव) K5 निवर्तेते कदाचन —$^{d}$) T G2-5 M3-5 कथचन, G1 M1 2 हि कश्चन (for कदाचन) D2 निवर्तेदिति मे मति

15 Ś2 missing (cf v l 1) —$^{b}$) B4 मदचेतस, D3 अल्पतेजस, D5 ॰चेतना (for चेतस) —$^{c}$) K1 येन, G1 5 M यद् (for ये) —$^{d}$) K3 B Dc1 Dn1 T G2 अन्वधावन् (for अभ्य॰) D2 अभ्यधावत मोहिता

16 Ś2 missing (cf v l 1) —$^{a}$) G1 M1 2 यत्त (for यत्तत्) —$^{c}$) K4 B5 सप्त, D1 शस्तं (for शप्त) D7 8 अग्रे हि (for उग्रेण) —$^{d}$) T G3 क्रूराणां (for कुरूणां) K1-4 D1 संनिधौ (for शृण्वता) D3 lacuna, G1 M1 2 तत (for तदा)

17 Ś2 missing (cf v l 1) —$^{a}$) B4 ते, Dc1 Dn1 तं (for तन्) T G2-5 M3-5 सत्यमिति, G1 M1 2 नूनमनु (for नूनमभि) —$^{b}$) G5 भीमेन (hypermetric) (for च) Ś1 K1 3 4 च वर्जित, K2 5 D4 5 T G2-4 M3-5 विनि(K2 ॰व)र्जित (for च नि॰) — D4 om (hapl) $17^{c}$–$19^{b}$ —$^{c}$) D1, 2 5 6 G1 M1 2 भ्राता (for भ्रात्रा) —$^{d}$) D7 अपासरत् D5 भीमसेनादुपाद्रवत्, S भयाद्भीममवर्जयत्

18 Ś2 missing (cf v l. 1) D4 om 18 (cf.

## ११०

धृतराष्ट्र उवाच ।

दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
यत्राधिरथिरायस्तो नातरत्पाण्डवं रणे ॥ १
कर्णः पार्थान्सगोविन्दाञ्जेतुमुत्सहते रणे ।
न च कर्णसमं योधं लोके पश्यामि कंचन ।
इति दुर्योधनस्याहमश्रौषं जल्पतो मुहुः ॥ २
कर्णो हि बलवाञ्शूरो दृढधन्वा जितक्लमः ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ॥ ३
वसुषेणसहायं मां नालं देवापि संयुगे ।
किमु पाण्डुसुता राजन्गतसत्त्वा विचेतसः ॥ ४
तत्र तं निर्जितं दृष्ट्वा भुजंगमिव निर्विषम् ।
युद्धात्कर्णमपक्रान्तं किं स्विद्दुर्योधनोऽब्रवीत् ॥ ५
अहो दुर्मुखमेवैकं युद्धानामविशारदम् ।
प्रावेशयद्धुतवहं पतंगमिव मोहितः ॥ ६
अश्वत्थामा मद्रराजः कृपः कर्णश्च संगताः ।
न शक्ताः प्रमुखे स्थातुं नूनं भीमस्य संजय ॥ ७
तेऽपि चास्य महाघोरं बलं नागायुतोपमम् ।
जानन्तो व्यवसायं च क्रूरं मारुततेजसः ॥ ८

## 110

1 Ś2 missing up to भीमध (in 35c) (cf v 1 7 106 36) — b) D2 अकर्मक (for अनर्थकम्) D4 कर्णे बलसमन्वित, T G2-5 M3-5 पौरुष तु निरर्थक — c) D4 यदा (for यत्र) G3 4 [अ]तिरथिर् K1 आयस्ते, K3 B4 5 Dn D8 T G2-5 आयत्तो, D2 4 6 आधेयो, Cd आयस्तो (as in text) — d) B4 युधि (for रणे) D2 नातरद्युधि पाडव, D1 तान्ननाद ह पाडवान्

2 Ś2 missing (cf. v 1 1) Ś1 K1-3 om (hapl) 2ab — b) K1 5 D (except Dc1 Dn1) पुरा (for रणे) — cd) B4 G1 M transp योधं (G1 M यौध) and लोके D3 7 8 पश्याम (for मि) — f) D5 बहु (for मुहु) — After 2, D7 reads 4cd, for the first time, repeating it in its proper place

3 Ś2 missing (cf v 1 1) D7 om. 3ab — a) K1 3 G1 M [ऽ]पि (for हि) — c) D2 मन्ये (for सूत) — d) D2 सोय (for मन्दो) Ś1 तदा (for पुरा)

4 Ś2 missing (cf v 1 1) — a) K1 वासवेन, K5 वसुखेण, D2 वैकर्तन (for वसुषेण) G1 M1 2 मा (for मां) Dn1 D4 सूतपुत्रस्य स(D4 om स)तत — b) Ś1 K1-3 D1 2 देवो (for देवा) S (except M3-5) च (for [अ]पि) S वाधितु (for संयुगे) — D7 reads 4cd for the first time after 2 — c) K5 Dn2 D1 किं तु, Dn1 किं तु (for किमु) — d) B4 विचेतना (for °स)

5 Ś2 missing (cf v 1 1) — a) K5 T G2-5 त तत्र (by transp), D2 तं भीम — c) Ś1 तद्वद्, K1-4 D1 तथा (for युद्धात्) K1 3 D3 8 M3-5 अपा क्रान्त, D5 उपक्रान्तं, G1 M1 2 सुभीतं च (for अप क्रान्त) — d) K2 D4 8 किंचिद् (for किं स्विद्)

6 Ś2 missing (cf v 1 1) — a) Dn1 अह (for अहो) D4 हि दु खम् (for दुर्मुखम्) K1-3 एवैक, T G2-5 एवैन (for एवैक) — d) D2 पतग (for °गम्) — For 6cd, K5 D5 subst

859* को हि प्रावेशयेन्नून मुक्त्वा त मम पुत्रकम् ।

while, G1 M subst

860* पतगमिव सदीप्त भीमाग्निं समवेशयत् ।
[ M3-5 दीप्त स (for सदीप्त) ]

7 Ś2 missing (cf v 1 1) — ab) K5 transp मद्रराज and कृप कर्ण K1 Dn1 D2 5 6 सगत — c) K1-4 D1 शेकु, D7 शक्त्या (for शक्ता) Dn1 [अ]द्य K1-4 D1 शेकु, D1 शक्नुवन् (for शक्ता प्र) D2 समरे क्रुवन्, D4 शक्नुवन् (for शक्ता प्र) D2 समरे — d) Dn1 संयुगे (for संजय) D4 (for प्रमुखे) वर्तंत इव सजय, D7 भीम नून ° सजय

8 Ś2 missing (cf v 1 1) — a) B1 3 Dn1 transp ऽपि and च K1 बलं घोर, D5 महायाहोर, M1 °घोर (for °घोर) — b) D2 महा°, D7 मूल (for बल) K5 नागायुतबलोपम — d) Ś1 K1 2 3 D1 क्रुद्ध, D7 क्रूर° (for क्रूर) Ś1 K1 2 D1 -तेजस, D2 चेतस, T G2 4 -रहसं, G3 5 रहस (for तेजसः)

किमर्थं क्रूरकर्माणं यमकालान्तकोपमम् ।
बलसंरम्भवीर्यज्ञाः कोपयिष्यन्ति संयुगे ॥ ९
कर्णस्त्वेको महाबाहुः स्वबाहुबलमाश्रितः ।
भीमसेनमनादृत्य रणेऽयुध्यत सूतजः ॥ १०
योऽजयत्समरे कर्णं पुरंदर इवासुरम् ।
न स पाण्डुसुतो जेतुं शक्यः केनचिदाहवे ॥ ११
द्रोणं यः संप्रमथ्यैकः प्रविष्टो मम वाहिनीम् ।
भीमो धनंजयान्वेषी कस्तमर्छेज्जिजीविषुः ॥ १२
को हि संजय भीमस्य स्थातुमुत्सहतेऽग्रतः ।
उद्यताशनिवज्रस्य महेन्द्रस्येव दानवः ॥ १३
प्रेतराजपुरं प्राप्य निवर्तेतापि मानवः ।
न भीमसेनं संप्राप्य निवर्तेत कदाचन ॥ १४
पतंगा इव वह्निं ते प्राविशन्नल्पचेतसः ।
ये भीमसेनं संक्रुद्धमभ्यधावन्विमोहिताः ॥ १५
यत्तत्सभायां भीमेन मम पुत्रवधाश्रयम् ।
शप्तं संरम्भिणोग्रेण कुरूणां शृण्वतां तदा ॥ १६
तन्नूनमभिसंचिन्त्य दृष्ट्वा कर्णं च निर्जितम् ।
दुःशासनः सह भ्रात्रा भयाद्भीमादुपारमत् ॥ १७
यश्च संजय दुर्बुद्धिरब्रवीत्समितौ मुहुः ।
कर्णो दुःशासनोऽहं च जेष्यामो युधि पाण्डवान् १८　C 7 5 B 7 1 K 1 1

9 Ś$_{2}$ missing (cf v l 1) —$^{b}$) K$_{5}$ D$_{2}$ कालान्तकयमोपमं, T G$_{2-4}$ कालसूर्यांतकोपम —$^{c}$) B$_{1}$ कोपघ, D$_{2}$ वीर्यज्ञ (for वीर्यज्ञा) —$^{d}$) Ś$_{1}$ D$_{2\ 4}$ कोपयिष्यसि S पाद्दच समकोपयन्

10 Ś$_{2}$ missing (cf v l 1) —$^{a}$) K$_{1\ 2}$ स्त्वेव, K$_{4}$ D$_{1}$ स्त्वयं, G$_{1}$ M$_{1\ 2}$ कथं, M$_{3-5}$ चैको (for स्त्वेको) —$^{b}$) Ś$_{1}$ K$_{1-4}$ D$_{1}$ आस्थित, B$_{4}$ अपित (for आश्रित) —$^{d}$) S युयुधे शत्रुकर्शन — After 10, M$_{1\ 2\ 5}$ read 11$^{cd}$

11 Ś$_{2}$ missing (cf v l 1) T G$_{2\ 4\ 5}$ repeat 11$^{ab}$ after 11 —$^{a}$) B$_{2}$ (marg as in text) यो जयेत्; D$_{6}$ अजयत् (for योऽजयत्) —$^{b}$) K$_{1\ 2\ 4}$ Dn$_{2}$ D$_{1\ 8}$ इवासुरान् T (second time) G$_{1\ 2}$ (both times) $_{4\ 5}$ (both second time) M वज्रहस्तो यथा बल (M$_{1\ 2}$ °लिं) — After 11$^{ab}$, Dc$_{1}$ reads 12$^{c}$–13$^{b}$ G$_{2}$ om 11$^{cd}$ M$_{1\ 2\ 5}$ read 11$^{cd}$ after 10 —$^{c}$) T च (for स) G$_{1}$ M न हि भीमो रणे जेतु —$^{d}$) T G$_{3-5}$ शक्य संख्ये (G$_{4}$ सघे, G$_{5}$ सखे) कथचन, G$_{1}$ M शक्य संजय केनचित्

12 For the sequence in Dc$_{1}$, cf. v l 11 Ś$_{2}$ missing (cf v l. 1) G$_{3}$ om 12$^{a}$–13$^{b}$ —$^{a}$) G$_{1}$ M$_{1\ 2}$ तु (for स) K$_{1-3}$ [ए]व (for [ए]क) —$^{d}$) K$_{1\ 2}$ अर्छेज्, K$_{3}$ D$_{4}$ आर्छेज्, K$_{5}$ B (except B$_{2}$) Dn D$_{4\ 7\ 8}$ Cd आर्छेज्, D$_{2}$ S (G$_{3}$ om) इच्छेज्, D$_{3}$ मृच्येज्, D$_{6}$ ऋच्येज् (for अर्छेज्)

13 For the sequence in Dc$_{1}$, cf v l 11 Ś$_{2}$ missing (cf v l 1) G$_{3}$ om 13$^{ab}$ (cf v l 12) —$^{c}$) B$_{1}$ उद्यतायुध, T G$_{2}$ उद्धृताशनि (for उद्यता) Cd cites अशनि K$_{3}$ B Dc$_{1}$ Dn D$_{2}$ T G$_{2-5}$ M$_{3-5}$ हस्तस्य (for -वज्रस्य) —$^{d}$) Dc$_{1}$ G$_{1\ 3}$ M दानवा

14 Ś$_{2}$ missing (cf v l 1) Ś$_{1}$ K$_{1-4}$ D$_{1\ 4}$ om (hapl) 14$^{ab}$ G$_{5}$ M$_{3-5}$ om (hapl) 14$^{bc}$ —$^{b}$) D$_{2}$ हि (for [अ]पि) G$_{1}$ M$_{1\ 2}$ मानुष (for मानव) K$_{5}$ निवर्तते कदाचन —$^{d}$) T G$_{2-5}$ M$_{3-5}$ कथंचन; G$_{1}$ M$_{1\ 2}$ हि कश्चन (for कदाचन) D$_{2}$ निवर्तेदिति मे मति

15 Ś$_{2}$ missing (cf v l 1) —$^{b}$) B$_{1}$ मदुचेतस, D$_{3}$ अल्पतेजस, D$_{5}$ चेतना (for चेतस) —$^{c}$) K$_{1}$ येन, G$_{1\ 5}$ M यद् (for ये) —$^{d}$) K$_{3}$ B Dc$_{1}$ Dn$_{1}$ T G$_{2}$ अन्वधावन् (for अभ्य) D$_{2}$ अभ्यधावत मोहिता

16 Ś$_{2}$ missing (cf v l 1) —$^{a}$) G$_{1}$ M$_{1\ 2}$ यत्त (for यत्तत्) —$^{c}$) K$_{4}$ B$_{6}$ सप्त, D$_{4}$ शस्त (for शप्त) D$_{7\ 8}$ अग्रे हि (for उग्रेण) —$^{d}$) T G$_{2}$ क्रूराणां (for कुरूणा) K$_{1-4}$ D$_{1}$ सन्निधौ (for शृण्वता) D$_{3}$ lacuna, G$_{1}$ M$_{1\ 2}$ तत (for तदा)

17 Ś$_{2}$ missing (cf v l 1) —$^{a}$) B$_{4}$ से, Dc$_{1}$ Dn$_{1}$ सं (for तन्) T G$_{2-5}$ M$_{3-5}$ सत्यमिति, G$_{1}$ M$_{1\ 2}$ नूनमनु (for नूनमभि) —$^{b}$) G$_{5}$ भीमेन (hypermetric) (for च) Ś$_{1}$ K$_{1\ 3\ 4}$ च घर्जित, K$_{2\ 5}$ D$_{1\ 5}$ T G$_{2-4}$ M$_{3-5}$ विनि(K$_{2}$ °घ)र्जितं (for च नि) — D$_{4}$ om. (hapl) 17$^{c}$–19$^{b}$ —$^{c}$) D$_{1\ 2\ 5\ 6}$ G$_{1}$ M$_{1\ 2}$ भ्राता (for भ्रात्रा) —$^{d}$) D$_{7}$ अपासरत् D$_{5}$ भीमसेनादुपाद्रवत्, S भयाद्भीममवर्जयत्

18 Ś$_{2}$ missing (cf v l 1) D$_{4}$ om 18 (cf

स नूनं विरथं दृष्ट्वा कर्णं भीमेन निर्जितम् ।
प्रत्याख्यानाच्च कृष्णस्य भृशं तप्यति संजय ॥ १९
दृष्ट्वा भ्रातॄन्हतान्युद्धे भीमसेनेन दंशितान् ।
आत्मापराधात्सुमहन्नूनं तप्यति पुत्रकः ॥ २०
को हि जीवितमन्विच्छन्प्रतीपं पाण्डवं व्रजेत् ।
भीमं भीमायुधं क्रुद्धं साक्षात्कालमिव स्थितम् ॥ २१
वडवामुखमध्यस्थो मुच्येतापि हि मानवः ।
न भीममुखसंप्राप्तो मुच्येतेति मतिर्मम ॥ २२
न पाण्डवा न पाञ्चाला न च केशवसात्यकी ।
जानन्ति युधि संरब्धा जीवितं परिरक्षितुम् ॥ २३

संजय उवाच ।

यत्संशोचसि कौरव्य वर्तमाने जनक्षये ।
त्वमस्य जगतो मूलं विनाशस्य न संशयः ॥ २४
स्वयं वैरं महत्कृत्वा पुत्राणां वचने स्थितः ।
उच्यमानो न गृह्णीषे मर्त्यः पथ्यमिवौषधम् ॥ २५
स्वयं पीत्वा महाराज कालकूटं सुदुर्जरम् ।
तस्येदानीं फलं कृत्स्नमवाप्नुहि नरोत्तम ॥ २६
यत्तु कुत्सयसे योधान्युध्यमानान्यथाबलम् ।

---

v l 17) — $^{a}$) K1 3–5 D1 3 5 G1 M यच्च, D7 8 यथा (for यश्च)

19 Ś2 missing (cf v l 1) D4 om $19^{ab}$ (cf. v l 17) For $19^{ab}$ G1 M1 2 subst

861* स नून निर्जित कर्णं दृष्ट्वा भीमेन संयुगे ।

— $^{c}$) G1 M1 2 प्रत्याख्यानेन (for °नाच्च) — $^{d}$) S भृश सजय तप्स्यति

20 Ś2 missing (cf v l 1) — $^{a}$) Ś1 K Dn2 D1 3–8 संख्ये (for युद्धे) — $^{b}$) K2 4 T G1 2 5 M दंसितान्, B1 सर्शि°, B5 निर्जि° (for दशि°) — $^{c}$) N (except Dc1 D8, Ś2 missing) आत्मा(D6 महा)पराधे (for °राधात्) K1 सुम*न्, K4 5 सुमहान्, T G2–5 समूढो, G1 M सुभृश (for सुमहन्) — $^{d}$) G1 M शोचति, G3–5 तप्स्यति (for तप्यति)

21 Ś2 missing (cf v l 1) — $^{a}$) D1 G1 M1 2 जीवितुम् — $^{b}$) Ś1 पाडवाद् S प्रतीप मृत्युमाव्रजेत् — $^{c}$) D4 क्रुध्येत् (for क्रुद्ध) K5 भीम भीमाकृतिं दृष्ट्वा — $^{d}$) D5 [ड]दितं (for स्थितम्)

22 Ś2 missing (cf v l 1) — $^{a}$) D2 वाडवामुखमध्यस्थो — $^{b}$) D5 जीवेत (for मुच्येत) T G2 [ह्]ह (for हि) D4 मुच्यतेतापि मानद (sic), G1 M ह्यपि — B1 om $22^{cd}$ — $^{c}$) S न भीममुखमासाद्य — $^{d}$) K1 2 4 Dn2 D3 4 8 T G1 2 5 M मुच्यतेति, B2 3 5 Dc1 मुच्येदिति, D2 6 मुच्यते हि (for मुच्येतेति) मुच्येत मानव

23 Ś2 missing (cf v l 1) — $^{a}$) B5 Dc1 D2 S Cv पार्था (Dc1 D2 °र्थो) न च (for पाण्डवा न) B3 4 पचाला — $^{b}$) G1 M सत्यकी Cv as in text — $^{c}$) Ś1 K1 3 5 B Dc1 Dn2 D1 जानते, K2 जानीते, K4 Dn1 D3 4 6–8 T जानंते (for जानन्ति) Cv as in text — $^{d}$) K2 D1 4 6 8 T G1 5 जीवितु Cv as in text. — After 23, B Dc1 D5 ins.

862* अहो मम सुताना हि विपन्नं सूत जीवितम् ।

[ D6 यदि (for सूत) ]

24 Ś2 missing (cf v l 1) — $^{a}$) B1 3 Dc1 य (for यत्) K5 B4 Dn1 D7 8 T G2 यस्त्व, D2 G3–5 M5 (inf lin) यस्त्व, D6 स त्व, G1 M1 2 किं तु, M3–5 सर्वं (for यत्स) — $^{b}$) B Dc1 Dn2 D1 महाभये, T G2–5 महाहवे, G1 M1 2 भयावहे (for जनक्षये)

25 Ś2 missing (cf. v l 1) — $^{a}$) D4 चैव (for वैर) — $^{c}$) G1 M गृह्णासि (for गृह्णीषे) — $^{d}$) S मर्तुकामो यथौषध

26 Ś2 missing (cf v l 1) — $^{a}$) Ś1 K1 3 4 D1 मय, D2 स्वीय (for स्वय) — $^{b}$) G1 M काळकूट — $^{c}$) Ś1 K1–3 D1 2 4 सुदुर्जयं (for °जरम्) — $^{d}$) Ś1 K1 3 अवाप्नोति, K4 D1 °प्नोपि (for °प्नुहि) — For $26^{cd}$, G1 M subst

863* प्राप्येदानीं फल तस्य यथा पीत्वा विष तथा ।

— After 26, D5 ins

864* सुकृतस्य सुपृष्टस्य सुजातस्य महामृधे ।

27 Ś2 missing (cf v l 1) B1 om $27^{a}$–$28^{b}$ — $^{a}$) Dc1 यत्त्वं, D1 यत्तत्, D5 यत्र, T G3 4 M1 (sup lin as in text) त्व तु, G2 3 म तु (for यत्तु) — $^{b}$) D5 K2 लोकान्, G1 M यौधान् (for योधान्) B1 महायत्न, यतमानान्, S घटमानान (for युध्य°)

अत्र ते वर्णयिष्यामि यथा युद्धमवर्तत ॥ २७
दृष्ट्वा कर्णं तु पुत्रास्ते भीमसेनपराजितम् ।
नामृष्यन्त महेष्वासाः सोदर्याः पञ्च मारिष ॥ २८
दुर्मर्षणो दुःसहश्च दुर्मदो दुर्धरो जयः ।
पाण्डवं चित्रसंनाहास्तं प्रतीपमुपाद्रवन् ॥ २९
ते समन्तान्महाबाहुं परिवार्य वृकोदरम् ।
दिशः शरैः समावृण्वञ्शलभानामिव व्रजैः ॥ ३०
आगच्छतस्तान्सहसा कुमारान्देवरूपिणः ।
प्रतिजग्राह समरे भीमसेनो हसन्निव ॥ ३१
तव दृष्ट्वा तु तनयान्भीमसेनसमीपगान् ।
अभ्यवर्तत राधेयो भीमसेनं महाबलम् ॥ ३२
विसृजन्विशिखान्राजन्स्वर्णपुङ्खाञ्शिलाशितान् ।
तं तु भीमोऽभ्ययात्तूर्णं वार्यमाणः सुतैस्तव ॥ ३३
कुरवस्तु ततः कर्णं परिवार्य समन्ततः ।
अवाकिरन्भीमसेनं शरैः संनतपर्वभिः ॥ ३४
तान्बाणैः पञ्चविंशत्या साश्वान्राजन्नरर्षभान् ।
ससूतान्भीमधनुषो भीमो निन्ये यमक्षयम् ॥ ३५
प्रापतन्स्यन्दनेभ्यस्ते सार्धं सूतैर्गतासवः ।
चित्रपुष्पधरा भग्ना वातेनेव महाद्रुमाः ॥ ३६
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् । C 7 B 7 K 7

---

Dn1 D4 7 8 महाबलान् ( for यथाबलम् ) — c ) K3 B ( B4 om ) Dc1 Dn2 D3 6 S तत्र ( for अत्र ) K5 B1 3 5 Dc1 Dn2 D3. 5 8 S वर्तयिष्यामि, Dn1 D4 6 कीर्तं, D2 कथ ( for वर्णयिष्यामि )

28 Ś2 missing ( of v l 1 ) B4 om $28^{ab}$ ( of v l 27 ) — a ) K4 D1. 7 8 तु कर्णं ( by transp ), G1 M हि कर्णं — b ) K1-4 D1 भीमसेनेन निर्जित — d ) B Dc1 D5 S ( except T ) भारत ( for मारिष )

29 Ś2 missing ( of v l 1 ) — a ) K1 दुर्धर्षणो, G3 4 अमर्षणो, G5 अमर्षिणो ( for दुर्मर्षणो ) Ś1 दुष्षहश्च, T G1-4 M3-5 दुर्मदश्च, G1 M1 2 दुर्जयश्च, G5 दुर्मर्षश्च ( for दुःसहश्च ) — b ) B1 Dc1 दुर्दमो, D2 दुर्गमो ( for दुर्मदो ) K5 दुर्जयो ( for दुर्धरो ) D7 8 दुर्धरो दुर्मुखो जय , S दुष्पहो विजयो जय — c ) K4 सनाहं ( for सनाहास् ) — d ) D5 स ( for त ) M3 4 5 ( orig as in text, *sup lin* ) प्रतीसम् ( for प्रतीपम् ) A few MSS उपाद्रवत्, G1 M1 2 °व्रजन् ( for °द्रवन् )

30 Ś1 missing ( of v l 1 ) — a ) B4 संमभ्य ( for समन्तान् ) — D4 om $30^{c}$–$32^{d}$ — c ) D6 संप्रवृण्वन् ( for समा )

31 Ś1 missing ( of v l 1 ) D4 om 31 ( of v l 30 ) — a ) G1 M1 2 सहसापततस्तान्स

32 Ś2 missing ( of v l 1 ) D4 om. 32 ( of v l 30 ) — a ) G1 M दृष्ट्वा ते ( M3-5 तु ) तनयास्त्वेतान् — b ) B4 Dc1 -पुरोगतान् ( for समीपगान् ) B5 T G2-5 दुर्मर्षण( B5 भीमसेन )पुरोगमान् — c ) G1 3 4 M अभ्यधावत ( for वर्तत ) — d ) B3 महारथं, T G3. 4 यथाबल, G1 M1 2 महारथ ( for °बलम् )

33 Ś2 missing ( of v l 1 ) — a ) B Dc1 Dn2 S ( except G1 M1 2 ) तीक्ष्णान्, D3 तूर्णं ( for राजन् ) — b ) G1 M हेम ( for स्वर्ण ) K1 5 D1 7 8 शिलासितान् — c ) Ś1 K1-4 D1 महायुद्धे ( for ऽभ्ययात्तूर्णं )

34 Ś2 missing ( of v l 1 ) — a ) T G2-5 कुमारास् ( for कुरवस् ) G1 M पुत्रास्तु तव राधेय — b ) B3 वार्यमाणा ( for परिवार्य ) — c ) D3 अथाकिरन्, G3 4 अवारयन् ( for अवाकिरन् ) G1 M भीमसेनमपि ह्यस्ते

35 Ś2 missing up to भीमध ( of v l 1 ) — a ) S तान्पचत्रि( M तानथ त्रि )शता राजन् ( M बाणै ) — b ) D4 गज ( for राजन् ) Dn2 नरर्षभ, G1 M1 2 महारथान्, M3-5 रथर्षभान् ( for नर ) — For $35^{ab}$, D5 subst

865* भीमसेनस्ततो बाणै पञ्च राजन्सुतांस्तव ।

— c ) G5 lacuna from ससुता up to नि ( in $35^{d}$ ) S ( G5 lacuna ) -धन्वा तु ( for धनुषो ) D7 8 भीमधन्वा भीमबलो — d ) D5 बाणैर्निन्ये, G1 M1 2 प्रैषीद्भीमो ( for भीमो निन्ये ) After निन्ये, K4 reads $37^{bcd}$ for the first time, repeating it in its proper place

36 a ) Ś1 K1 अपतन्; K3 D1 4 प्रपतन् ( for प्राप° ) Ś1 K1-4 D1 5 च ( for ते ) S ते स्यंदनेभ्य. प्रपतन् — d ) G3 4 वातेनैव

37 For the repetition in K4, cf. v l 35 G5 lacuna for $37^{a}$ — c ) K4 ( both times ) D4 [आ]-चिरयं T G2-4 निवार्याचिरयैश्चर्णैर् — d ) D3 जघान

स नूनं विरथं दृष्ट्वा कर्णं भीमेन निर्जितम् ।
प्रत्याख्यानाच्च कृष्णस्य भृशं तप्यति संजय ॥ १९
दृष्ट्वा भ्रातॄन्हतान्युद्धे भीमसेनेन दंशितान् ।
आत्मापराधात्सुमहन्नूनं तप्यति पुत्रकः ॥ २०
को हि जीवितमन्विच्छन्प्रतीपं पाण्डवं व्रजेत् ।
भीमं भीमायुधं क्रुद्धं साक्षात्कालमिव स्थितम् ॥ २१
वडवामुखमध्यस्थो मुच्येतापि हि मानवः ।
न भीममुखसंप्राप्तो मुच्येतेति मतिर्मम ॥ २२
न पाण्डवा न पाञ्चाला न च केशवसात्यकी ।
जानन्ति युधि संरब्धा जीवितं परिरक्षितुम् ॥ २३

संजय उवाच ।

यत्संशोचसि कौरव्य वर्तमाने जनक्षये ।
त्वमस्य जगतो मूलं विनाशस्य न संशयः ॥ २४
स्वयं वैरं महत्कृत्वा पुत्राणां वचने स्थितः ।
उच्यमानो न गृह्णीषे मर्त्यः पथ्यमिवौषधम् ॥ २५
स्वयं पीत्वा महाराज कालकूटं सुदुर्जरम् ।
तस्येदानीं फलं कृत्स्नमवाप्नुहि नरोत्तम ॥ २६
यत्तु कुत्सयसे योधान्युध्यमानान्यथाबलम् ।

v l 17 ) —$^{a}$) K1 3–5 D1 3 5 G1 M यच्च, D7 8 यथा ( for यश्च )

19 Ś2 missing ( cf v l 1 ) D4 om $19^{ab}$ ( cf v l 17 ) For $19^{ab}$ G1 M1 2 subst

861* स नून निर्जित कर्णं दृष्ट्वा भीमेन संयुगे ।

—$^{c}$) G1 5 M1 2 प्रत्याख्यानेन ( for °नाच्च ) —$^{d}$) S भृश सजय तप्स्यति

20 Ś2 missing ( cf v l 1 ) —$^{a}$) Ś1 K Dn2 D1. 3–6 संख्ये ( for युद्धे ) —$^{b}$) K2 4 T G1 2 5 M दंसितान्, B1 संशि°, B5 निर्जि° ( for दंशि° ) —$^{c}$) N ( except Dc1 D8, Ś2 missing ) आत्मा( D6 महा )-पराधे ( for °राधात् ) K1 सुम*न्, K4 5 सुमहान्, T G2–5 संमूढो, G1 M सुभृशं ( for सुमहन् ) —$^{d}$) G1 M शोचति, G3–5 तप्स्यति ( for तप्यति )

21 Ś2 missing ( cf v l 1 ) —$^{a}$) D1 G1 M1 2 जीवितुम् —$^{b}$) Ś1 पाडवाद् S प्रतीपं मृत्युमाव्रजेत् —$^{c}$) D4 क्रुध्येत् ( for क्रुद्ध ) K5 भीम भीमाकृतिं दृष्ट्वा —$^{d}$) D5 [उ]दित ( for स्थितम् )

22 Ś2 missing ( cf v l 1 ) —$^{a}$) D2 वाडवामुखमध्यस्थो —$^{b}$) D5 जीवेत ( for मुच्येत ) T G2 [इ]ह ( for हि ) D4 मुच्यतेतापि मानद ( sic ), G1 M ह्यपि मुच्येत मानव —B4 om $22^{cd}$ —$^{c}$) S न भीममुखमासाद्य —$^{d}$) K1 2 4 Dn2 D3 4 8 T G1 2 5 M मुच्यतेति, B2 3 5 Dc1 मुच्येदिति, D2 5 मुच्यते हि ( for मुच्येतेति )

23 Ś2 missing ( cf v l 1 ) —$^{a}$) B5 Dc1 D2 S Cv पार्थाः ( Dc1 D2 °र्थो ) न च ( for पाण्डवा न ) B3 4 पचाला —$^{b}$) G1 M -सत्यकौ Cv as in text —$^{c}$) Ś1 K1 3 5 B Dc1 Dn2 D1 जानते, K2 जानीते, K4 Dn1 D3 4, 6–8 T जानंते ( for जानन्ति ) Cv as in text —$^{d}$) K2 D1 4 6 8 T G1 5 जीवितु Cv as in text. —After 23, B Dc1 D5 ins

862* अहो मम सुताना हि विपन्नं सूत जीवितम् ।

[ D5 यदि ( for सूत ) ]

24 Ś2 missing ( cf v l 1 ) —$^{a}$) B1 3 Dc1 य ( for यत् ) K5 B4 Dn1 D7 8 T G2 यस्त्व, D2 G3–5 M5 ( inf lin ) यस्त्व, D6 स त्वं, G1 M1. 2 किं तु, M3–5 सर्व ( for यत्स ) —$^{b}$) B Dc1 Dn2 D1 महाभये, T G2–5 महाहवे, G1 M1 2 भयावहे ( for जनक्षये )

25 Ś2 missing ( cf. v l 1 ) —$^{a}$) D4 चैवं ( for वैरं ) —$^{c}$) G1 M गृह्णासि ( for गृह्णीषे ) —$^{d}$) S मर्तुकामो यथौषध

26 Ś2 missing ( cf v l 1 ) —$^{a}$) Ś1 K1 3. 4 D1 श्रयं, D2 स्वीय ( for स्वय ) —$^{b}$) G1 M काळकूटं —$^{c}$) Ś1 K1. Ś1 K1–3 D1. 2 4 सुदुर्जयं ( for °र्जरम् ) —$^{d}$) Ś1 K1 2 अवाप्नोति, 2 4 D1 अस्य ( for तस्य ) —For $26^{cd}$, G1 M subst K4 D1 °प्नोषि ( for °प्नुहि )

863* प्राप्येदानीं फलं तस्य यथा पीत्वा विष तथा ।

— After 26, D5 ins

864* सुकृतस्य सुपृष्टस्य सुजातस्य महामृधे ।

27 Ś2 missing ( cf v l 1 ) B4 om $27^{a}$–$28^{b}$ —$^{a}$) Dc1 यस्त्व, D1 यत्तव्, D6 यत्र, T G3 4 M5 ( sup lin as in text ) त्वं तु, G2 5 स तु ( for यत्तु ) —$^{b}$) D5 K2 लोकान्, G1 M यौधान् ( for योधान् ) B1 महामृदे, यतमानान्, S घटमानान् ( for युध्य° )

अत्र ते वर्णयिष्यामि यथा युद्धमवर्तत ॥ २७
दृष्ट्वा कर्णं तु पुत्रास्ते भीमसेनपराजितम् ।
नामृष्यन्त महेष्वासाः सोदर्याः पञ्च मारिष ॥ २८
दुर्मर्षणो दुःसहश्च दुर्मदो दुर्धरो जयः ।
पाण्डवं चित्रसंनाहास्तं प्रतीपमुपाद्रवन् ॥ २९
ते समन्तान्महाबाहुं परिवार्य वृकोदरम् ।
दिशः शरैः समावृण्वञ्शलभानामिव व्रजैः ॥ ३०
आगच्छतस्तान्सहसा कुमारान्देवरूपिणः ।
प्रतिजग्राह समरे भीमसेनो हसन्निव ॥ ३१
तव दृष्ट्वा तु तनयान्भीमसेनसमीपगान् ।
अभ्यवर्तत राधेयो भीमसेनं महाबलम् ॥ ३२
विसृजन्विशिखान्राजन्स्वर्णपुङ्खाञ्शिलाशितान् ।
तं तु भीमोऽभ्ययात्तूर्णं वार्यमाणः सुतैस्तव ॥ ३३
कुरवस्तु ततः कर्णं परिवार्य समन्ततः ।
अवाकिरन्भीमसेनं शरैः संनतपर्वभिः ॥ ३४
तान्बाणैः पञ्चविंशत्या साश्वान्राजन्नरर्षभान् ।
ससूतान्भीमधनुषो भीमो निन्ये यमक्षयम् ॥ ३५
प्रापतन्स्यन्दनेभ्यस्ते सार्धं सूतैर्गतासवः ।
चित्रपुष्पधरा भग्ना वातेनेव महाद्रुमाः ॥ ३६
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् । C 7 B 7 K 7

Dn1 D4. 7 8 महाबलान् ( for यथाबलम् ) — $^{c}$ ) K3 B ( B4 om. ) Dc1 Dn2 D3 6 S तत्र ( for अत्र ) K5 B1 3 5 Dc1 Dn2 D3. 5 8 S वर्तयिष्यामि, Dn1 D4 6 कीर्त°, D2 कथ ( for वर्णयिष्यामि )

28 Ś2 missing ( cf v l 1 ) B4 om $28^{ab}$ ( cf v l 27 ) — $^{a}$ ) K4 D1 7 8 तु कर्णं ( by transp ), G1 M हि कर्णं — $^{b}$ ) K1–4 D1 भीमसेनेन निर्जित — $^{d}$ ) B Dc1 D5 S ( except T ) भारत ( for मारिष )

29 Ś2 missing ( cf v l 1 ) — $^{a}$ ) K1 दुर्धर्षणो, G3 4 अमर्षणो, G5 अमर्षिणो ( for दुर्मर्षणो ) Ś1 दु षहश्च, T G2–4 M3–5 दुर्मदश्च, G1 M1. 2 दुर्जयश्च, G6 दुर्मर्षश्च ( for दु सहश्च ) — $^{b}$ ) B1 Dc1 दुर्दमो, D2 दुर्गमो ( for दुर्मदो ) K5 दुर्जयो ( for दुर्धरो ) D7 8 दुर्धरो दुर्मुखो जय , S दु षहो विजयो जय — $^{c}$ ) K4 संनाहं ( for सनाहास् ) — $^{d}$ ) D5 स ( for ते ) M3 4 5 ( orig as in text, *sup lin* ) प्रदीसम् ( for प्रतीपम् ) A few MSS उपाद्रवत्, G1 M1 2 °भ्रजन् ( for द्रवन् )

30 Ś2 missing ( cf v l 1 ) — $^{a}$ ) B4 समन्य ( for समन्तान् ) — D4 om $30^{c}$–$32^{d}$ — $^{c}$ ) D6 संप्र वृण्वन् ( for समा )

31 Ś2 missing ( cf v l 1 ) D4 om 31 ( cf. v l 30 ) — $^{a}$ ) G1 M1 2 सहसापततस्तान्स

32 Ś2 missing ( cf v l 1 ) D4 om. 32 ( cf v l 30 ) — $^{a}$ ) G1 M दृष्ट्वा ते ( M3–5 तु ) तनयांस्त्वेतान् — $^{b}$ ) B4 Dc1 पुरोगतान् ( for समीपगान् ) B5 T G2–5 दुर्मर्षण( B5 भीमसेन )पुरोगमान् — $^{c}$ ) G1 3 4 M अभ्य धावत ( for वर्तत ) — $^{d}$ ) B3 महारथं, T G3 4 यथा बलं, G1 M1 2 महारथ ( for °बलम् )

33 Ś2 missing ( cf v l 1 ) — $^{a}$ ) B Dc1 Dn2 S ( except G1 M1 2 ) तीक्ष्णान्, D3 तूर्णं ( for राजन् ) — $^{b}$ ) G1 M हेम ( for स्वर्ण ) K1 5 D1 7 8 शिला सितान् — $^{c}$ ) Ś1 K1–4 D1 महायुद्धे ( for ऽभ्ययात्तूर्णं )

34 Ś2 missing ( cf v l 1 ) — $^{a}$ ) T G2–5 कुमा रास् ( for कुरवस् ) G1 M पुत्रास्तु तव राधेय — $^{b}$ ) B3 वार्यमाणा ( for परिवार्य ) — $^{c}$ ) D6 अथाकिरन्, G3 4 अवारयन् ( for अवाकिरन् ) G1 M भीमसेनमपि ध्नंस्ते

35 Ś2 missing up to भीमध ( cf. v l 1 ) — $^{a}$ ) S तान्पञ्चत्रिं( M बानय त्रिं)शता राजन् ( M बाणै ) — $^{b}$ ) D4 गज ( for राजन् ) Dn2 नरर्षभ, G1 M1 2 महा रथान्, M3–5 रथर्षभान् ( for नर° ) — For $35^{ab}$, D5 subst

865* भीमसेनस्ततो बाणै पञ्च राजन्सुतांस्तव ।

— $^{c}$ ) G5 lacuna from ससुता up to नि ( in $35^{d}$ ) S ( G5 lacuna ) धन्वा तु ( for धनुषो ) D7 8 भीम धन्वा भीमबलो — $^{d}$ ) D5 बाणैर्निन्ये, G1 M1 2 प्रैषी द्भीमो ( for भीमो निन्ये ) After निन्ये, K4 reads $37^{bcd}$ for the first time, repeating it in its proper place

36 $^{a}$ ) Ś1 K1 अपतन्, K3 D1 4 प्रपतन् ( for प्राप° ) Ś1 K1–4 D1 5 च ( for ते ) S ते स्यंदनेभ्य प्रपतन् — $^{d}$ ) G3 4 वातेनैव

37 For the repetition in K4, cf v l 35 G5 lacuna for $37^{c}$ — $^{c}$ ) K4 ( both times ) D4 [सा] धिरथं T G2–4 निवार्यातिरथैर्बाणैर् — $^{d}$ ) D3 जघान

संवार्याधिरथिं बाणैर्यज्जघान तवात्मजान् ॥ ३७
स वार्यमाणो भीमेन शितैर्बाणैः समन्ततः ।
सूतपुत्रो महाराज भीमसेनमवैक्षत ॥ ३८
तं भीमसेनः संरम्भात्क्रोधसंरक्तलोचनः ।
विस्फार्य सुमहच्चापं मुहुः कर्णमवैक्षत ॥ ३९

इति श्रीमहाभारते द्रोणपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

# १११

संजय उवाच ।
तवात्मजांस्तु पतितान्दृष्ट्वा कर्णः प्रतापवान् ।
क्रोधेन महताविष्टो निर्विण्णोऽभूत्स जीवितात् ॥ १
आगस्कृतमिवात्मानं मेने चाधिरथिस्तदा ।
भीमसेनं ततः क्रुद्धः समाद्रवत संभ्रमात् ॥ २
स भीमं पञ्चभिर्विद्ध्वा राधेयः प्रहसन्निव ।
पुनर्विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ ३
अवहासं तु तं पार्थो नामृष्यत वृकोदरः ।
ततो विव्याध राधेयं शतेन नतपर्वणाम् ॥ ४
पुनश्च विशिखैस्तीक्ष्णैर्विद्ध्वा पञ्चभिराशुगैः ।

---

च, G1 M आजघान (for यज्जघान)

38 $^{a}$) K2 3 5 B1 3 5 Dn1 D5 7 8 G1 M1. 2 स- (for स) — $^{b}$) K4 5 Dn1 D1 5 सितैर् — $^{c}$) Dn1 सूतपुत्रा D5 महाबाहुर् (for °राज) — $^{d}$) D1 7 8 G5 अवेक्षत

39 K1 om (hapl) 39 — $^{a}$) D1 संरब्धा, T G M3-5 संरब्ध, M1 2 संक्रुद्ध (for सरम्भात्) — $^{b}$) D6 T G3-5 M3 5 क्रोधात् (for क्रोध) G1 M1 2 रक्तात् (for -सरक्त) — $^{c}$) K3 Dn1 D2 4 5 च, D3 6-8 तु (for सु) K1 D7 8 महाचाप S (except G5) विस्फारयन्महच्चाप — $^{d}$) D2 G1 M मुहुर् (for कर्णम्)

Colophon om in D1 —*Sub parvan* Ś K4 B2-4 Dc1 Dn1 D1 2 जयद्रथवध —*Adhy name* Ś1 K3 5 B2 4 Dn2 D1 7 8 G1 M1 2 भीमसेनप्रवेश, K1 2 B1 3 5 Dc1 Dn1 भीमप्रवेश, K4 भीमसात्यकीप्रवेश, Dn1 D5 पंचकुमारवधं, D2 भीमसेनपराक्रमे धार्तराष्ट्रवध, D3 6 भीमसेनप्रवेशे दुर्मर्षणादिपंचवध —*Adhy no* (figures, words or both) B1 T G2-4 132, B2 62; B5 141, Dn1 135; D2 138, G1 M 131, G5 130 —*Śloka no.* Dc1 40, Dn1 39.

## 111

1 $^{a}$) G1 M पुत्रास् (for [आ]त्मजास्) — $^{d}$) G1 M निरविग्न (for निर्विण्णोऽभूत्) Ś1 K2 3 D1 2 5 7 8 जीविते, B1 5 D4. 6 जीवितान् (for °तात्)

2 D3 6 om 2 Dc1 reads $2^{ab}$ on marg — $^{b}$) T G2-4 चातिरथिस् Ś1 तत, D4 8 तथा (for तदा) — After $2^{ab}$, Dc1 (marg) ins

866* यत्प्रत्यक्षं तव सुता भीमेन निहता रणे ।

— Ś1 om $2^{c}$–$3^{b}$ — $^{c}$) B Dc1 Dn1 G1 5 M1 2 भीमसेनस्, T G3 4 °वेग, G2 °तेगस् (for °सेन) Ś1 B3 तदा (for तत) Dn2 क्रुद्ध — $^{d}$) Dn D2 4 7 8 समारोहत (for °द्रवत) D7 सभ्रमान् K5 D5 G1 M समारोहत्ससंभ्रमात्, B तमाधाव (B1 तमधाव, B4 समाधाव, B5 तमावाह)दसंभ्रमन् (B1 °म, B4 °म, B5 °मात्), Dc1 तमधावदसंभ्रमन्, T G2-5 समारोहद्रग (G4 °हद्रुद) शुभ, M1 3-5 समाह्वयदरिंदम, Bom ed कर्णस्य निशिताञ्शरान् — After 2, Bom ed ins

867* निचखान स संभ्रान्तः पूर्ववैरमनुस्मरन् ।

3 Ś1 om $3^{ab}$ (of v 1 2) — $^{b}$) G1 M राधेयो प्रहसन्भृशं — $^{d}$) G1 M1 2 हेम (for स्वर्ण) K4 5 Dc1 D4 7 8 शिलासितै, T G3-5 शिलीमुखै (for शिलाशितै).

4 $^{a}$) Dn1 अवहारं; S अपहासं (for अवहासं). T G2-5 कृतं (for तु तं). D1 तान्पार्थो; D4 पार्थेन; D6 ते पार्थो (for तं पार्थो) B Dc1 अविचिन्त्याथ तान्बाणान्; D2 अथ हेला तु तां पार्थो — $^{b}$) B Dc1 कर्णेनास्तान् — $^{d}$) (for नामृष्यत) — $^{c}$) B Dc1 रणे (for ततो) T G3 4 शरेण (for शतेन) K3 B1-4 Dn2 D3 [आ]

धनुश्चिच्छेद भल्लेन सूतपुत्रस्य मारिष ॥ ५
अथान्यद्धनुरादाय कर्णो भारत दुर्मनाः ।
इषुभिश्छादयामास भीमसेनं समन्ततः ॥ ६
तस्य भीमो हयान्हत्वा विनिहत्य च सारथिम् ।
प्रजहास महाहासं कृते प्रतिकृतं पुनः ॥ ७
इषुभिः कार्मुकं चास्य चकर्त पुरुषर्षभः ।
तत्पपात महाराज स्वर्णपृष्ठं महास्वनम् ॥ ८
अवारोहद्रथात्तस्मादथ कर्णो महारथः ।
गदां गृहीत्वा समरे भीमसेनाय चाक्षिपत् ॥ ९
तामापतन्तीं सहसा गदां दृष्ट्वा वृकोदरः ।
शरैरवारयद्राजन्सर्वसैन्यस्य पश्यतः ॥ १०
ततो बाणसहस्राणि प्रेषयामास पाण्डवः ।
सूतपुत्रवधाकाङ्क्षी त्वरमाणः पराक्रमी ॥ ११
तानिषूनिषुभिः कर्णो वारयित्वा महामृधे ।
कवचं भीमसेनस्य पातयामास सायकैः ॥ १२
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
पश्यतां सर्वभूतानां तदद्भुतमिवाभवत् ॥ १३
ततो भीमो महाराज नवभिर्नतपर्वणाम् ।
रणेऽप्रेषयत क्रुद्धः सूतपुत्रस्य मारिष ॥ १४
ते तस्य कवचं भित्त्वा तथा बाहुं च दक्षिणम् । C 7 5310 B 7 134 K 7, 136

नतपर्वणा, B5 Dn1 D4–6 T G1 3 4 M नतपर्वणा

5 $^{a}$) T G2–5 तस स, M3–5 ततश्च (for पुनश्च) — $^{b}$) B Dc1 विद्ध्वा मर्मसु पंचभि — For $6^{ab}$, G1 M1. 2 subst

868* रणे भूयोऽपि राधेय विद्ध्वा पञ्चभिरायसैः ।

— $^{d}$) D7 तत्र (for सूत) M3–5 मारुति (for मारिष)

6 B5 reads $6^{bc}$ on marg — $^{b}$) K5 D5 7 8 सं युगे (for दुर्मना) Dn1 D4 कर्णो भारतमाहवे, D2 कर्णो भारसहं दृढं — B5 reads $6^{d}$ twice — $^{d}$) B1–4 5 (both times) Dc1 परंतप (B3 4 प) (for समन्तत)

7 $^{b}$) G1 M [अ]पि (for च) K1 मारिष (for सार थिम्) D2 निहत्य च स सारथिं — $^{c}$) D8 महासंख्ये (for हास्म) D4 प्रजहा****स — $^{d}$) Ś1 K1 2 4 B4 D1 5 T G कृत (for कृते) K1 5 D8 प्रतिकृतिं, K2 4 कृति, K3 B Dc1 कृते D5 °कृतान्, D7 प्र*कृति (for प्रतिकृतं) B4 सति, T G3 4 महत्, G1 2 5 M स्मरन् (for पुन)

8 $^{b}$) D5 7 8 पुरुषर्षभ G1 M न्यकृन्तत्तथातरे — $^{c}$) Ś2 K1–4 B1 3 D1 2 उत्पपात (for तत्प) — $^{d}$) T G2–5 महद्धनु (for महास्वनम्) — For $8^{cd}$, G1 M subst

869* पपाताथ महच्चापं हेमपृष्ठं दुरासदम् ।

[ G1 M1 2 च (for [अ]थ). G1 M1 2 दुरानमं (for °सदम्) ]

9 $^{a}$) G1 M अवप्लुत्य (for अवारोहद्) G1 M1 2 तूर्णं (for तस्माद्) — $^{b}$) G1 M1. 2 तस्मात्; M3–5 द्रुत (for अथ) D5 महाबल (for °रथ) — $^{d}$) D6 वाक्षिपत्, D3 चाक्षिपन् (for °पत्) B2–5 भीमाय प्राहिणोद्रुषा (B4 तदा), G1 M मघवानशनीमिव

10 $^{a}$) D6 आपतत B2–4 Dc1 आलक्ष्य (for सहसा) D4 ततोपततीं सहसा — $^{b}$) B2–4 Dc1 भीमसेनो महागदा — $^{c}$) D2 6 आवारयद्, G1 M1 2 वारितवान् (for अवारयद्)

11 $^{b}$) D4 प्रेरयामास (for प्रेष) D5 भारत (for पाण्डव)

12 $^{b}$) S महाहवे (for मृधे) — $^{cd}$) M3–5 transp भीमसेनस्य and पातयामास Ś2 K3 पाटयामास, K5 G2 वारया (for पातया°)

13 $^{a}$) G1 M स (for [ए]न) — $^{b}$) Ś2 (marg as in text) K1 2 D1 क्षुद्रकाना, B Dc1 नाराचाना; Dn1 D4 क्षुरप्राणा, S सायकाना (for क्षुद्रकाणां) Ś K1–3 Dn2 D1 3 6 समा(K1 म)र्दयत्, K4 °र्द्रयत्, D2 4 7 T G M1–4 समर्पयत् (for समा) — $^{c}$) Ś1 B Dc1 Dn D3 6 सैन्याना (for भूताना) — $^{d}$) D7 [अ]भवन्

14 $^{a}$) B Dc1 T G2–5 M3–5 महाबाहुर् (for °राज) — $^{b}$) Ś2 K2–4 D1 5–8 G3. 4 नवति (for नवभिर्) B4 5 Dc1 Dn1 D2 G1 M पर्वभि; D8 -पर्वणीं (for पर्व णाम्) — $^{c}$) Ś K1 D1 [ऽ]प्रेषयत; D3 6 संप्रेषयत् (for ऽप्रेषयत) B Dc1 S प्रेषयामास संक्रुद्ध (B4 [marg] संरब्ध) — $^{d}$) G1 M सूतपुत्राय (for °त्रस्य) M3–5 भारत (for मारिष)

15 $^{b}$) G1 M भित्त्वा (for तथा) — $^{c}$) K1–3 G2

78

अभ्ययुर्धरणीं तीक्ष्णा वल्मीकमिव पन्नगाः ।। १५

राधेयं तु रणे दृष्ट्वा पदातिनमवस्थितम् ।
भीमसेनेन संरब्धं राजा दुर्योधनोऽब्रवीत् ।
त्वरध्वं सर्वतो यत्ता राधेयस्य रथं प्रति ।। १६

ततस्तव सुता राजञ्श्रुत्वा भ्रातुर्वचो द्रुतम् ।
अभ्ययुः पाण्डवं युद्धे विसृजन्तः शिताञ्शरान् ।। १७

चित्रोपचित्रश्चित्राक्षश्चारुचित्रः शरासनः ।
चित्रायुधश्चित्रवर्मा समरे चित्रयोधिनः ।। १८

आगच्छतस्तान्सहसा भीमो राजन्महारथः ।
साश्वसूतध्वजान्यत्तान्पातयामास संयुगे ।
ते हता न्यपतन्भूमौ वातनुन्ना इव द्रुमाः ।। १९

दृष्ट्वा विनिहतान्पुत्रांस्तव राजन्महारथान् ।
अश्रुपूर्णमुखः कर्णः कश्मलं समपद्यत ।। २०

रथमन्यं समास्थाय विधिवत्कल्पितं पुनः ।
अभ्ययात्पाण्डवं युद्धे त्वरमाणः पराक्रमी ।। २१

तावन्योन्यं शरैर्विद्ध्वा स्वर्णपुङ्खैः शिलाशितैः ।
व्यभ्राजेतां महाराज पुष्पिताविव किंशुकौ ।। २२

षट्त्रिंशद्भिस्ततो भल्लैर्निशितैस्तिग्मतेजनैः ।

---

M3–5 अत्यगुर्, B1 3 5 प्रत्ययुर्, B2 4 Dc1 Dn D2 3 6 अभ्ययुर्, D5 अगच्छद् (for अभ्ययुर्) S राजन् (for तीक्ष्णा) — After 15, B Dc1 ins

870* स छाद्यमानो बाणौघैर्भीमसेनधनुश्च्युतैः ।
पुनरेवाभवत्कर्णो भीमसेनात्पराङ्मुखः ।

[ (L 1) B1 2 Dc1 सछाद्यमानो, B4 आच्छाद्य° — (L 2) B4 भीमसेन- (for °सेनात्) ]

16 B3 reads $16^{abcd}$ twice — a) G3 4 स (for तु) B1 2 3 (second time) 4 5 Dc1 तं पराङ्मुखमालोक्य — b) B3 (first time) D5 7 8 T G2–5 M3–5 पदातिं (D7 सदासि [sic]) समवस्थितं, D4 पदातिन*वस्थितं, G1 M1 2 पदातिं स महारथ — c) Ś1 D2 भीमसेनं च (for °नेन) D1 सरब्धै, S संसक्त (for संरब्धं) B1 2 3 (second time) 4 5 Dc1 D3 कौंतेयशरसछन्न (D3 °स रब्धं) — d) S भ्रातॄन् (for राजा) B3 (first time) राजन्युधि पराङ्मुख — e) Dn1 D4 8 यत्नाद् (for यत्ता) — f) K5 Dn1 D4 5 7 8 [अ]भि(Dn1 °पि)रक्षणे (for रथं प्रति)

17 b) D2 G1 M1 2 भ्रातृ (for भ्रातुर्) Dc1 D3 [ऽ]द्भुतं (for द्रुतम्) Ś1 श्रुत्वा वाक्यं **दितं, Ś2 K1–4 D1 श्रुत्वा राज्ञोदितं वच, K5 D4 7 8 भ्रातु श्रुत्वा वचो हितं. — c) Dn3 D3 6 सर्वे (for युद्धे). — d) G1 M1 2 विकिरंत (for विसृजन्त) B1 Dc1 शिलीमुखान्; T G3–5 शराञ्शितान् (by transp.) K4 D4, 7, 8 सिताञ्.

18 a) D2 चित्रोपचित्रौ, T चित्रो विचित्रश् (for चित्रोपचित्रश्) K2 Dc1 (marg as in text) चित्राख्यश्, B1 (marg as in text) चित्रागश् (for चित्राक्षश्) — b) D5 चारुचित्र, D7 8 G3–5 चारुश्चित्र, G1 M1 2, 5 चापचित्र, M3 4 चापश्चित्र (for चारुचित्र) D2 सनातन, G1 M शरासनि (for °सन) — c) D4 चित्र युद्धश् — d) G1 M1 2 तत्र सेनाप्रयायिन

19 a) G1 M1 2 सहसापततस्तान्स — b) D1 महा रथान्, T G2–5 M3–5 °मना, G1 M1 2 °बल (for °रथ) — For $19^{ab}$, B2–5 Dc1 subst

871* तानापतत एवाशु भीमसेनो महारथः ।
[ Dc1 महाबल (for °रथ) ]

— c) B5 हत्वा, D4 युक्तान्, D7 8 मत्तान् (for यत्तान्) B1–4 Dc1 एकैकेन शरेणाजौ (B4 °णाशु), D3 G1 M साश्वसूतध्वजरथान् (M3–5 °छत्रान्) — d) B1–4 Dc1 ते सुतान्, S पांडव (for संयुगे) — e) D7 8 चापतन् (for न्यप°) — f) Ś1 B Dc1 वातरुग्णा, Dn1 D3 5 6 °भग्ना, S वायुनुन्ना (for वात°) K4 द्रुमा इव (by transp), G1 M नगा इव

20 b) G2 महामना (for रथान्) — c) T G2–5 अश्रुनेत्र- (for °पूर्ण) G1 M साश्रुनेत्रो भृश कर्ण — d) Ś2 D5 T G2–5 M3–5 प्रत्यपद्यत (for सम°) B2–4 Dc1 क्षत्तु सस्मार तद्वच

21 a) K3 B3 4 Dc1 रथं चान्यं, T G2–5 सोन्य रथं (for रथमन्य) G1 M अथान्य रथमास्थाय

22 a) Dn2 om from विद्ध्वा up to निशितै (in $23^{b}$) B2 3 5 Dc1 भित्त्वा (for विद्ध्वा) — b) K4 5 D4, 8 शिलासितै.; D7 शितासितै (for शिलाशितै.), — c) B2 M3–5 व्यराजेतां; Dn1 D1 विभ्रा°; D5, 7, 8 G1 M अभ्रा° (for व्यभ्रा°). B1, 3 4 Dc1 यथा मेघौ; Ś1 महारंगे (for महाराज) — d) T G3 किंशुके Ś1 किंशुकाविव पुष्पितौ, B1 3, 4 Dc1 D1 संस्यूतौ सूर्यरश्मिभि

23 Dn2 om up to निशितै (cf v 1 22) B1 om $23^{ab}$ Dn1 reads 23 twice — a) D3 6 षड्विंश

व्यधमत्कवचं क्रुद्धः सूतपुत्रस्य पाण्डवः ॥ २३
रक्तचन्दनदिग्धाङ्गौ शरैः कृतमहाव्रणौ ।
शोणिताक्तौ व्यराजेतां कालसूर्याविवोदितौ ॥ २४
तौ शोणितोक्षितैर्गात्रैः शरैश्छिन्नतनुच्छदौ ।
विवर्माणौ व्यराजेतां निर्मुक्ताविव पन्नगौ ॥ २५
व्याघ्राविव नरव्याघ्रौ दंष्ट्राभिरितरेतरम् ।
शरदंष्ट्रा विधुन्वानौ ततक्षतुररिंदमौ ॥ २६
वारणाविव संसक्तौ रङ्गमध्ये विरेजतुः ।
तुदन्तौ विशिखैस्तीक्ष्णैर्मत्तवारणविक्रमौ ॥ २७
प्रच्छादयन्तौ समरे शरजालैः परस्परम् ।
रथाभ्यां नादयन्तौ च दिशः सर्वा विचेरतुः ॥ २८
तौ रथाभ्यां महाराज मण्डलावर्तनादिषु ।
व्यरोचेतां महात्मानौ वृत्रवज्रधराविव ॥ २९
सहस्ताभरणाभ्यां तु भुजाभ्यां विक्षिपन्धनुः ।
व्यरोचत रणे भीमः सविद्युदिव तोयदः ॥ ३०
स चापघोषस्तनितः शरधाराम्बुदो महान् ।

C 7 1
B 7 1
K 7 1

---

स्मिम् B2 3 Dc1 षट्त्रिंशता ततो बाणैर्, S तत (M5 पुन) षट्त्रिंशता भल्लैर् —b) D1 5 7 8 तेजनै (for ते जसै) B3 5 Dc1 स्वर्णपुङ्खैः शिलाशितैः (= 22b) —c) T G2 व्यधमत् G3 भीम (for क्रुद्ध) — After 23, B Dc1 ins

872* सूतपुत्रोऽपि कौन्तेयं शरैः संनतपर्वभिः ।
पञ्चाशता महाबाहुर्विव्याध भरतर्षभ ।

24 B2 Dc1 om 24 —c) Dn1 शोणाक्तौ तु, D3 शोणिताक्षौ (for °ताक्तौ) Ś1 K1-4 Dn1 D3-6 विराजेतां (K4 °ते), D3 व्यरोचेतां (for व्यराजेता) — Ś1 K4 D1 om (hapl) 24d–25c —d) Ś1 K (K4 om) B1 4 5 Dn D3-8 चन्द्रसूर्याव्, D2 सूर्यचन्द्राव् (for कालसूर्याव्) B4 इवापरौ (for इवोदितौ)

25 Ś2 K4 D1 om 25abc (cf v l 24) —a) Ś1 K2 D5 शोणितोक्षितौ —c) B Dc1 Dn1 कर्णभीमौ, S विवृताङ्गौ (for विवर्माणौ) K1-3 D4 5 7 8 विराजेता, D2 व्यरोचेता (for व्यराजेतां) K5 विराजेता विवर्माणौ — After 25, S ins

873* क्रोधाग्नितेजसा दीप्तौ संरम्भाद्रक्तलोचनौ ।
व्यभ्राजेता महाराज विधूमाविव पावकौ ।

26 a) G2 महाराज (for नरव्याघ्रौ) — Dn1 om. —c) Ś1 K1-3 Dn2 D2-5 7 8 S शरदंष्ट्रौ K3 विधुन्वानौ, G1 2 5 M विधू (for विधु) —d) श्रतुर् (sic) (for तत) G1 M शरैर्घोरैः परस्परं r 26cd, B Dc1 subst

874* शरधारासृजौ वीरौ मेघाविव ववर्षतु ।

a) Dn1 संरब्धौ, G3-5 चासक्तौ (for संसक्तौ) ) K2 रक्तमध्ये (for रङ्ग) S विचेरतु. (for विरे ) —c) G1 M2 सुदन्तौ; M3-5 तु° (for तु°) ; Dn D1 3 5-8 T G1-5 तूर्णं (for तीक्ष्णैर्) —d) K4 द्विरद (for वारण) G1 M1 (sup lin, orig as in text) 2-5 तूर्णरूपौ जयैषिणौ

28 a) K2 परमे (for समरे) —b) D6 7 T G2-5 समतत (for परस्परम्) —d) Dn1 विरेजतु (for विचेरतु)

29 Ś2 om 29ab —c) Ś2 K1 2 D4 6 G3 4 व्यरोचत्तां (for °चेता) Ś2 K2 Dn1 महाराज (for °त्मानौ) —d) D6 7 यत्र (for वृत्र) — For 27–29, B Dc1 subst.

875* वारणाविव चान्योन्यं विषाणाभ्यामरिंदमौ ।
निर्भिन्दन्तौ स्वगात्राणि सायकैश्चारु रेजतु ।
नादयन्तौ प्रवल्गन्तौ विक्रीडन्तौ परस्परम् ।
मण्डलानि विकुर्वाणौ रथाभ्यां रथसत्तमौ ।
वृषभाविव नर्दन्तौ बलिनौ वासितान्तरे । [5]
सिंहाविव पराक्रान्तौ नरसिंहौ महाबलौ ।
परस्पर वीक्षमाणौ क्रोधसंरक्तलोचनौ ।
युयुधाते महावीर्यौ शक्रवैरोचनी यथा ।

[(L 2) B1. 3 विभिदतौ (for निर्भिन्दन्तौ) B2 3 Dc1 स्म (for स्व) Dc1 चाव (for चारु) —(L 3) Dc1 नर्दयतौ (for नाद) Dc1 प्रवर्षतौ, Bom ed प्रहर्षतौ (for प्रवल्गन्तौ) B4 विक्रीडतौ ]

30 a) K3-5 Dn D3 4 7 8 M3 सहस्राभ (M3 °स्राव) रणाभ्यां तु, B Dc1 ततो भीमो महाबाहुर् —b) Ś K1-4 Dn2 D1, 2, 6 7 व्याक्षिपद् (K3 4 D3 7 °न्), K5 D5 चाक्षिपन्, B Dc1 विक्षिपद्, Dn1 D4 5 चाक्षिपद् (for विक्षिपन्) —c) B Dc1 व्यराजत रणे राजन्

31 a) B (except B4) नेमि (for चाप) —b) K5 शरधारांबुजो, D1 °रोंबुदो B (except B4) Dc1 चापविद्युच्छरांशुभिः; S शरधारामहाम्बुदः —c) Ś K1-3

.10 6 35 6 37 भीममेघो महाराज कर्णपर्वतमभ्ययात् ॥ ३१
ततः शरसहस्रेण धनुर्मुक्तेन भारत ।
पाण्डवो व्यकिरत्कर्णं घनोऽद्रिमिव वृष्टिभिः ॥ ३२
तत्रावैक्षन्त पुत्रास्ते भीमसेनस्य विक्रमम् ।
सुपुङ्खैः कङ्कवासोभिर्यत्कर्णं छादयच्छरैः ॥ ३३
स नन्दयन्रणे पार्थं केशवं च यशस्विनम् ।
सात्यकिं चक्ररक्षौ च भीमः कर्णमयोधयत् ॥ ३४
विक्रमं भुजयोर्वीर्यं धैर्यं च विदितात्मनः ।
पुत्रास्तव महाराज ददृशुः पाण्डवस्य ह ॥ ३५

इति श्रीमहाभारते द्रोणपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

# ११२

संजय उवाच ।
भीमसेनस्य राधेयः श्रुत्वा ज्यातलनिस्वनम् ।
नामृष्यत यथा मत्तो गजः प्रतिगजस्वनम् ॥ १
अपक्रम्य स भीमस्य मुहूर्तं शरगोचरात् ।

---

भीमसेनो, $K_5$ $Dn_1$ $D_{4\,5\,7\,8}$ महाघोषो, $Dn_2$ भीमघोष, S भीममेघ ($G_5$ °व) (for भीममेघो) B (except $B_4$) $Dc_1$ भीमसेनमहामेघ — [d]) $Ś_1$ $Dn_2$ $D_{5\,6}$ अभ्यगात्, B (except $B_4$) $Dc_1$ आवृणोत् (for अभ्ययात्) S कर्णमेघोभ्य($G_5$ °मेवाभ्य)याद्युधि

32 [b]) $B_{2\,3}$ $Dc_1$ सम्यगस्तेन भारत, S सुप्रयुक्तेन भा° — [c]) $B_{1\,3\,4}$ [ऽ]वाकिरत् (for व्यकि°) $K_4$ पाडवो व्यधिरत्कर्णों (sic) — [d]) B $Dc_1$ भीमो भीमपराक्रम — For 32[cd], S subst.

876* भीममाच्छादयत्तूर्णं यथाद्रिं तोयदोऽम्बुना ।

33 [a]) $G_1$ $M_{1\,2}$ तत (for तत्र) $Ś_2$ $D_{6\,8}$ [अ]वेक्षंत, $G_{1-4}$ M प्रेक्षंत; $G_5$ हैक्षंत (for [अ]वैक्षन्त) B $Dc_1$ तत्रापश्यंस्तव सुता — [c]) $Ś_1$ $K_{1-4}$ $D_{1\,4\,7\,8}$ सपुंखै $B_{3\,4}$ $Dc_1$ सुवर्णपुंखैरिषुभि — [d]) $Ś_1$ सोकिरत, $Ś_2$ $K_2$ $Dn_1$ $D_{1\,8}$ छादयन् (for छादयत्) $B_{2\,3}$ $Dc_1$ $D_{5\,6}$ $G_{1,3\,4}$ M कर्णं प्रा($D_6$ $G_{3\,4}$ प्र-, $G_1$ M आ)च्छादय च्छरै° ($B_2$ [marg] °च्छितै), $B_4$ $D_7$ T $G_{2\,5}$ कर्णं प्रच्छादयच्छरै° ($G_5$ °जवै)

34 [a]) $B_4$ नदयद् — [b]) $D_2$ महाद्युतिं (for यशस्विनम्) — [c]) $D_2$ तु (for च) — [d]) $B_{2-4}$ $Dc_1$ अवारयत् (for अयोध°)

35 [b]) S ददृशुर् (for धैर्यं च) B (except $B_1$) $Dc_1$ सुमहात्मन (for विदिता°) — [d]) $D_2$ तु (for ह) $B_{2-4}$ $Dc_1$ दृष्ट्वा विमनसोभवन् ($Dc_1$ °वत्), S भीमसेन ($G_5$ om न)स्य संयुगे

Colophon — *Sub-parvan* $Ś_1$ $K_{1-4}$ $B_{3,4}$ $Dc_1$ $Dn_1$ $D_{1-3\,6-8}$ जयद्रथवध — *Adhy name* $Ś_1$ $K_{3\,4}$ $Dn_1$ $D_1$ भीमसेनप्रवेश, $Ś_2$ $K_{1\,2}$ $B_4$ $D_3$ भीमप्रवेश°, $K_5$ भीमसेनप्रवेशे पुन कर्णपराजय, $B_{1\,3,5}$ $Dc_1$ भीमप्रवेशे कर्णपराजय, $B_2$ $D_{4\,7\,8}$ भीमसेनप्रवेशे कर्णपराजय°, $Dn_1$ धृतराष्ट्रसप्तपुत्रवध, $D_2$ भीमप्रवेशे कुमारवध, $D_5$ सप्तकुमारवध, $D_6$ भीमसेनप्रवेशे भीमसेनयुद्धमागत्य — *Adhy no* (figures, words or both) $B_1$ T $G_{2-4}$ 133, $B_2$ 134, $B_5$ 142, $Dn_1$ 136, $D_2$ 139, $G_1$ M 132, $G_5$ 130 (?)

## 112

1 $Dc_1$ om 1[abc] with preceding ref. — [b]) $G_{2-5}$ ज्ञात्वा (for श्रुत्वा) $Ś_1$ $K_{1-3\,5}$ $D_{1\,4\,7\,8}$ $G_3$ -नि स्वन — [c]) $G_1$ $M_{1\,2}$ तथा (for यथा) — [d]) K $D_5$ गज प्रतिगजं यथा

2 [a]) $Ś_1$ $K_{1-3}$ $D_1$ $G_1$ M च (for स) B $Dc_1$ सोपक्रम्य मुहूर्तं तु — [b]) $D_1$ मुहूर्त (for °र्तं) $Ś_1$ $K_2$ **रान्, $K_1$ -शक्तिमान्; $K_4$ $D_1$ -ताडितान् (for -गोचरात्) $Ś_2$ मुहूर्तं श*शोत्करान्, B $Dc_1$ भीमसेनस्य ($B_{1,3}$ $Dc_1$ °स्य रथ) गोचरात्, $Dn_2$ मुहूर्तंशरणेचरात् (sic) — $G_5$ lacuna for 2[c] — [c]) $D_2$ चाधिरथ, $D_3$ °रथिं, T $G_{2-4}$ चाविरथिर् (for चाधि°) $G_1$ M दृष्ट्वा चाधिरथि पुत्रान् — [d]) $Ś_2$ $K_1$ $D_1$ च तान् (for -द्युतान्) $K_1$ $D_5$ शरान्; $G_1$ M तव (for सुतान्) — For 2[cd], B $Dc_1$ $D_2$ subst.

तव चाधिरथिर्दृष्ट्वा स्यन्दनेभ्यश्च्युतान्सुतान् ॥ २
भीमसेनेन निहतान्विमना दुःखितोऽभवत् ।
निःश्वसन्दीर्घमुष्णं च पुनः पाण्डवमभ्ययात् ॥ ३
स ताम्रनयनः क्रोधाच्छ्वसन्निव महोरगः ।
बभौ कर्णः शरानस्यन्रश्मिवानिव भास्करः ॥ ४
रश्मिजालैरिवार्कस्य विततैर्भरतर्षभ ।
कर्णचापच्युतैर्बाणैः प्राच्छाद्यत वृकोदरः ॥ ५
कर्णचापच्युताश्चित्राः शरा बर्हिणवाससः ।
विविशुः सर्वतः पार्थं वासायेवाण्डजा द्रुमम् ॥ ६
कर्णचापच्युता बाणाः संपतन्तस्ततस्ततः ।
रुक्मपुङ्खा व्यराजन्त हंसाः श्रेणीकृता इव ॥ ७
चापध्वजोपस्करेभ्यश्छत्रादीषामुखाद्युगात् ।
प्रभवन्तो व्यदृश्यन्त राजन्नाधिरथेः शराः ॥ ८
खं पूरयन्महावेगान्खगमान्खगवाससः ।
सुवर्णविकृतांश्चित्रान्मुमोचाधिरथिः शरान् ॥ ९
तमन्तकमिवायस्तमापतन्तं वृकोदरः ।
त्यक्त्वा प्राणानभिक्रुध्य विव्याध नवभिः शरैः ॥ १०
तस्य वेगमसंसह्यं दृष्ट्वा कर्णस्य पाण्डवः ।
महतश्च शरौघांस्तान्नैवाव्यथत वीर्यवान् ॥ ११
ततो विधम्याधिरथेः शरजालानि पाण्डवः । B 7 | C 7 | K 7 |

877* पुत्रांस्तव ददर्शाथ भीमसेनेन पातितान् ।

3 a) B Do1 D3 तानवेक्ष्य (B1 तांस्तु दृष्ट्वा, B6 D3 तांश्च दृष्ट्वा) नरश्रेष्ठ (D2 महाराज) — b) B Do1 सदा, D2 वृष (for ऽभवत्) G1 M संग्रामे नातिहृष्टवत् — c) K4 5 B Dn1 D2 5 6 G2 5 निश्वसन् — d) D3 S कर्णं (for पुन) D5 अभ्यगात् (for °यात्)

4 a) D5 आताम्र (for स ताम्र) K5 कोपात् (for क्रोधात्) — c) K4 om नस्य — d) T2 damaged. B1, 2 T1 G1 3-5 M रश्मिमान् B3-5 Do1 रश्मीनिव दिवाकर

5 a) B3-5 Do1 किरणैरिव सूर्यस्य — D2 om 5cd, D4 reads the same twice — c) G1 M भीम (for कर्ण) — d) Ś1 K1-3 D4 (first time) 5 6 G2 3. 5 प्रच्छाद्यत, D4 (second time) प्राभाद्यत (sic), G1 M प्रा(M1 2 प्र)च्छादयत (for प्राच्छाद्यत)

6 a) Ś2 B2-5 Do1 ते कर्णचापप्रभवा — b) Dn1 D4 8 बर्हण — c) K5 Dn1 D2 4 7 8 शतशा (for सर्वत) — d) D5 वासार्थं च (for वासायेव) G5 M1 2 [पु]व (for [द्रु]व) D2 4 7 8 वासार्थं पांडवद्रुम

7 a) Ś1 om बाणा — b) D3 कंकबर्हिणवासस — c) D2 व्यरोचत; G1 M प्रकाशंत (M3 5 °ते) (for व्यराजन्त) — d) D5 G2 श्रेणीगता (for °कृता)

8 Ś K1-4 D1 om 8ab — a) S चापध्वजाद(G1 M1 2 च्युताप)स्करेभ्यश्च — b) D7 om. from स्वाद्युगात् up to सुवर्णवि (in 9c) B1, 2 4 ईशामुखाद् D3 छत्रादिभ्य समुत्थित, D5 6 छत्रादीषामुखाद्य(D6 °खाद्य)जात्, D4 °दीषासमुद्युगात्; S चक्रादीषाद्युगादपि(G5 °दिव) — c) K5 निपततो, D2 प्रपतंतो (for प्रभवन्तो) K5 व्यराजत, T [s]प्यदृश्यत, G1 M स दृश्यते (for व्यदृश्यन्त) — d) T G2-4 नातिरथे, G5 अति (for नाधि°)

9 D7 om up to सुवर्णवि (of v l 8) — a) Ś1 K4 D2 8 वेगात्, Ś2 K1 3 Dn2 D1 3 5 6 वेगा, K2 वेग (for वेगान्) S खं पूरयंत खचरा (G1 M खगमा) — b) Ś2 K1 3 4 Dn2 D3 5 6 T G2-5 खगमा, Dn1 खगस्थान्, G1 M खेचरा (for खगमान्) B1 (marg, orig as in text) Do1 गार्ध्र, B2-5 गृध्र (for खग) — c) K4 विकृताश्च S सुवर्णविकृताश्चित्राश्च — d) S चेरुराति(G5 °धि)रथे° शरा

10 a) Ś1 K1 2 4 B Do1 T G2-5 इवायांतम्, Ś2 इवाज्ञातम्, D2 M3 4 इवायत्तम् (for यस्तम्) — b) B5 T2 G1 5 M वृकोदर — c) K1 बाणान् (for प्रा°) Ś2 अभिक्रुद्ध, B Do1 Dn1 D5 S अतिक्रम्य, D3 अभिक्रुद्धो, D4 अभिक्रुश्य, D6 अतिक्रुद्धो, D7 8 आभिक्रुध्य (for °क्रुध्य) K4 त्यक्त्वासनानिभिक्रुद्ध (sic) — d) Dn2 om (hapl) from नवभि° up to नैवाव्य (in 11d) K5 B Do1 Dn1 D3 4 5 7 8 T G2-5 निशितै, G1 M दशाभि° (for नवभि)

11 Dn2 om up to नैवाव्य (of v l 10) — a) T2 damaged K5 अथासह्यं; B Do1 Dn1 D3 5 6 T1 G2-5 असह्यं च (B Do1 D5 स, T1 G2-5 तु), G1 M असंचार्यं (for असंसह्यं) — Ś K1-4 D1, 5 om. (hapl) 11c-12b — c) S अविचिंत्य (for महतश्च) — d) B1 4 पांडव (for वीर्यवान्)

